# सँस्कृतरवीन्द्रम्

**Sanskrit translations of select writings of Tagore**




साहित्य अकादेमी, नवदेहली

# संस्कृत-रवीन्द्रम्

संपादकः
डा. वे. राघवः




साहित्य अकादेमी, नवदेहली

# RASHTRAPATI'S MESSAGE

Rashtrapati Bhavan
New Delhi-4

May 25, 1966

I am glad to know that Dr. Raghavan has edited a volume of selections from Tagore, translated into Sanskrit by himself and different other writers. The Tamil 'Tirukkural' was rendered into Sanskrit by a member of the family of Appayya Dikshita. Raghavan and his collaborators are now doing similar work, which is worthy of praise. The writings selected here, I hope, will bring out Tagore's view of religion and his universality of outlook. Tagore maintains that the inner unity of our country could be preserved only if outer changes are brought about. He was oppressed by the denial of social virtue and civic sanity. Religion should break down barriers instead of building walls which divide one from another. Tagore's writings are still an inspiration to all those who fight against the superstitions and the follies of the herd mind and wish to inaugurate a new era of human co-operation. I have no doubt that these translations will gain wider understanding of India's genius and have a large circle of Sanskrit readers.

S. Radhakrishnan

# आमुखम्

आधुनिकभारतमहाकवेर्विश्वव्याप्तयशःप्रकाशस्य रवीन्द्रनाथस्य जन्मशताब्दीमहोत्सवः १९६१-तमे वर्षे सर्वत्र भारते, तथा देशान्तरेष्वपि महता संरम्भेण प्राचलत्। कवेरस्य वङ्गभाषामय्यः कृतयो देवनागरीलिप्यां मुद्राप्य प्रकाशिताः; तं, तस्य कृतीः, तत्र प्रतिपादितानि तत्त्वानि, तेन साहित्यलोकाय लोकाय च कृतमुपकारं चाधिकृत्य विद्वद्गोष्ठ्यो व्याख्यानानि अभिनन्दनपुस्तकप्रकाशनानि च प्रावर्त्यन्त; तत्र तत्र भाषान्तरेष्वनूदितानि तत्कृतानि रूपकाणि च रङ्गे प्रायुज्यन्त।

यद् एवं बहुमुखं रवीन्द्रस्मारकं कार्यजातं सभासु, पत्रिकासु, आकाशवाण्यां, कलागोष्ठीषु च प्रवृत्तं तत्र केन्द्रीय-साहित्य-अकादमी-परिषदः विशिष्य नेतृतया भागित्वमभूत्। साहित्य-अकादमी-कार्यपरिपाट्यन्तर्भूतासु सर्वासु भाषासु रवीन्द्रविषयकं यत् किमपि कार्यमकृत। संस्कृतशाखयापि रवीन्द्रसेवा कापि निर्वर्तयितव्येति मनीषा मे प्रादुरभूत्। रवीन्द्रस्य प्रतिभया कवितया च वशीकृताः न केवलमाधुनिका विद्यावन्त एव, परन्तु सांप्रदायिकाः पण्डिता अपि। वङ्गप्रदेशे तथा भारतेऽन्यत्र च संस्कृतज्ञा बहवः यस्यां भाषायां प्रथमं पदं निधाय कवितावसन्तलक्ष्मीरवततार, यदीयाः वाल्मीकि-कालिदास-जयदेवाः कवयः रवीन्द्रशेमुषीप्रेरकाश्चासन्, तस्यां संस्कृतवाण्यां रवीन्द्रसाहित्यसौन्दर्यं प्रदर्शयितुमुपाक्रामन्। रवीन्द्ररचनानां संस्कृतानुवादाः तत्र तत्र पत्रिकासु, विशिष्य कलकत्तातः प्रकाश्यमानासु मञ्जूषा-संस्कृतसाहित्य-परिषत्पत्रिकाद्यासु पूर्वमेव अनुस्यूततया प्रकाशिता आसन्। शताब्दीसमये च बहुभिः संस्कृतविद्वद्भिः बह्व्यो रवीन्द्रकृतयो नूतनतया संस्कृते अनूदिताः। तदीयरूपकाण्यपि अनेकानि संस्कृतरूपेण आकाशवाण्यां, साक्षाद्रङ्गेषु च प्रदत्तानि। मयापि वाल्मीकिप्रतिभा संस्कृतेऽनूदिता आकाशवाण्यां

मद्रकेन्द्रतः, तथैव नटीपूजा च मद्रमण्डलरवीन्द्रशताब्दीमहोत्सवसमित्याः संघटनामनुरुध्य रङ्गे च प्रयुक्ते ।

सर्वमिदं विततं प्रकाशितमप्रकाशितं च रवीन्द्रसंस्कृतानुवादजातमालोक्य प्रादुरभून्मे मनसि कामनैषा किमेतान् रवीन्द्रसंस्कृतानुवादान् संकलय्य, तत उद्धृत्य कांश्चनानुवादान् संस्कृतमयीमञ्जलिमञ्जरीं नार्पयाणि शताब्दीमहस्मारकतया कवीन्द्राय रवीन्द्रायेति । उद्देशश्चायं साहित्य-अकादमी-कार्यदर्शिना श्रीकृष्णकृपालानि-महाशयेन राष्ट्रपतिभिः डा. श्रीराधाकृष्ण-महोदयैः, अकादमी-परिषदध्यक्षैः श्रीजवाहरलाल्-नेहरू-महानुभावैरन्यैरपि निर्वाहकसमित्यङ्गभूतैः अभ्युपेत्य अनुमोदितः ।

इत्थं च प्रोत्साहितेन मया सुहृद्द्वारा पूर्वं प्रकाशितानां रवीन्द्र-संस्कृतानुवादानां तथा शताब्द्यवसरे नूतनतया रचितानामनुवादानां च वृत्तान्त-संग्रहः प्रथमं कृतः । सूची चानुवादानामेतेषां संपादिता । ततस्तेभ्यः प्रकाशितचराः केचन, केचन चाप्रकाशिता उद्धृताः । तत्र पद्य-गद्यप्रबन्ध-कथा-रूपक-रूपेषु विभागेषु कमपि विभागमपरित्यज्य संग्रहः कृतः । गीता-ञ्जलिरेकः सुप्रसिद्धो बहुभिरनूदितः । तत्र केचनानुवादाः वङ्गगीताञ्जलिं, केचन च आङ्ग्लगीताञ्जलिं चानुसृत्य रचिताः । वङ्गेभ्यो बहिः प्राय आङ्ग्लानुवादानां पठनादेव रवीन्द्ररसिकं जगज्जातम्, आङ्ग्लानुवादमूलकमेव रवीन्द्रेण नोबल् - पारितोषिकमपि लब्धम् । अतोऽत्र पञ्चषा आङ्ग्लमयेभ्यश्च रवीन्द्रलेखेभ्य उपात्ताः । निखिलभारतव्याप्तां रवीन्द्रभक्तिं निदर्शयितुमवङ्गीया-नामपि लेखकानामनुवादा अत्र योजिताः । कुत्रचित् लेखकस्यावङ्गीयत्वेऽपि अनुवादः वङ्गभाषामूलत एव संपन्नः, न तु आङ्ग्लानुवादतः, यथा मे रूपक-द्वयानुवादः । वङ्गभाषाविदां साह्येन मूलं साक्षान्निपुणं पठित्वैव मयाकारि अनुवादद्वयमिदम् । रवीन्द्रशैली संस्कृतशब्दबहुला, अतश्च कार्यमिदं सुकरमासीत् । मदनुवादे च यावच्छक्यं संस्कृतमयो मूलशब्दो यथास्थित उपयुक्तः ।

यश्च संस्कृतसाहित्येन सह रवीन्द्रसाहित्यस्य अनुस्यूतः सम्बन्धः, स सोदाहरणं विशदीकृतो मया अनुवादानामन्ते प्रकाशिते लेखे ।

अन्ते चाद्यावधि रवीन्द्रसाहित्ये किं किं संस्कृतेऽनूदितं, कुत्र कदा तत् प्रकाशितमिति विषयमिमं निवेदयन्ती रवीन्द्रसंस्कृतानुवादानां सूची च काचित्सुहृदां सहयोगेन सन्दब्धा प्रदत्ता ।

भारतराष्ट्रस्य साहित्य-अकादमीपरिषदश्च येऽद्य पतयो विराजन्ते, तैः शुभसन्देशेनानुगृहीतोऽयं मे समुद्यम इति तेभ्यः कृतज्ञतां निवेदयामि ।

एतैः प्रान्तीयभाषासाहित्यानुवादैः संस्कृतप्रतिभाया नूतनः कोऽपि परिपोषो भवतीति दृढया मत्यैव प्रतिसञ्चिकं प्रतिभाया अन्तिमो भागः एतादृशानुवादप्रकाशनार्थं निर्दिष्टो वर्तते । आदित एव ऊरीकृतस्याभिप्रायस्यास्य उपबृंहकतयैव संपन्नमिदं संस्कृतप्रतिभायाः विशेषाङ्कतया प्रकाशितं 'संस्कृत-रवीद्रम्' नाम संकलनं मन्ये रवीन्द्ररसिकानां संस्कृतसाहित्यनवनवोन्मेष-कुतुकिनां च प्रमोदाय स्यादिति । मन्ये च साहित्य-अकादमी-परिषदा च रवीन्द्राय यः शताब्द्युत्सवे समर्पितः पुष्पाञ्जलिः सः अनेन संस्कृतोपहारेण पूर्तिं चित्रतां परिमलप्रकर्षं च समासादयेदिति ।

वे. राघवः

# विषयानुक्रमणी

कथाः, गद्य-प्रबन्धाः

## रूपकाणि



## समीक्षालेखः

## कथाः, गद्य-प्रबन्धाः

## रूपकाणि



## समीक्षालेखः

# पुरस्कारः

अनुवादक : — श्रीकालीपदतर्काचार्यः

अवददेकदा वृष्टिनिर्झरे
    क्षरति धारया कामिनी कवेः ।
समचिनोरलं वर्णमैत्रकं
    प्रकुरुषे बृहद्ग्रन्थमालिकाम् ॥ १ ॥

निपतनोन्मुखं मस्तकोपरि
    स्वगृहमित्यदः किन्नु वीक्षसे ।
लघुगुरुक्रमाच्छन्दसां चयं
    घटयसे परं तुच्छरूपकम् ॥ २ ॥

किमु ततो मिलेत् कुञ्जराश्वकं
    न तु मिलत्यहो सस्यमल्पकम् ।
मिलति नान्नकं वाक् तु भूयसी
    किमिदमन्वहं बालखेलनम् ॥ ३ ॥

त्यज सरस्वतीं त्वं हि साम्प्रतं
    भज पयोधिजापादपङ्कजम् ।
द्रवय पुस्तकं लेखनीं तथा
    घटय सत्वरं यद्धि युज्यते ॥ ४ ॥

सुबहु शिक्षितं नेति शिक्षितं
कथमुपैति भो वित्तमल्पकम् ।
समवलोक्य तां भीममूर्त्तिकां
कविमनोऽभवत् त्रासचञ्चलम् ॥ ५ ॥

विरचितस्मितः कौतुकच्छला-
दथ कृताञ्जलिर्व्याहरत् कविः ।
नहि बिभेम्यदोवक्त्रचालनात्
सकरुणा रमा श्रीविवर्जिते ।
वसति मन्दिरे सा न कोषके
क इह कर्णयेद् वर्णनामिमाम् ॥ ६ ॥

मम विपर्ययो भाग्यजे फले
मयि किलाचला चञ्चला रमा ।
पलमपि स्थिरा नास्ति भारती
विपुलसेवयाप्याकुले मयि ॥ ७ ॥

इति कपाटके योजितार्गलं
त्रिदिवमर्त्ययोर्वर्णमैत्रकम् ।
सुविचिनोमि चेदन्यहृत् क्षणं
भवति तावदेवातिविप्लवः ॥ ८ ॥

मनसि सस्मिता स्तम्भितानना
कविवधूर्जगौ 'नह्यतः परम् ।
सुषह, मर्दितं सर्वगृह्यकं,
हसितकौतुकं सर्ववस्तुषु ॥ ९ ॥

इयदुदीर्य सा वक्रितानना
विदधती क्वणत् कङ्कणद्वयम् ।

निजपटान्तमाकृष्य निर्गता
चलकरेण वै क्रोधकैतवात् ॥ १० ॥

भुवनगर्वजैत्राभिमानजं
समभिलक्ष्य तच्चञ्चलायनम् ।
अकथयत् कविर्विघ्नमानसो
विदलितान्तरा याहि सा तथा ॥ ११ ॥

यदि न निघ्नता धारये पदे
किमु विधेयमाख्याहि तद्गतिम् ।
भवनपूरणं स्वर्णरौप्यकै-
र्घटयितास्म्यहं धीस्त्वयार्प्यताम् ॥ १२ ॥

स्फुरति यत्र मे यत् किलान्तरं
तव हि मूर्तिकां तत्र रोपये ।
न हि धियः कृषिः क्वापि राजते
मरुसमानता सर्वतो हि मे ॥ १३ ॥

इयदशोभनं तद् विरम्यतां
सहसिता रुषा प्राह गेहिनी ।
विनयसम्मिता प्रीतिरायता
मम समुद्गता भाग्यगौरवात् ।
नहि कदाप्यभूद् वागभावभाक्
प्रकथितं यदेवासमुत्तरम् ॥ १४ ॥

सकृदये कथाधीश ! यादृशं
मम वचस्तथा साधय क्रियाम् ।
शुभमहः क्षणं पश्य पाञ्जिकं
सहचरीकुरु ग्रन्थमालिकाम् ।

क्षणकमात्रमालस्यवर्जितः
क्षितिपतेः सभाभ्यन्तरं व्रज ॥ १५ ॥

सगुणपालको भूपतिर्हि नो
बहुजना गताः प्रोन्नतिं ततः ।
भवनकोष्ठके सञ्चिता त्वया
किमु फलं वहेत् पद्यमालिका ॥ १६ ॥

अशनिरस्खलन्मस्तके कवेः
स समचिन्तयद् व्यापदद्य मे ।
नृपमहानृपाः संस्तुता न मे
न खलु वेद्म्यहं भाग्यतोऽद्य किम् ॥ १७ ॥

स्मितमुखोऽवदत् - केवलं न्विदम्
मम मतिस्त्वभूद् दुष्करान्यगा ।
लघुरसुव्ययो भाति मे परं
त्वमधवा भवेरित्यहो भयम् ॥ १८ ॥

अलमपेक्षया गम्यमेव चेद्
उपनयाशु तत् सत्परिच्छदम् ।
मणिकिरीटकं हेमकुण्डलं
कनकहारकेयूरमुत्तमम् ॥ १९ ॥

कथय सूतमाहूय मामकं
विचयनाद् वृणोतूत्तमान् हयान् ।
सह गमिष्यते कैश्च किङ्करै-
रयि! विधीयतां तत्प्रबन्धनम् ॥ २० ॥

अभिदधे वधूर्यन्मुखाग्रतः
किमपि बाध्यते नो स याचते ।
किमिव वापरं वाचिके रये
नहि रथाश्वकं वेद्म्यपेक्षितम् ॥ २१ ॥

बहु परिच्छदं हीरकं तथा
रजतकाञ्चने तावदानयम् ।
विनययाञ्चया पल्लिकाजुषां
भव सुसज्जितो वासना यथा ॥ २२ ॥

विरतिराप्यतां ते रसज्ञये-
त्युदितवत्यसौ सत्वराङ्घ्रिका ।
विविधरूपनेपथ्यमानयत्
कविरथो मनस्येवमाददे ।
मुखविवर्णतां सम्प्रसारयन्
गतिरिहाद्धि हा दुर्गता परम् ॥ २३ ॥

स्वयमथान्तिके गेहिनी स्थिता
मलमपाकरोन्मार्जनादिभिः ।
मुकटिबन्धनं स्वेन पाणिना
तमतियत्नतः पर्यधापयत् ॥ २४ ॥

व्यधित कण्ठगं कण्ठभूषणं
भुजयुगेऽङ्गदे कुण्डले श्रुतौ ।
वपुषि रत्नकं रोप्यतेऽमितं
तदपि चित्रवन्निश्चलः कविः ।
प्रणयिनी स्वहस्तायतादरो
वृतपराभवः सोऽप्यभूत्तदा ॥ २५ ॥

प्रहरकद्वयेनोक्तया दिशा
परिसमाप्य सा सर्वमण्डनम् ।
ललितकन्धरां वक्रयन्त्यहो !
अपसृता कियद्दूर ऐक्षत ॥ २६ ॥

कविवधूः कवेः स्तब्धमाननं
समभिवीक्ष्य हृल्लब्धकौतुका ।
चिबुकधारिणी सस्मितोत्थिताऽ-
वददहो कथं सज्जितो भवान् ॥ २७ ॥

वदनसम्मुखे दर्पणं न्यधा-
दमृतसम्मितां वाचमाददे ।
हृदयमर्दयन् पौरयोषितां
प्रतिनिवृत्तिमद्याचरिष्यसि ॥ २८ ॥

न परिचारिकां विस्मरेस्तदा
दुरभिमानतः, संस्मरेरिमाम् ।
उपकृतिश्च, मामेतया दिशा
मणिविभूषणैर्भूषयेर्ध्रुवम् ॥ २९ ॥

अथ तदङ्कमध्यास्य, बाहुना
सरसहासमाश्लिष्य तं कविम् ।
उपकपोलकं न्यस्तगण्डका
कथयति स्म सा तच्छ्रुतौ रहः ॥ ३० ॥

कविवराधरे तत् क्षणं द्रुतं
हसितमाममौ नो कथञ्चन ।
द्रुतमिवादरान्मुग्धमन्तरं
बहिरवातरत् स्फोरणोदयात् ॥ ३१ ॥

अवददुल्लसन् सर्वमुत्क्षिपन्
अभिवदेयमेवं सुपद्यकम् ।
नृपतिकोषमाकृष्य यद्बलाद्
वितरितास्मि ते रक्तपादयोः ॥ ३२ ॥

वदत इत्यगात् स्फीततामुरो
मुकुटजुष्टमुत्थाप्य मस्तकम् ।
पथि ययौ कृतद्वारमोचनो
नृपगृहं प्रति प्राचलद् द्रुतम् ॥ ३३ ॥

उपगवाक्षकं सत्वरं गता
कविवधूस्तदा कौतुकाप्लुता ।
मनसि साहसद् व्याजदर्शिनी
नयनकेऽसिते दीप्तिरस्फुरत् ॥ ३४ ॥

हृदि जजल्प सा भूरि हर्षतः
पुरमहापथे यान्ति कत्यहो ।
नहि तथा परो दृष्टिगोचरो
मम यथा ह्ययं वर्तते परः ॥ ३५ ॥

इह कवेः क्रमेणोद्यमोऽल्पतां
प्रतिपलं प्रयातुं प्रचक्रमे ।
वसुमतीपतेरालयं विशन्
निरणयन्मृतिं भूरिशान्तिदाम् ॥ ३६ ॥

नृपसदःसदः सैन्ययामिका
न खलु गेहिनीसाम्यमाश्रिताः ।
विदधते मनः पङ्क्तिशः स्थिता
विकलमत्र किं योग्य आगमः ॥ ३७ ॥

नृपसदस्तथा नैव यत्र वै
प्रणयि सस्मितं किञ्चिदुच्यते ।
सचिवकावधि द्वारि पश्चिमा
निखिलमानवाः स्तम्भिताननाः ॥ ३८ ॥

समवलम्बते हा यमाकृतिम्
किमिति मानुषो मानुषं प्रति ।
कविरिदं स्मरन्नेति नोद्यमं
हृदयमस्पृशत् साहसात्ययम् ॥ ३९ ॥

अतिसमुन्नताद्यग्रशृङ्गव-
न्नृपमहेन्द्ररायः श्रितासनः ।
मनुजमण्डली तं विना क्रमं
स्थितमचञ्चलं पर्यवैक्षत ॥ ४० ॥

जनपदान् बहून् प्रापयन्त्यहो
सरसतां कृपा भूपतेः स्नुता ।
कविरलोकयत् तद् धरापते-
रमितगौरवं तृप्तलोचनम् ॥ ४१ ॥

अवसितिं विचारे समाश्रिते
सचिवशासनादिङ्गितं गतः ।
उपगतः स्थितः प्रस्तुताञ्जलि-
र्जनपदस्य सर्वोत्तमश्वरः ॥ ४२ ॥

प्रकृतिराकृतिः श्रेष्ठसाधुवद्
विकृतिराननॆ नाणुमात्रिका ।
नरमृगव्ययमेवास्य वर्तनं
न खलु कश्चनावैति तन्नरः ॥ ४३ ॥

विविधमाचरत्यन्वहं व्रतं
क्षतकपर्दकश्चार्धमस्पृशन् ।
सुकृतदेशनां वर्त्तयत्यसौ
प्रतिगृहं नृणां निर्विशेषतः ॥ ४४ ॥

अविदिताहितं तस्करोचितं
स्फुरति नेत्रयोर्वक्रवीक्षितम् ।
भवति कस्य किं कः क किंक्रियो
निखिलमीक्षते वीतशेषकम् ॥ ४५ ॥

वपुषि धारयन्नाम कर्पटं
नृपमुपागतो वैष्णवाकृतिः ।
कृतनतिर्यदोपांशु तत्क्षणे
किमपि मन्त्रिणा ज्ञापितो नृपः ॥ ४६ ॥

प्रभुरथादिशल्लघु स मन्त्रिणं
दशशतीरितः पञ्च देहि भोः ।
रजतमुद्रिकाणां, सभाखिला
वचनमातनोत् साधु साध्विति ॥ ४७ ॥

पुलकितं वपुः सर्वदेहिना-
मिदमिति क्षमं दानमर्हते ।
स्थविरबालकस्त्रीषु नीवृतो
न भविताऽप्रियं कस्यचित्त्विदम् ॥ ४८ ॥

विनयभारतः साधुरानतो
ब्रहद्वादिनो वीक्ष्य सादसाः ।
स्मितमथास्फुरत् केवलं मितं
तदभिपश्यतो मन्त्रिणोऽधरे ॥ ४९ ॥

अथ शनैः शनैरपि शाब्दिको
बहुलधूलिभिर्लिप्तपादकः ।
विदधदङ्कितं पादपांशुभि-
र्नृपसदःपटं पूतरूपकैः ॥ ५० ॥

अधिललाटकं स्वेदबिन्दवो
वलिकुलाकुलं चर्म च श्लथम् ।
अतिखराकृतिः क्रोधसूचनी
प्रतिभयप्रदा छात्रसंसदः ॥ ५१ ॥

अनुपलक्षयन् किञ्चनापरं
सुविवृतास्यकं पद्यमापठत् ।
द्विदलभेदतः कङ्करान्विता-
द्रवमिवोद्गिरन् दन्तचर्वितात् ॥ ५२ ॥

न हि विवेद कोऽप्यग्रपश्चिमं
नमितमस्तकास्ताखिला सभा ।
नृपतिराह काप्यस्य दक्षिणा
ननु वितीर्यतां दक्षिणे करे ॥ ५३ ॥

अथ समागमज् ज्यौतिषो बुधो
गणनया नृपस्तस्य विस्मितः ।
रजतमुद्रिकाझञ्झनारवं
दिशि किरन्नसौ संसदं जहौ ॥ ५४ ॥

स्थविर आगतः कोऽपि मानभाक्
करपुटे युतो धान्यदूर्वया ।
तमभि पार्थिवोऽधाद् वदान्यतां
व्यधित पूरितां तस्य गोणिकाम् ॥ ५५ ॥

नृपपुरोहितो भट्ट-नर्त्तकौ
प्रविविशुः क्रमाद् भूपतेः सभाम् ।
सहचरोज्झितः कोऽपि तेष्वभू-
दपि च कोऽप्यभूच्छिष्यसंयुतः ॥ ५६ ॥

शिरसि कस्यचिल्लोहितप्रभं
प्रविदधे शिरस्त्राणकं रुचम् ।
शिरसि कस्यचित्तत्र वा स्थितं
हरितशोभया तत् समन्वितम् ॥ ५७ ॥

बहुमता द्विजाः केचिदागता
दुहितृभारनिस्तारकाम्यया ।
उपगताः पितृश्राद्धहेतवे
द्रविणलब्धये केचनापरे ॥ ५८ ॥

यदभिलाषिणो ये समागता-
स्तदनुरूपकं राजकल्पितम् ।
समनुलेभिरे ते धनं हि तत्
नृप इतोऽद्य वै दातृकर्णताम् ॥ ५९ ॥

गृहमिताः समस्ता यथास्वकं
कविरभावयत् किं विधास्यते ।
समितिकोणगोऽदर्शि भूभृता
कविरसौ विपन्नाननच्छविः ॥ ६० ॥

अवनिपोऽवदत् को न्वमुत्र भो
उपविशन् स्थितो मन्त्रिसत्तम ।
सह मया समायातु तद्भवान्
परिचयं चिनोम्यस्य सर्वतः ॥ ६१ ॥

कविरथावदत् स्पष्टवाङ्मयं
न खलु कोऽप्यहं भो विशेषभाक् ।
वसुमतीपते ! दीन एककः
कविकृतौ रतो ह्यसि केवलम् ॥ ६२ ॥

नृपतिराह किं न्वेवमेहि भोः
प्रजनिताद्य तत् काव्यशीलनम् ।
प्रचितगौरवं तं न्यषादयत्
करयुगं दधत् पाणिनान्तिके ॥ ६३ ॥

सचिवकोऽमृशद् यामि साम्प्रतं
ह्यथ भवेद् वृतं बालखेलनम् ।
अकथयन्महाराज ! चास्ति मे
बहुविधिः प्रयाम्यादिशेद् यदि ॥ ६४ ॥

करमधूनयत् केवलं नृपो
मृदु, तदिङ्गितात् सम्भ्रमाकुलाः ।
अथ बहिर्गताः सादसाः समे
वसुमतीपतेः पक्षपातिनः ॥ ६५ ॥

प्रतिगता जलोच्छ्वासनीरवत्
सचिवबान्धवामात्यकादयः ।
नयपदार्थिनः प्रार्थिनस्तथा
सपदि वादिनस्तद्विवादिनः ।
लघुगुरुत्वतो भेदसिद्धिकृद्-
विविधरूपकोपाधिधारिणः ॥ ६६ ॥

प्रतिगतेष्वथो सभ्यसन्नृषु
ह्यभिमुखं स्थितौ तौ परस्परम् ।

वसुमतीपतिः प्राह हे कवे
प्रकुरु साम्प्रतं काव्यकूजनम् ।
कविरथाञ्जलिं वक्षसि व्यधात्
नतमुखं वन्दे सरस्वतीम् ॥ ६७ ॥

जननि ! भाहि मे नेत्रसम्मुखे
श्रितवती प्रसन्नाननच्छविम् ।
विमलमानसावासवासिनि !
सितपटावृते शुभ्रहासिनि !
मधुरवल्लकीमञ्जुभाषिणि !
ललितपङ्कजारण्यचारिणि ॥ ६८ ॥

मनसि वासयंस्त्वामहं चिरं
भवनकोणगो मानवर्जितः ।
धनविवर्जितः क्षीबवत् स्थितः
सुखमुदासितश्चान्यमानसः ॥ ६९ ॥

गणनया विभज्याखिला जगत्
समधिकुर्वते स्वं स्वमंशकम् ।
इह समन्ततः, स्नेहवाङ्मयं
तव विदन्नहं स्वःसुधामगाम् ॥ ७० ॥

कुशलमेतदेवास्ति मे परं
बहुमतं विभात्येतदेव मे ।
भवति तावताप्यन्तरान्तरा
हृदयमाकुलं रोदनोन्मुखम् ॥ ७१ ॥

विदितमेव ते वाणि ! मातृके !
न हि सुपर्वणां भोग्यवस्तुना ।

अमृतरूपिणाप्यानिवर्त्तते
क्षितिसदां नृणां दुर्दमा क्षुधा ॥ ७२ ॥

भवतु भावि यद् भावये न त-
ज्जननि ! वाद्यतां वल्लकी सकृत् ।
प्रतनु रागिणीं विश्वचारिणी-
ममृतनिर्झरोत्सस्वरूपिणीम् ॥ ७३ ॥

अभिनिशम्य यां दिव्यरागिणीं
निशि तथा दिवा श्रीमदीश्वरः ।
विपुलहर्षतोऽत्र द्रवीभवन्
वहति नित्यशो मर्त्यकेऽवशः ॥ ७४ ॥

नभसि नो मिता या हि रागिणी
भुवनतन्त्रिकालब्धसम्भवा ।
मखशिखासमा कम्पिता सदा
विशति साग्रहाऽऽद्यन्तवर्जिते ॥ ७५ ॥

अतिचिरं हि या व्याप्य रागिणी
हृदयकन्दरे रौति निर्भरम् ।
हसितरोदनापूर्णजीवना
द्रवति चामितैः स्रोतसां चयैः ॥ ७६ ॥

भवति कः क्व वा यात्यथैति को
विकसति क्षणेनाथ लुप्यते ।
समयवारिधेः सैकतोपरि
प्रचलितातपच्छाययोः क्रिया ॥ ७७ ॥

नृपमहानृपा ह्यस्तना यति
जगति संस्थिताः काद्य तेऽखिलाः ।

सुखमथासुखं लज्जितं प्रगे
स्फुरति लीयते सायमेव च ।। ७८ ।।

ध्वनति केवलं वै तदन्तरे
मधुरमांसलो विस्तृतः स्वरः ।
सुचिरमम्बरं तत्स्वराम्बुधौ
निरवशेषकं मग्नमस्त्यहो ।। ७९ ।।

स हि चिरन्तनो येन संश्रुतः
स समचालयन्मानसं तरीम् ।
स्वकमथो धरां नैव वेत्त्यसौ
भवसमुद्भवं नाप्युपप्लवम् ।। ८० ।।

स विकलान्तरः क्षीबतां गतो
भवतटाश्रयाच्छिन्नशृङ्खलः ।
कथमुपाजगामाखिलं जहत्
तव पदे दधौ चापि लम्रताम् ।। ८१ ।।

तव किलामलाम्भोजसौरभं
परमुदं हृदि स्रावयत्यहो ।
श्रुतिमुपाश्नुतेऽपूर्वगीतिका
नवमलौकिकं वृत्तमन्वहम् ।। ८२ ।।

ध्वनतु वल्लकी सा, वसुन्धरा
व्रजतु मुग्धताम्, अम्ब ! हे सकृत् ।
लघुमहद्भिदां भिन्धि चेतसो
धनिदरिद्रयोरन्तरं तथा ।। ८३ ।।

भवति कोऽग्रिमः कश्च पश्चिमो
जयति कोऽथवा कः पराजितः ।

भवति वृद्धिमान् कः क्षयी च कः
क इह सज्जनः कश्च वान्यथा ।
क उपरि स्थितः कश्च नीचकै-
रितिविचारणां लोपमाप्य ॥ ८४ ॥

लघुरथो गुरुः क्षुद्रसृष्टिगो
निखिल एकसङ्गीतनादतः ।
भवतु गुम्फितस्त्वत्पदाम्बुजे
वसतु रागभागेकमाल्यवत् ॥ ८५ ॥

मधुरमूर्तिकां तिष्ठ वृण्वती
त्वमुपसंश्रिता मानसान्तरम् ।
सुरुचिरस्मिता कुन्दवर्णिनी
करगवीणया हे सरस्वति ॥ ८६ ॥

तव सुगीतिकास्रोतसि प्लवं
विदधतो रविस्तारका विधुः ।
युगयुगाध्वगाः श्रेणिशः स्थिता
अपि जनाः प्रयास्यन्ति निश्चितम् ॥ ८७ ॥

नभसि तालदश्छन्दसः क्रमैः
सुभविता महाकाल ईक्षितः ।
दश दिगङ्गना मुक्तकुन्तला
दशसु दिक्षु च प्राप्तनर्त्तनाः ॥ ८८ ॥

कविरिदं निगद्य क्षणात् परं
करुणवार्त्तयालेख्यमातनोत् ।
रघुकुलारुणस्यातिपावनं
चरितमाश्रयन्नैतिहासिकम् ॥ ८९ ॥

निरवधिं दधत् शोकमुत्कटं
कथमिवानयद् दग्धजीवनम् ।
श्वसितवासरं यावदन्तिमं
निरवधिं निराश्वासतां वहन् ॥ ९० ॥

अकथयत् सकृद् भाव्यतां हृदा
कथमिवात्यगात्तद्धि दुर्दिनम् ।
मलिनवल्कलप्रावृतो यदा
वनपथे पुरा प्रस्थितोऽभवत् ॥ ९१ ॥

नववयःक्रमो भ्रातृलक्ष्मणो
मलिनतान्वितच्छायया समा ।
नववधूरभूषार्त्तजानकी
बत विसर्जनस्योत्थितौ रथे ॥ ९२ ॥

नृपपुरे चचारार्त्तिजो ध्वनिः
समरुदन् पथि श्रेणिशः प्रजाः ।
कुलिशमीदृशं किं कदाप्यहो
पतितमीदृशे मन्दिरे पुरा ॥ ९३ ॥

चरति भाविराज्याभिषेचनो-
चितमहोत्सवात् सर्वतः सुखे ।
क्षणकमात्रजोत्पातवात्यया
भविकदीपिकालोपतस्तमः ॥ ९४ ॥

अपरमप्यहर्भाव्यतां हृदा
रघुवरो यदा लक्ष्मणान्वितः ।
प्रतिगतो निजं निर्जनोटजं
बत ददर्श नास्त्यत्र जानकी ॥ ९५ ॥

अथ पुनः पुनर्जानकीं ह्वयन्
प्रतिवनं चचारार्तरोदनैः ।
मलिनमाननं धारयमन्हा-
गहनमास्त निःशब्ददर्शनम् ॥ ९६ ॥

तदनु दृश्यतां क्वास्य चावधिः
सपदि चिन्त्यतां तद्दिनस्थितिः ।
अजनि यत्कृते कष्टमुत्कटं
यदविलोकनाद् वेदना चिरम् ॥ ९७ ॥
व्यधित साधनां राम उल्बणां
द्रविणभूतयद्वस्तुलब्धये ।
नृपसभान्तरे सा हि जानकी
विनयमास्थिता प्रस्थितेर्यदा ।
नतरघूत्तमोग्राभिमानतोऽ-
नशदपि ह्रिया दीर्णभूतले ॥ ९८ ॥

अपगता अमी वासरा अपि
क्व तदसह्यशोकस्य लक्षणम् ।
न खलु सोऽक्षरद्दग्धरेखया
क्षितिवपुः समुत्कीर्य निर्ययौ ॥ ९९ ॥

अजनि संहिता दीर्णभूः पुन-
र्भवति दण्डका फुल्लपुष्पभृत् ।
न सरयूतटे नैव कम्पते
तृणगणः स्फुटश्यामलेखया ॥ १०० ॥

रणितमेककं तदुदिनाश्रयं
रुदितसम्मितं केवलं चिरम् ।
विधुरयत्यहो दूरदूरगं
करुणरम्यतानेन मानसम् ॥ १०१ ॥

अजनि तन्महाप्राणमध्यगा
ध्वनिरता महारागिणी हि या ।
ध्वनति सा किलाद्यापि देहिनां
श्रुतिषु वै महागीतगामिनी ॥ १०२ ॥

अथ कविः कथां तामुदाहरत्
कुरुजपाण्डवायोधबोधनीम् ।
गृहविरोधिताघोरमत्तता
जनपदानभिव्यानशेऽखिलान् ॥ १०३ ॥

यमजपादपौ पार्श्वगौ मिथ-
स्तदभिघर्षणाद् वह्निरज्वलत् ।
स हि भवन् महादावपावकः
परिणतौ वनं जग्रसेऽखिलम् ॥ १०४ ॥

जलरयद्वयीवैकशैलजा
तनुकलेबरौ द्वेषजौ रयौ ।
पवनभुग्गती सङ्गतौ मिथः
सपदि निष्ठुराच्चाभिमानतः ॥ १०५ ॥

अतिलघु क्रमात् सङ्गतास्ततो
भरतभूगताः सर्वबाहुजाः ।
प्रलयतोयसंप्लावगीतिभि-
र्मुखरितां व्यधुस्त्रस्तमेदिनीम् ॥ १०६ ॥

तटमभूत् प्लुतं पश्यतां नृणां
स्वपरवेदने मूढतोदिता ।
स्वजनबन्धनं शातयन्नहो
प्रववृतेऽभितो रक्तजो रयः ॥ १०७ ॥

मरणनीरधिः फेनिलोऽभव-
ज्जगदवस्थितं श्वासरोधकृत् ।
चलमभून्नभो रुद्धदृक्कुछतं
परिनिमीलितादित्यतारकम् ॥ १०८ ॥

अवसिते रणाम्भःसुसंप्लवे
सुभगभारतं हा श्मशानकम् ।
क्षितिभुजां गृहा भूमिशायिनो
बत पदे पदे संस्थिता बभुः ॥ १०९ ॥

भयदशान्तिरारक्तलोचना
रुधिरपङ्कतल्पावलम्बिनी ।
नतविलोचनं प्रैक्षत क्षितिं
न खलु वाङ्मयं भाति तन्मुखे ॥ ११० ॥

बहुदिनोत्तरं खिन्नता गता
मरणसंहृता सर्ववैरिता ।
मनुजमेधयज्ञः समाहितः
प्रवरवैरितादीप्तपावके ॥ १११ ॥

प्रविहिताखिलाभीष्टपूरणं
विदलिताखिलोद्दामदम्भकम् ।
सममशिश्रियद् भ्रातृपञ्चकं
विजनहेमसिंहासनं ततः ॥ ११२ ॥

विमलिनं शुचा स्तब्धसौधकं
पितृवनादुपायाति शुग्ध्वनिः ।
हतधवावनीभृत्पुराङ्गना-
विलपितारवो मर्मदारणः ॥ ११३ ॥

जयजयध्वनिं पाण्डवानभि
व्यधुरवस्थिता द्वारि पङ्क्तयः ।
तदुपहासवत् संबभौ तदा
सकलमेव भाति स्म हा मृषा ॥ ११४ ॥

दिनमशेषकं ह्यो ह्रि या भृशं
भरतभूः स्वनापूरिताम्बरम् ।
कुलभयत्रपावर्जमातनो-
न्नृपतिशोणितैर्होलिकोत्सवम् ॥ ११५ ॥

परदिने चिताभस्मरूषिता
यतिपरिच्छदाच्छन्नविग्रहा ।
न्यवसदेकिका सार्तिविह्वला
पितृवनोरसि स्तब्धरिक्तके ॥ ११६ ॥

कुरुजपाण्डवा लुप्ततामिताः
समरभूश्च सा हन्त नीरवा ।
स हि चितानलो भूरि भैरवो
भसितमप्यहो तस्य नो स्थितम् ॥ ११७ ॥

समधिकृत्य यां भूमिमत्यभा-
दियदहो मिथो युद्धमुद्धतम् ।
तदपि नोह्यते साद्य कस्य वा
क नु तदाभवत्तद्धरापतिः ।
क ननु तस्य वा राजधानिका
न खलु चिह्नमप्यस्ति साम्प्रतम् ॥ ११८ ॥

तदपि वै कुतोऽप्येति तत्स्वरः
सैमरसागरः सोऽमरः किल ।
अशकला महागीतिका भवन्
परिगृहीतवान् नूतनं वपुः ॥ ११९ ॥

विजयतः परं यन्महायनं
सफलवासनास्त्यानहृत्क्षतम् ।
तदिह शान्तिमौदास्यरूषितां
प्रवहतां नृणां राति मानसे ॥ १२० ॥

इह धरातले वत्सरेष्वहो
कति वसन्तशीता गतागताः ।
सुखचयेन दुःखस्रजा तथा
सहसितं समापूर्य दिक्चयान् ॥ १२१ ॥

बहुघनागमा वर्तमानभा
बहुलवारमापुः समत्ययम् ।
नवघनोत्करैरानतं नभो
भृशमपातयद् वाष्पसञ्चयान् ॥ १२२ ॥

प्रतियुगं जनाः प्राययुर्ययू
रुरुदुरुच्छुचो हर्षिणोऽहसन् ।
प्रणयवान् जनः प्रीतिमादधे
वयमिवाद्य सुप्रेमभागिनः ॥ १२३ ॥

प्रतिगता हि ते, तत्प्रगीतिका
अकृपणात्मना भूरिशो ददुः ।
प्रतिपुरोच्चयं, नास्ति तन्मितिः
कति कृतप्लवं तत्र यान्त्यहो ॥ १२४ ॥

वसुमतीमिमां श्यामलायतां
    सममिपश्यतो मुग्धचक्षुषा ।
कथमुदेत्यभिव्याप्य मानसं
    निखिलमश्रु, कस्तस्य तत्त्ववित् ॥ १२५ ॥

बहुलमानवप्रेमभिर्वृतं
    सुचिरकालसौख्यासुखाङ्कितम् ।
बहुयुगोत्थसङ्गीतमिश्रितं
    वसुमतीतलं भूरि सुन्दरम् ॥ १२६ ॥

इह न कामये तारगर्जितं
    जनयितुं विवादं परस्परम् ।
कतिपयान्यहान्यत्र यान्यहं
    श्वसितमारुतं जीवितो दधे ।
स्वमनसैव कुर्वीय तर्पितां
    हृदयसम्भवां तानि कामनाम् ॥ १२७ ॥

लसतु तस्य तद् यस्य यत् स्थितम्
    न खलु कामये कस्यचित् पदम् ।
यदि लभे स्थितिं शान्तिशालिनीं
    जनविवर्जिते क्वापि कोणके ॥ १२८ ॥

वितर वंशिकां केवलं करे
    सुविवृतान्तरं वादयामि ताम् ।
गगनभालके पुष्पसन्निभं
    विकचयाम्यहो गीतसञ्चयम् ॥ १२९ ॥

वचनजालमाहृत्य मानसाद्
    विरचयेयमानन्दलोककम् ।
समभिषिच्य सङ्गीतकामृतं
    भवसमुद्भवे धूलिजालके ॥ १३० ॥

अतिसुदुर्गमे सृष्टिशृङ्गके
विगतसीमकालाद्रिकन्दरे ।
स्रवति सन्ततं विश्वनिर्झरः
परिविकीर्णगीतावलीरसैः ॥ १३१ ॥

खररयैः समे तारकाग्रहा
नभसि विद्रुता लक्ष्यविच्युताः ।
इह लघौ मुरल्यां ततो मया
समभिकृष्य गीतं ग्रहीष्यते ॥ १३२ ॥

करपुटं भुवः श्यामलप्रभं
तदुपनीय सम्पूरयिष्यते ।
सुमधुरार्थभृद् वाक्यमेककं
सपदि वायुना मेलयिष्यते ॥ १३३ ॥

विरचय्य नवां मायामाषाढे मासि नूतने ।
गमिष्यामि समालिख्य छायां घनतरामहम् ॥ १३४ ॥

सृष्ट्वोपहृत्य यास्यामि वासन्तिककलेबरम् ।
यद्धि हारिद्रवर्णाढ्यवाससा परिमण्डितम् ॥ १३५ ॥

वसुमतीतलं शून्यविग्रहं
जलधिजीवनं वन्यनातपम् ।
नवतराभया किञ्चिदूर्द्ध्वया
समभिरञ्जयिष्याम्यहं ध्रुवम् ॥ १३६ ॥

कतिपयस्वरानत्र संसृतौ
मधुरतां गमिष्यामि लम्भयन् ।
दवयितास्मि च द्विलकण्टकान्
विरतिमेष यास्यामि तत्परम् ॥ १३७ ॥

समुज्ज्वलतरं तावत् सुखस्य हसितं भवेत् ।
नयनप्रसुतञ्चाश्रु प्रगन्ता रमणीयताम् ॥ १३८ ॥

स्नेहामृतसमाश्लिष्टं निजं वासनिकेतनम् ।
अधिकं मामकीनत्वं तावत् प्रत्याययिष्यति ॥ १३९ ॥

प्रणयाधारभूताया रमण्या नयनाधरौ ।
पूरयित्वा प्रयास्यामि मधुनान्येन फल्गुना ॥ १४० ॥

किञ्चिन्मात्रोऽपरः स्नेहो बालकस्य मुखोपरि ।
धारयिष्यति सद्भावं नीहारोदकबिन्दुवत् ॥ १४१ ॥

परं बोधयितुं नालं न स्वयं वापि बुध्यते ।
विचिन्वन् वचनं योग्यं नरो भ्रमति सर्वदा ॥ १४२ ॥

गायन्ति कोकिला यादृक् पञ्चमस्वरमाश्रिताः ।
पञ्चमं स्वरमाशास्ते तथैव खलु मानवः ॥ १४३ ॥

किञ्चिद् विघटयिष्यामि व्याकुलीभावमीदृशम् ।
किञ्चिच्च व्यपनेष्यामि प्रकाशाशक्तिवेदनाम् ॥ १४४ ॥

महाप्रस्थानतः पूर्वं स्वल्पाः कतिपया गिरः ।
स्थापयित्वा प्रयास्यामि माधुर्येण समन्विताः ॥ १४५ ॥

जननि सरस्वति ! वस हृदि पीठे
चित्तारात्रिकमङ्घ्रियुगे ते ।
कञ्चिदपेक्षितुमीहे नान्यं
कस्यचनाशां न वृणे चाहम् ॥ १४६ ॥

कियदहो सुखं दुःखतां गतं
कति च बान्धवा जातशात्रवाः ।
प्रणयिता कियत्युत्सुकोन्मुखी
बत परां परिम्लानतां गता ॥ १४७ ॥

स्थितमदः पदं ह्येव मे हृदि
ध्वनति सन्ततं वल्लकी ह्यसौ ।
ह्वयति चान्तरे स्नेहजस्वरं
मम समीपमेह्येहि वत्स रे ॥ १४८ ॥

हसितरोदने एहि संत्यज-
न्नखिलकं मृषोच्छिद्य बन्धनम् ।
सुचिरनन्दनोऽत्रास्त्यनातप-
श्चिरवसन्तवातोऽपि वर्त्तते ॥ १४९ ॥

जननि हे प्रशस्तं तदेव मे
तदपयातु यच्चापयात्यहो ।
अभिवृणोम्यहं त्वां चिराय वै
कमलसौरभं देवि ! वृण्वते
अतिसुकोमलाकारधारिणे
तव पदद्वयायासकृन्नमः ॥ १५० ॥

इयदुदीर्य गानं कविर्जहौ
स समतिष्ठताऽऽमुग्धलोचनः ।
तदनु निस्वनो मानसेऽवहत्
सपदि वल्लकीझङ्कृतेः समः ॥ १५१ ॥

पुलकितो नृपः साश्रुलोचनः
परिहृतासनोऽवातरद् भुवि ।
भुजयुगं प्रसार्योत्सुकान्तरः
कविमधारयद् वक्षसि स्वके ॥ १५२ ॥

अकथयत् 'कवे ! साधु साधु हे
हृदयमाप्लुतं मोदधारया ।
किमु वदाम्यहं त्वामतः परं
सुचिरमास्स्व सौख्येन संयुतः ॥ १५३ ॥

न मनसा लभे किन्नु ते ददे
किमुपहृत्य वा त्वां सुतोषये ।
तदलमस्मि ते दातुमानयन्
नृपतिकोषगं यद्धि किञ्चन ॥ १५४ ॥

प्रणयसम्भवानन्दवारिणा
नयनयुग्ममापूर्य तं कविः ।
कथितवान् 'अमूं पुष्पमालिकां
वितर कण्ठतो मामके गले' ॥ १५५ ॥

कचचये समुद्बध्य मालिकां
कविरथाव्रजन्मार्गमाश्रितः ।
रथमुपाश्रितः कश्चनाव्रजत्
शिबिकयाव्रजत् कश्चनाध्वनि ॥ १५६ ॥

विविधदिक्षु नानाविधैः क्रमैः
स्वविधिलिप्सवो ह्यव्रजन् नराः ।
प्रतिनिवर्तते स्मात्मचेतसा
कविरसौ भृशं लुब्धमानसः ।

मनसि चाक्षि दोग्धीव मुग्धकं
दुग्धभृत दुग्धकं कल्पधेनुगम् ॥ १५७ ॥

कविप्रिया संयतकेशपाशा
सन्ध्येव रक्तं वसनं वसाना ।
एकैव वातायनपार्श्वलग्ना
ततान वक्त्रे सुखहास्यलास्यम् ॥ १५८ ॥

कपोतयूथं परितो विहारि
नृत्यच्च कूजच्च चकार खेलाम् ।
कणान् समुद्धृत्य यवस्य मन्दं
कविप्रिया चञ्चुपुटे ददौ च ॥ १५९ ॥

तस्या यथैवाभ्यचलत् कराङ्गुली
दध्यौ तथा किञ्च कियच्च मानसम् ।
निरीक्षमाणा सहसा कविं हि सा
निपातयन्ती नयनं तदाध्वनि ।
प्रकम्प्य बाहुं मृदु झिञ्झिनिस्वनं
सा वादयित्वा करकिङ्किणीं निजाम् ।
आवेष्टयन्ती कविमुत्तमस्मिता
जालं तदा हास्यमयं न्यपातयत् ॥ १६० ॥

सोल्लासमन्तःकरणं कवेरभूत्
सोऽतित्वरं सम्मुखदेशमागतः ।
सकौतुकं प्राह मृदु स्मितं श्रितः
किमानयं तत् परिपश्य बालिके ॥ १६१ ॥

बहुजना बहून् लेभिरे निधीन्
अहमुपानयं भूरियत्नतः ।
तव गले प्रदानोचितां परां
नृपतिकण्ठगां मालिकामिमाम् ॥ १६२ ॥

एतावदुक्त्वा शिरसोऽवतार्य
मालां प्रियाकण्ठगतां विधातुम् ।
तस्मिन् प्रवृत्ते करमस्य रोषाद्
व्यपाकरोत् सा विमुखी च तस्थौ ॥ १६३ ॥

छलवशान्मृषा कोपना बहि-
र्मनसि तु श्रिता भावसंप्लवम् ।
अजनि गर्वतो रागपूर्णता
मनसि नो ममौ सौख्यसञ्चयः ॥ १६४ ॥

कविरवैद् विधिर्न प्रसादभाग्
विपदमद्य वीक्षे समीपगाम् ।
स समवस्थितो म्लानवक्त्रकं
गगनसंगतं चक्षुरुद्वहन् ॥ १६५ ॥

कविवधूर्दधत्यर्द्धवक्रतां
व्यधित सान्तरं वक्रवीक्षितम् ।
पतिमुखायतं वीक्ष्य वैकृतं
मुखगतं समुत्सार्य वस्त्रकम् ॥ १६६ ॥

अहसदुच्चकैस्तुच्छवञ्चना
प्रतिगता क्वचित् सा निमेषतः ।

त्वरितमागता सन्निधौ ततो
दयितवक्षसि प्रापतन्मुदा ॥ १६७ ॥

हसित्वा रुदित्वा च तस्मिन् विविक्तं
कवेः कण्ठदेशं भुजेनाशु बद्ध्वा ।
स्वतः सम्प्रवृत्त्या शतं सा हि वारान्
कवेराननने चुम्बनं सम्प्रचक्रे ॥ १६८ ॥

स तु सुविस्मितो विह्वलायितो
न हि वचो विचिन्वन् मुदाभ्यगात् ।
अतिसमादरान्मालिकां सती
कविवधूः स्वकण्ठे न्यवेशयत् ॥ १६९ ॥

तत् प्रेमपूर्णवदनं प्रतिदृष्टिदायी
भक्त्या कविर्मनसि भावयति स्म तावत् ।
एकेन माल्यमयबन्धनदामकेन
वाणी रमा च सममापतुरद्य बन्धम् ॥ १७० ॥



# प्रस्थानाभिशापम्*

अनुवादक :- श्रीकालीपदतर्काचार्यः

**कचः**— आज्ञापय देवयानि !
दास एष देवलोकमभिप्रयास्यति ।
गुरुनिकेतने,
समाप्ताद्य मदीया वसतिः ।
आशीर्वादं वितर मां प्रति,—
या विद्या हि मया प्रशिक्षिता,
अतिसमुज्ज्वलं रत्नमिव,
सुमेरुशिखरे तथा तीक्ष्णभानुरिव,
अक्षयकिरणा मम मानसमन्दिरे,
सैषा यथा तेजस्विनी चिरं सन्तिष्ठते ॥

**देवयानी**— सम्पूर्णतामधिगतस्तव मनोरथः,
आचार्याद् दुर्लभा विद्या त्वया ह्यधिगता ।
सहस्रवत्सरव्यापिदुःसाध्यसाधना,
अद्य तव सिद्धिमुपगता ।
काचिदन्या किं नास्ति कामना ?
भावनया विचारय हृदि ।

**कचः**— नास्ति काचिदपरा कामना ।

---

* 'विदाय-अभिशाप' (कचदेवयानीसंवादः)
ब्लाङ्क्-वर्स् ( Blank Verse ) छन्दसा निबद्धम् ।

**देवयानी**— नास्ति काचिदपि ?

तथापि सुविचारेण पश्य पुनरपि,
अन्तरसीमान्तावधि,
सुप्रविश्य दृढमन्वेषय ।
अन्तः प्रान्ते यदि कापि वर्तेत वासना,
कुशाङ्कुरसमा,
क्षुद्रदृष्टिबहिर्भूता किन्तु तीक्ष्णतमा ।

**कचः** — निःशेषं कृतार्थमद्य जीवनं हि मम ।
मयि कापि नास्ति दैन्यमणुमात्रमपि ;
शून्यता च कापि सुलक्षणे !

**देवयानी** — सुखभागी त्वं हि त्रिभुवने ।
प्रयाहि महेन्द्रपुरं स्वीयकार्यकृते,
समुन्नतशीर्षभागे वहन् सुगौरवम् ।
उद्गन्ता प्रमोदध्वनिस्तेन स्वर्गपुरे ।
मङ्गलपिशुनशङ्खध्वनिः,
मनोहरस्वरमुच्चरिता,
वर्षिष्यन्ति सुराङ्गनास्त्वदीयशिरसि,
कुसुमानि तथा,
सद्यश्छिन्ना नन्दनस्य मन्दारमञ्जरीः,
अप्सरसः किन्नर्यश्च त्रिदिववर्त्मनि,
कलकण्ठं करिष्यन्ति हुलहुलुध्वनिम् ।
अहो विप्र ! तव ह्यत्र विदेशे निर्जने,
सुदुष्कराध्ययनकर्मणा
बहुकष्टं व्यतीतानि दिनानि हा बत !
सुखमयस्वनिलयकथाः,

स्मारयितुं न कश्चन व्यराजत तदा,
न वा कोऽपि वारयितुं प्रवासवेदनाः ।
दरिद्रनिलये,
यदेवास्त तेनैव वस्तुना,
यथाशक्ति संसाधितातिथिसमर्चना ।
तथापि स्वर्गीयं सुखं प्राप्तव्यं नु कुतः ?
क्व नु तावदत्र तथा,
सुराङ्गनामूर्त्तिरनिन्दिता ?
दृढमाशां पुष्णामि मानसे,
आनन्दस्य लोकं प्रति गतः,
नात्रत्यमातिथ्यदोषमन्तः स्मरिष्यसि ।

कचः—सुकल्याणहसितकर्मणा,
प्रसन्नतामयमद्य मम,
दासस्य हि विसर्जनं साधनीयं त्वया ।

देवयानी—हसितकर्मणा ?
हन्त सखे ! नैषा स्वर्गपुरी ।
कीट इव कुसुमाभ्यन्तरे,
अत्र तृष्णा जागरिता तिष्ठति मर्मणि ।
वाञ्छितं समभिलक्ष्य,
वासना हि परितो भ्रमति,
विडम्बितो यथा मधुकरो,
मुद्रितस्य पद्मस्य सविधे,
पुनः पुनरुत्पत्य भ्रमति ॥
अत्र सुखे सति व्यपगते,
शून्यगृहमधिष्ठाय स्मृतिरेकाकिनी,

दीर्घश्वासं किल विमुञ्चति ॥
सुलभात्र न हसितक्रिया ॥
गच्छ बन्धो ! किं समयक्षेपणेन वृथा ?
सन्ति देवगणा उत्कण्ठिताः ॥
प्रस्थीयते त्वया ?
अवसितं सर्वमयि !
कथाद्वयकथनकर्मणा ?
संवत्सरसहस्रपरतः,
एषा किलाप्रच्छन्नपद्धतिः ?

**कचः**—देवयानि ! कोऽपराधो मम ?

**देवयानी**—हा हन्त ! सौन्दर्यमयी वनवसुन्धरा,
व्यतरद् वल्लभच्छायां सहस्रं शरदः ;
पल्लवाः श्रावयामासुर्विहङ्गगीतिकाः,
तामेवाद्य वनवसुन्धराम्
एतावता सौकर्येण हित्वा प्रयास्यसि ?
म्लानेव पादपश्रेणी पश्य विराजते ।
शोकेनेव वनच्छाया,
गाढतरतिमिरप्रावृता ।
समीरणो रोदनमञ्चति ।
विशीर्य च निपतति शुष्कपत्रावली ।
अधरेण सहास्येन केवलस्त्वमयि !
प्रस्थास्यसे त्रियामान्ते सुखस्वप्न इव ॥

**कचः**—देवयानि ! वनभूमिमिमामहमयि !
प्रजानामि मातृभूमिमिव ।

नवजन्म लब्धमत्र मया,
नास्ति ममैतस्यामनादरः,
सुचिरमक्षयप्रीत्या सैषा स्मरिष्यते ॥

देवयानी—वटतलं तदिदमग्रतः,
गोधनचारणकृते समुपेत्य त्वया,
माध्याह्निकखरतापेऽभितः प्रचरति,
प्रतिदिनमेव नियमतः,
यत्र निद्रावश्यता स्वीकृता ॥
तदा तव क्लान्तकलेबरे,
वटतरुरतिथिवत्सलः,
नियमेन दीर्घच्छायाविस्तारमकृत ॥
सकम्पपल्लवदलैः,
मृदुस्वरं विहितवीजनः ;
सुखसुप्तिमुदभावयत ॥
कामं सखे प्रयायाः पुरतः,
तथाप्यत्र परिचितमहीरुहतले,
कियत्क्षणान् कुरुतरामन्त्यामवस्थितिम् ॥
गृहीत्वैतत् स्नेहच्छायासम्भाषणं व्रज ।
प्रतियाहि स्वल्पकालमवस्थितस्ततः ।
नहि तेन विलम्बेन तव,
क्षतिः कापि स्वर्गस्य भविता ।

कचः—एते चिरपरिचिता बन्धवोऽद्य मम,
नवा इव प्रतिभान्ति प्रस्थानसमये ।
पलायनपरप्रियममी
बन्धुमुत्कस्नेहेन निखिलाः,

नूतनबन्धनजालं वितन्वन्ति किल ।
चरमानुनयापूर्वसौन्दर्यलक्षणम् ॥
अयि वनस्पते !
समाश्रितजनबन्धुवर ! तुभ्यं नमः ।
अगणिताः पान्थजनास्तव,
छायामधिष्ठास्यन्ति पुरतः,
अहमिव कति विद्यार्थिनः
प्रच्छन्नप्रच्छायतले नीरवनिर्जने,
तृणासने पतङ्गीयमृदुगुञ्जस्वरम्
अध्ययनं करिष्यन्ति भूरिदिनेष्वथ ।
प्रातःस्नानात् परमुपागता ऋषिसुताः,
सजलवल्कलखण्डांस्तव शाखोपरि,
प्रसारयिष्यन्ति तथा शोषणहेतवे ॥
गोपालबालकाः,
मध्यन्दिने विश्रास्यन्ति क्रीडनं च मुदा ।
अयि ! तदन्तरे,
पुरातनो बन्धुरेष किल,
स्मृतावस्तु विराजितोऽग्रतः ॥

**देवयानी**—मनसि पुष्यताम्,
असदीया होमधेनुरियम्,
पीत्वा सुरालयसुधामथ,
गौरवान्न विस्मर्यतां धेनुः सा पावनी ।

**कचः**—तद्दुग्धममृतादपि स्वादुतरमयि !
तां हि दृष्टवतः,
पापचयः क्षयं संश्रयति,

मातृरूपा शान्तिस्वरूपिणी,
या हि धेनुः शुभ्रकान्तिरपि पयस्विनी ।
क्षुधातृष्णे श्रान्तिमपि नहि गणयता,
सेवा तस्याः खलु मया सम्यगनुष्ठिता ।
गहनकानने,
श्यामशष्पस्रोतस्विनीतीरे,
दीर्घकालं विचरणं कृतं तया सह ।
परितृप्तया स्वच्छन्दो निम्ननटोपरि,
तृणस्तोममगणितं सुस्निग्धकोमलं,
भुक्त्वालस्यमन्थरविग्रहा,
महीरुहतलमुपाश्रिता,
सा शयाना सुतृणशयने,
मन्दं मन्दं समग्रदिवसं,
नियमेन रोमन्थनक्रियामकुरुत ॥
कृतज्ञामन्तरान्तरा,
समुन्मील्य शान्तदृष्टिं विशालनयने,
गाढस्नेहमयेन चक्षुषा,
देहे मम लेहनमकृत ।
सा सुस्थिरा स्निग्धदृष्टिः स्वास्यनि मनसि ॥
तथा पुष्टा शुभ्रा तनुर्मसृणपिच्छिला ॥

देवयानी—पालयतां मनसि तथा,
असदीया कलस्वना नदी वेणुमती ।

कचः—तां नैव विस्मरिष्यामि,
सा हि वेणुमती,
अगणितकुसुमितकुञ्जमयाध्वना,

मधुकण्ठोद्गतसुखकलगीतवहा,
ग्राम्यवधूरिवोपैति शुश्रूषावाहिनी,
निरन्तरं सत्वरगमना,
प्रवाससङ्गिनी मम नित्यशुभव्रता ॥

**देवयानी**—हन्त बन्धो ! तव पार्श्वगता,
प्रवासेऽत्र काचिदन्याप्यासीत् सहचरी,
परगृहवासदुःखविस्मारणाय ते,
रात्रिन्दिवं तन्मनसि यत्नो व्यराजत ।
हा हन्त ! दुराशा !

**कचः**—समग्रेण जीवनेन सह,
तस्या नाम ग्रथितमजनि ॥

**देवयानी**—दीव्यति मनसि,—
यस्मिन् दिने प्रथमतः किशोरब्राह्मणः,
त्वमाश्रममेतमुपगतः,
तरुणतपनतुल्यस्निग्धदीप्तिप्लुत-
गौरवर्णविग्रहशोभितः,
ललाटे चन्दनलिप्तः,
कण्ठे पुष्पमाल्यविमण्डितः,
पट्टवासा अधरे नयने,
प्रसन्नाकपटहास्यशोभाविभूषितः,
अमुत्र कुसुमवने,
तथाविधस्त्वमागत्य स्थितः ।

**कचः**—त्वं तदानीं सद्यः स्नानोत्थिता,
सुदीर्घार्द्रकुन्तलधारिणी,

अभिनवधवलवसना,
ऊषा इव ज्योतिर्मयी गृहीतविग्रहा,
करधृतपुष्पकरण्डिका,
एकाकिनी स्थिता,
पूजाकृते नवपुष्पचयनव्यापृता ॥
सानुनयमहमवादिषि,—
एष श्रमस्तव न युज्यते,
मां समाज्ञापय देवि!
चित्वा पुष्पचयो मया तवोपनीयते ।

देवयानी—अहमपि तदा सुविस्मिता,
पर्यपृच्छं परिचयं तव ।
सविनयमभ्यधायि त्वया,—
अहं बृहस्पतितनूद्भवः,
तव पितुः शिष्यपदग्रहणहेतवे,
अस्मि तव द्वारि समागतः ।

कचः—शङ्का ममावर्त्तत मनसि—,
दानवानां गुरुस्तातस्तव,
अपि प्रत्याचक्षीत वैरतः,
देवलोकसम्बन्धिनमिमं हि ब्राह्मणम् ।

देवयानी—गता तावदहं तदन्तिके,
कृतस्मिता चाहमभिहितवती,—
तात! भिक्षा काचिदस्ति मम तव पदे ।
आसयित्वा स्नेहेनाथ पार्श्वे मां स तदा,
करं न्यस्य मदीयमस्तके,
शमेन मार्दवेन च सममभ्यवित,—

नहि किञ्चिदप्रदेयमस्ति तुभ्यं मम ।
अभिहितं मया च तदनु,
तात ! तव द्वारि समागतः,
सुरगुरुबृहस्पतिसुतः,
गृहाण तं शिष्य इति मदीयानुनयः
तदद्यप्रभृति,
कियच्चिरात् पूर्वमघटत,
प्रतिभाति तथापि तदिदम्,
अतिमात्रसन्निहितप्रातर्भवमिव ।

**कचः** — वारत्रयं दैत्यगणा ईर्ष्याकलुषिताः,
ममोपांशु वधमकुर्वत,
त्वं देवी कृपया,
प्राणान् मम प्रत्यर्पितवती ।
तद्वार्तामन्तरतले,
समुद्भास्य वर्तिष्यते चिरकृतज्ञता ।

**देवयानी**—कृतज्ञता ! विस्मर्यतां तदा,
नास्ति तेन दुःखं मे किमपि,
उपकृतं यद्धि मया पुरा,
भस्मीभूतं तदिह भवतु,
न दानस्य प्रतिदानमहमभ्यर्थये ।
अपि सुखस्मृतिः कापि न स्थिता मनसि ?
आनन्दगीतिका यदि,
कदाचन प्रध्वनिताभवदन्तर्बहिः;
यदि कापि प्रदोषसमये,
वेणुमतीतीरे पुष्पवने,

अध्ययनस्योपरमावसरे वसतः,
अपूर्वपुलकराशिरन्तर्जागरितः,
कुसुमसौरभमिव हृदयोच्छ्वसितं
व्याप्तमकुरुत यदि सायाह्निकनभः,
निकुञ्जकाननमपि,
सुखवार्ता सा हि तदा रक्षणीया हृदि ।
दूरपदं यातु कृतज्ञता ।
केनाप्यत्र यदि सखे ! जनेन पूर्वतः,
सङ्गीतकं संगीतमजनि,
येन सुखं हृदि तव समुदभाव्यत,
परिहितं कदापि वा रम्यवस्त्रमपि,
यत् पश्यतस्तव,
मनसि प्रशंसावाणी तदा जागरिता,
प्रसन्नमनसा,
तृप्तनेत्रमचिन्त्यत त्वया,
अद्य रम्या प्रदृश्यते तावदसाविति ।
सुखमयस्वर्गनिकेतने,
तदिदं हि स्मरणीयमवसरक्षणे ।
अत्र वने दिवसेषु कतिषु पूर्वतः,
दिक्षु दिगन्तरेषु चाषाढनीलजटा,
श्यामस्निग्धवर्षोचितनवघनघटा,
अवतीर्णा समजनि ।
अविश्रान्तवृष्टिजलधारया च मनः,
कर्मशून्यदिने,
निरन्तरकल्पनाभिः पीडामभजत

कतिषु च दिवसेषु पुनः,
सहसा वसन्तोचितो बाधाविवर्जितः,
यौवनप्रभवोत्साहः किल समुदितः,
समुल्लासकल्लोलगहनः ।
आवेगप्रवाहः सोऽयं सङ्गीतमुखरः,
लतायां पत्रे च पुष्पे वने वनान्तरे,
क्रमजातकल्लोलमालया,
आनन्दप्लावनेनाभिव्याप्तिमकुरुत ॥
अन्तरेण सकृदनुस्मर,—
त्वदीयजीवने,
कियत् कल्यं कति ज्योत्स्नाः,
कति तथा तिमिरसंवृताः
अमानिशाः पुष्पगन्धघना अत्र वने,
सुखेन दुःखेन तथा लयमवृण्वत ।
तदन्तरे प्रातः किं न तथा,
तथा सन्ध्या तथा मुग्धनिशा,
विलसितमन्तरस्य तथा,
तथा सुखं किं वा मुखमपि,
नैव दृष्टिपथमविन्दत,
यन्मनसि चिरस्थिरचित्ररेखा यथा,
चिरनक्तंदिवं तथा लिखितं स्थास्यति ।
उपकार एव हि केवलः !
न हि शोभा न हि प्रीतिर्न चान्यत् किमपि ?

**कचः**—यत् किलान्यदस्ति वस्तु सखि !
मर्मान्तरे यद् वहति रक्तमयात्मना,
कथं नु दर्शयिष्यामि तत् प्रकाशं बहिः ?

देवयानी—प्रजानामि सखे !

बहुकृत्वस्त्वदीयमन्तरं,
समपश्यं मदन्तरालोकेन सपदि ।
केवलं नयनपत्रपातेनेव पुरा ॥
रमण्या ईदृशी स्पर्द्धा तत एवाजनि ।
तिष्ठ तदा, तिष्ठ तदा, मा नाम त्वं व्रज
यशोराशिप्रभवगौरवे,
सुखलेशो न खलु वर्तते ।
अत्र वेणुमतीतटपदे,
आवां हि रचयिष्यावो नवस्वर्गपुरम् ।
सहैतया जनशून्यकाननच्छायया,
मेलयित्वा सुसञ्जातनिखिलविस्मृति,
निभृतविश्रब्धमुग्धहृदययुगलम् ।
अयि बन्धो ! जानाम्यहं रहस्यं हि तव ।

कचः—न हि, न हि देवयानि !

देवयानी—न हि ? मिथ्या, प्रवञ्चना !

किं न दृष्टं मया मनस्तव ?
प्रेमान्तर्यामीति किमु न विदितं हि ते ?
किशलये लीनं पुष्पं विकचं तिष्ठति,
क नाम सौरभं तस्य प्रच्छादयिष्यते ?
दिवसेषु कतिषु पूर्वतः,
उन्नमितं यावदेव मुखं,
यावदेव दृष्टिः सञ्चारिता,
यावदेव श्रुतस्त्वया मम कण्ठध्वनिः,
तावदेव सर्वाङ्गेषु तव,

मनसः स्पन्दनक्रिया समन्वभूयत ।
सञ्चलिते हीरकशकले,
स्खलितः प्रसृतश्चापि तदालोक इव ।
तदिदं न मया दृष्टं किमु ?
विदितोऽसि बन्धो ! स्वरूपतः,
तेन वन्दी त्वं सविधे मम ।
नात्येतुं बन्धनं ह्येतत् त्वं पारयिष्यसि ॥
नातः परमिन्द्रस्तवेन्द्रतां समश्नुते ॥

**कचः**—शुचिस्मिते !
सहस्रं वत्सरान् यावदत्र दैत्यपुरे,
एतदर्थमनुष्ठिता किं कृच्छ्रसाधना ?

**देवयानी**—कथं नेति ?
विद्यालाभायैव किन्तु जनाः,
सहन्ते दुर्वहं दुःखमत्र चराचरे ?
किं नाकृत महातपः कोऽपि नारीकृते ?
संवरणस्तपतीकाम्यया,
पत्नीवरं याचमानो विनाहारमपि,
प्रखरतपने दृष्टिं विन्यस्य नभसि,
सुचिरं कठोरतपः किन्नु नाकृत ?
हन्त भवे सुदुर्लभा विद्यैव केवला ?
अतीव सुलभमत्र प्रेमवस्तु किमु ?
अभिव्याप्य सहस्रं शरदः,
कस्य द्रविणस्य कृते तपस्त्वमकृथाः,
स्वयमेव न जानासि तदिदमञ्जसा ॥
विद्यैकस्यां दिशि तदा स्थिता,

स्थितान्यस्यां दिशि चाहमपि,
कदाचन मां त्वमयाचथाः,
कदापि वा तामुत्सुकतया ।
एकत्रानागतस्थैर्यं त्वदीयमन्तरं,
द्वयोरेव रहसि यत्नतः,
निर्विशेषमाराधनाक्रियामकुरुत ॥
द्वे एवावामद्यैकदिवसे,
स्वरूपग्राहणकृते जाते सम्मिलिते ॥
सखे ! त्वं प्रत्यभिज्ञाय वृणु यामिच्छसि ।
सरलसाहसेन त्वं यदि वदेः किल,—
विद्यायां न सुखमस्ति तथा न यशसि,
देवयानि ! त्वमेवासि सिद्धिर्मूर्तिमती,
तवैव वरणमहं करोमि सम्प्रति,
नास्ति कापि क्षतिस्तत्र लज्जापि काचन ।
रमणीहृदयं सखे !
द्रविणं सहस्रवर्षसाध्यस्य तपसः ॥

कचः—देवतासन्निधौ शुभे ! प्रतिज्ञातं मया,—
महासञ्जीवनीं विद्यामुपार्ज्य सपदि,
करिष्यते देवलोके प्रतिनिवर्तनम् ।
तन्निमित्तमहमिहागतः
सा प्रतिज्ञा मम,
निरन्तरमवर्त्तत चित्ते जागरिता ।
प्रतिज्ञा मे सा पर्यपूर्यत,
इयत्कालपरे,
मदीयं जीवनमिदं कृतार्थमजनि ।
अद्य न कामये स्वार्थमितरं कमपि,

देवयानी—धिङ् मिथ्याभिभाषणप्रकृते !
आकाङ्क्षिता त्वया ननु विद्यैव केवला,
समागत्य गुरुनिकेतने,
केवलं विद्यार्थितया,
किमासीस्त्वं निभृतप्रदेशे,
शास्त्रग्रन्थे विन्यस्य नयने,
रतः पाठकर्मण्यहरहः,
अन्यत्र सर्वत्र परं माध्यस्थ्यमाश्रितः ?
विहायाध्ययनशालां वने वनान्तरे,
भ्रमणव्याप्तोऽभवः कुसुमानां कृते,
तैश्च मालां विरचय्य तदा,
प्रफुल्लसहास्यमुखं केन वा हेतुना,
अस्या विद्याविहीनायास्त्वमुपानयथाः ?
किं कठोरव्रतमिदं ननु ?
किमयं नु तवाचारो विद्यार्थिन इव ?
यदा प्रातरध्ययने रतस्त्वमभवः,
तदाहं कुसुमशून्यकरण्डिकाकरा,
समुपेत्य स्थिताभवम्,
नियमेन सहास्यवदना ;
नियमेन तदा,
त्वं कथं विहाय ग्रन्थमुत्थायोपागतः,
प्रफुल्लशिशिरसिक्तकुसुमराशिभिः,
साधयितुं मम समर्चनम् ?
अपराह्णसमये च यदा,
पादपालवालेऽभवं जलसेकरता,
तदा श्रान्तां पर्यवेक्ष्य मां कथं नु त्वया,

समुत्तोल्य समर्पितं सलिलं कृपया ?
पाठं हित्वा केन वा हेतुना,
आसीस्त्वं मे मृगशिशोः पालनतत्परः ?
स्वर्गपुराद् यत् सङ्गीतं गृहीत्वात्रागतः,
कथं तस्य श्रावणमकृथाः,
प्रदोषसमये यदा,
नीरवं समवतीर्णं नदीतीरे तमः,
प्रेमनतलोचनस्य स्निग्धच्छायामयः,
सुदीर्घपल्लव इव ?
विद्यां परिग्रहीतुमागतः,
स्वर्गीयचातुर्यस्रजा,
कथं मम चित्तमपाहरः ?
विदितमधुना,
मामायत्तीकृत्य पितुर्मम,
हृदये प्रवेष्टुमिच्छा तव तदा स्थिता ।
कृतकृत्येनाद्य भूत्वा त्वया
मह्यं काञ्चित् कृतज्ञतां वितीर्य यास्यते,
राजद्वारे सिद्धमनोरथेन प्रार्थिना,
दत्त्वा द्विचतुरा मुद्रा दौवारिककरे,
प्रस्थीयते यथा तुष्टहृदा ।

कचः—हा अभिमानिनि ! नारि !
सत्यं श्रुत्वा किं सुखं भविता ?
धर्मो वेत्ति, प्रतारणामहं नाकरवम् ।
अकपटसानन्दमनसा,
सन्तोषस्य विधानेन तव,

तथा तव सेवनविधिना,
दोषकारी यद्यभूवमहम्,
तद्दोषस्य तदा दण्डं विदधाति विधिः ।
तां कथां न वदिष्यामीत्यासीन्मे मनसि,
कथय किं फलं भावि तां विज्ञाय तव ?
उपकारो न कस्यापि यया त्रिभुवने ।
एकान्ततो या केवला मदीयैव कथा ॥
सिद्ध्यामि वा न वेत्यद्य विचारो निष्फलः ।
तदहं साधयिष्यामि,
यदस्ति मे साधनीयमथ ।
स्वर्गो यदि स्वर्ग इति न रोचेत हृदे,
शरविद्धः कुरङ्गम इव,
दूरवनतले यदि,
परिभ्रम्य मनो मम सीदेद् वृथा किल,
सर्वकार्यान्तरे यदि,
अनुस्यूता चिरं तृष्णा स्याद् दग्धमनसि,
तथापि गन्तव्यमितः,
सुखशून्ये तत्र स्वर्गपुरे ।
एतां विद्यां सञ्जीवनीं पुरः,
सर्वदेवसमूहाय दत्तवतो मम,
नवीनस्य देवत्वस्य प्रदानकर्मणा,
जीवनस्य सार्थकता खलु भविष्यति ।
स्वसुखं न कल्पयामि ततः पूर्वमहम् ।
क्षमस्व मां देवयानि !
अपराधं क्षमस्व त्वं मम ।

देवयानी—क्षमा क्वनु ममान्तःकरणे !

हे ब्राह्मण ! नारीचित्तमिदं किल त्वया,
विहितं कुलिशमिव कठिनप्रकृति ।
स्वर्गपुरे सगौरवं त्वया प्रयास्यते,
स्वकर्त्तव्यजातहर्षपुलकसम्पदा,
निर्वास्य निखिलदुःखशोकं दूरपदे,
किं मदीयमस्ति कार्यं किं वा व्रतं मम ?
अत्र मम प्रतिहते निष्फलजीवने,
किं नु शिष्टं, कस्य च गौरवम् ?
अत्र वनभुवि,
एकाकिनी नतशिरा निःसङ्गा च पुरः,
स्थास्याम्यहमुपविष्टा लक्ष्यविवर्जिता ।
विवर्तयिष्यामि दिशि यत्रैव नयने,
दशशतस्मृतिमयकण्टका हि ततः
प्रतिपदं विधास्यन्ति निष्ठुरवेधनम् ।
अन्तर्वक्षस्तिरोभूता लज्जा क्रूरतमा,
दंशनं च विधास्यति तीव्रं पुनः पुनः ।
हा धिक् ! हा धिक् ! कुतो नु त्वमिह,
उपायातो निर्ममपथिकः,
स्वल्पं कालमवसरक्षपणच्छलतः,
मदीयजीवनवनच्छायायामुषितः,
जीवनस्य सुखानि सपदि,
छित्त्वादाय प्रसूनानि यथा,
एकेन सूत्रेण मालां काञ्चिद् व्यरचयः ।
सा माला प्रस्थानक्षणे,
नैव कण्ठे त्वया परिहिता,
परमावज्ञया,

सूक्ष्मं सूत्रं तद् विभज्य द्विधा,
छित्त्वा त्वं हि क्वापि प्रतिष्ठसे ।
धूलावस्थ जीवनस्य,
विलुण्ठितः समस्तमहिमा ।
अभिशाप एष मया त्वयि वितीर्यते,—
यद् विद्यायाः कृते,
मयि त्वयावज्ञा विधीयते,
सा विद्या ते न निःशेषं वश्या भविष्यति ।
त्वं तस्याः केवलं,
भारवाही भूत्वैव स्थास्यसि ।
तद्भोगाय न प्रभविष्यसि,
शिक्षां प्रदास्यसि,
स्वयं तस्याः प्रयोगाय नालं भविष्यसि ॥

कचः—देवि ! तुभ्यं वर एष मया प्रदीयते,—
सुखिनी त्वं चिरं भविष्यसि,
विपुलेन गौरवेण तथा,
सर्वा ग्लानीस्त्वं विस्मरिष्यसि ॥

—: * :—

# पतिता

अनुवादकः— श्रीफटिकलालदासः

(१)

गृहाण मन्त्रिन् मम धन्यवादं
त्वदङ्घ्रिपद्माय नमो नमोऽस्तु ।
गृहाण सर्वास्तव हेममुद्रा
उपायनं तत्सहितं च सर्वम् ॥ १ ॥

त्वयैव रत्नाभरणैर्विभूष्य
वाराङ्गना या ऋषिमृष्यशृङ्गम् ।
सम्प्रेषिता मोहयितुं वनान्ते
भवामि तास्वेकतमा बताहम् ॥ २ ॥

भवत्यहर्नो द्युमणौ प्रसुप्ते
तस्मिंस्तथा जाग्रति नो हि रात्रिः ।
वयं पृथिव्या नरकालयेषु
सन्ध्याप्रदीपान्ज्वलयाम एव ॥ ३ ॥

त्वं मुख्यमन्त्री नृपतेः सभासद्-
वृत्तिस्तु ते घृण्यतरा सदास्ति ।
अस्थाय सिंहासनपृष्ठभागे
गृह्णासि लोकान् नरवागुराभिः ॥ ४ ॥

किमस्ति ते किञ्चन गुप्तमङ्ग
किं नास्ति मे भो हृदयाख्यवस्तु ।
विसृष्टधर्मामपि सोऽपि धर्मः
किं मामहासीत्कुपितश्चिराय ॥ ५ ॥

नास्ते त्रपा मे, न च साधु कर्म,
पतिव्रतानां न च वेद्मि रीतिम् ।
तथापि विस्मर्तुमलं किमस्मि
नारीस्वरूपं ललनात्मधर्मम् ॥ ६ ॥

तपोवने तत्र सदाच्छवात-
स्तिष्ठत्यदूरेऽसितशैलमाला ।
कलस्वना कापि वहास्ति पुण्या
किं नाम तत्ते पुरनाट्यशाला ॥ ७ ॥

अमानि, सर्वान्तरपापराशि-
रुरो हि भित्त्वा बहिरागतो मे ।
सुश्यामपूतैरयि वार्क्षभूमे !
मामावृणु त्वं निजनूत्नवस्त्रैः ॥ ८ ॥

भो भो नभो दीप्त महानुभाव !
कृत्वानुकम्पां प्रति लज्जितां माम् ।
आवेष्ट्य देहं शतशो मदीयं
निजामलत्वं सहजं प्रदेहि ॥ ९ ॥

( २ )

प्रदीपपीतद्युतिभास्वरेऽस्ति
स्थानं हि रुद्धे निलये सदा नः ।
विमुञ्चते यत्र मरुत्प्रबद्धः
श्वासं हताशस्य समाकुलः सन् ॥ १० ॥

भासो मणिभ्यश्छुरिता भवन्ति
    विभान्ति मुक्ताश्चलकेशपाशे ।
उपैति सर्वानिव वेष्टमानं
    नभो घनं सन्मधुशीकराक्तम् ॥ ११ ॥

प्रमोदराज्याः करबद्धमाला
    वयं प्रभाते वनपुष्पमध्यम् ।
गता विशीर्णा मलिनाः स्खलामः
    प्रवेष्टुकामास्त्रपया धरित्रीम् ॥ १२ ॥

तथापि भो भोः कुसुमस्वसारो !
    ज्ञातं स्वचित्ते ह्यधुना मयैतत् ।
वनस्य गन्धो हृदयैककोणे
    क्वचिन्ममास्ते ध्रुवमत्र गुप्तः ॥ १३ ॥

( ३ )

सुवर्णलेखां प्रथमां नवार्को
    व्यधत्त यावन्निकषे तटिन्याः ।
स्नानस्य हेतोस्तरुणस्तपस्वी
    धीरं वहायास्तटमागतोऽभूत ॥ १४ ॥

उषेव पूर्वाचलशीर्षसंस्था
    पिङ्गाऽचकादस्य जटाललाटे ।
ज्योतिर्लतेवास्य तनुस्तनूश्च
    स्निग्धाऽचिराभाशतवेष्टिताऽभात् ॥ १५ ॥

अमानि चित्ते, प्रविधाय दीप्तं
    मन्नूनजन्मोदयशैलमेकः ।
परप्रभातस्तुहिनैर्विधौतो
    भूत्वोदितोऽभून्नवजीवनं मे ॥ १६ ॥

अन्यास्तरुण्यस्तरणीं प्रवाह्य
गीतान्यगासुः स्वरपञ्चमेन ।
ऋषेः कुमारश्चकितो विमुग्धः
प्रादत्त कर्णं मृगशाबकल्पः ॥ १७ ॥

उल्लम्ब्य सर्वाः सलिलं प्रविश्य
तं बाहुपाशैः सहसा च बद्ध्वा ।
नानाङ्गभङ्गैः परितः सहासं
विलासलास्यं व्यदधुः सरङ्गम् ॥ १८ ॥

आघातमाप्ता सरितः शिलासु
स्त्रीणामरावीत्पदनूपुरौघः ।
भास्वानपश्यत्स्फुटरक्तनेत्रो
निर्लज्जलीलामतिनिष्ठुरां ताम् ॥ १९ ॥

(४)

भीतः कुमारः कुतुकेन पूर्णोऽ-
लोकिष्ट ताः प्रागिव देवसूनुः ।
आलोकमालाऽविदिताऽपतद्वै
कुतोऽपि देशादिव तस्य मार्गे ॥ २० ॥

अचिन्तितैका नवजातभक्ति-
र्दीप्तिं ह्यदादस्य सुशुभ्रभाले ।
अद्य प्रभाते स कमप्यपश्य-
न्नूलं प्रकाशं ननु देवतायाः ॥ २१ ॥

तस्याक्षियुग्मे विमले विशाले
शुक्राख्यतारायुगलं व्यराजीत् ।
ततः स बद्ध्वा करपद्मयुग्म-
मुपास्तिगीतं कृतवानपूर्वम् ॥ २२ ॥

किशोरकण्ठात्पिककाकलीव
    पीयूषधारा गलिता तदाभूत् ।
प्रशान्तिपूर्णस्य तपोवनस्य
    जातो विकम्पः प्रतिपत्रमध्ये ॥ २३ ॥

तदेव गानं न हि जातु पूर्वं
    नारीकृते केनचिदप्यकारि ।
आकर्णयत्तद्भुवि केवला सा
    विविक्तशैलोपरि निर्मलोषा ॥ २४ ॥

सुनील - निर्वाग् - जलधेस्तलेऽपि
    सन्ध्याश्रुणोच्चद् रववर्जिता च ।
तच्छ्रावमाले गलतीव चित्तं
    प्रालेयशीतैर्नयनाम्बुवर्षैः ॥ २५ ॥

(५)

वासोऽञ्चलेनाधरमापिधाय
    सर्वः पिशाचीनिकरोऽहसीद् हा ।
ईषद्भयस्य क्षणभाप्रकाश-
    स्तस्यास्फुरच्चक्षणि तापसस्य ॥ २६ ॥

संयुक्तपाणिस्त्वरितं व्यथार्ता
    समागमं तत्सविधे तदाहम् ।
तपोधनं तं विनयादवोचं,
    "दासी प्रभोऽहं चरणे समेता ॥ २७ ॥

तटं तमानीय तदङ्गमार्द्रं
    यत्नादमार्क्षं निजवाससाहम् ।
निषद्य भूमौ नतजानुरस्य
    पादावमार्जं चलकेशहस्तैः ॥ २८ ॥

अथोर्ध्ववक्त्रा नवमल्लिकेव
व्यलोकयं तं नयनोन्नयेन ।
नत्वा मुखं स्वं स हि तापसोऽपि
वक्त्रं ममापश्यदतः प्रहृष्टः ॥ २९ ॥

विलोकयन्त्याः प्रथमाङ्गनेक्षा-
मुग्धाक्षियुग्मं सरलं हि तस्य ।
ममान्तरस्थो महिमा रमण्या
उच्चैरकार्षीज्जयतूर्यनादम् ॥ ३० ॥

धन्योऽसि धातः, स्वयमस्मि धन्या,
सृष्टा यतोऽहं रमणीं विधाय ।
आपूर्य देहं नयने च तस्य
समुत्थितो मे जय एव विष्वक् ॥ ३१ ॥

स्नेहो जनन्याश्च, दया च नार्याः,
प्रीतिः कुमार्या नवनीरवा च ।
मच्चित्तवीणामृदुतन्त्रमध्ये
विमिश्रगीतिं ध्वनितामकार्षुः ॥ ३२ ॥

आख्यन्मुनिर्मन्मुखबद्धदृष्टिर्,
"आनायि देवेन दिवाद्य केन ।
स्पर्शस्त्वदीयोऽमृतसेककल्पो
दिव्या च भा ते नयने विभाति ॥" ३३ ॥

( ६ )

भो विज्ञमन्त्रिन् कुरु नोपहासं
व्यथार्तचित्ते न च कुन्तघातम् ।
भूलुण्ठितां मां प्रति सावमानां
कुरुष्व भूयो न हि चावमानम् ॥ ३४ ॥

मधौ निशायां कतिमुग्धचित्तै-
रमानि नाको मम देह एषः ।
श्रुतं तदानीं बहु चाटुवाक्यं
नैतादृशं सत्यवचस्तु जातु ॥ ३५ ॥

वदामि भूयो - ननु सत्यमेतत्
स्पर्धा न काचिन्मम विद्यतेऽत्र ।
न लोकतेऽलीकमृषेर्हि नेत्रं
न जातु मिथ्या रसनास्य वक्ति ॥ ३६ ॥

हे स्वार्थहालाहलजीर्ण वृद्ध !
द्वैधाकुलः पश्यसि विश्वमेतत् ।
सन्त्यक्षिण लग्नाः पुरपांशवस्ते
द्रष्टुं यथार्थं किमु मामलं स्याः ॥ ३७ ॥

जाता महर्षेर्दृशि देवताहं
नवं दिवानायि मया वहन्त्या ।
स्पर्शो मदीयोऽजनि देवपेयं
दिव्या च भा मे नयने व्यभासीत् ॥ ३८ ॥

न केवलाहं पदसेविकास्मि
क्षुधापहन्त्री तव लालसायाः ।
त्वमर्चनार्घ्यं शुचि चेददास्यः
सुधां हि दिव्यामहमप्यदास्यम् ॥ ३९ ॥

न देवतां मे भुवि कोऽप्ययाचत्
सर्वेऽनयन् केवललोष्टपिण्डम् ।
निर्वासितासौ ननु हेलया तैः
सुदुर्गमे चित्तवने विदूरे ॥ ४० ॥

यत्रैव गेहे विजने विमार्गे
शब्देन हीने गहने गभीरे ।
आयातपूर्वो न हि कोऽपि जातु
समागतस्तत्र स तापसो मे ॥ ४१ ॥

सुनिद्रितासीज्जलधेः प्रतीरे
या देवतैकार्चकवर्जिता मे ।
ऋषेः कुमारः समपूजयत्तां
पूजाप्रसूनैः प्रथमं सहर्षम् ॥ ४२ ॥

प्राबुद्ध हर्षाद् हृदि देवता मे
महांश्च हर्षोऽजनि भक्तचित्ते ।
इमां तु वार्ता द्वयमेव वेत्ति
मुनिश्च देवश्च, न कोऽपि चान्यः ॥ ४३ ॥

( ७ )

आख्यत्स भूयो मुखबद्धदृष्टिर्,
" हर्षस्य मूर्तिस्त्वमसि प्रकामा ।
समस्ति बाहौ तव दिव्यहर्षो
विभाति हर्षश्च पदं विचुम्ब्य ॥ ४४ ॥"

श्रुत्वा वचस्तन्नयने च दृष्ट्वा
जाताभिषिक्ता गलदश्रुपूरैः ।
सद्योऽन्तराद् धौतपवित्ररूपा
काचित्कुमारी बहिरागता मे ॥ ४५ ॥

ये नाम दीपा रतिरात्रिकाले
चिरासुकालं ज्वलिता ममासन् ।
निर्वापितास्ते सहसा सुदूरा-
देकेन केनापि नसोऽनिलेन ॥ ४६ ॥

प्रभातभानुः स्वकरं न्यधत्त
    सहोदराभो मम केशपाशे ।
वातः समेत्यापि तपोवनस्य
    स्वीयामकार्षीन्निमिषेण मां च ॥ ४७ ॥

( ८ )

हे वृद्ध ! मिथ्या जटिलास्ति धीस्ते
    वक्रं च धिग् धिग् हसितं तवास्तु ।
चित्तं मदीयं वचनं स्वकीयं
    प्रत्याहरत्वन्तरमर्ममध्ये ॥ ४८ ॥

दलं च ते पामरपापिनीनां
    हास्यं ह्यकार्षीत्कुटिलं यथा त्वम् ।
विलासलास्यैः परिवेष्ट्य तूर्णं
    भूयोऽकरोत्तं छलपाशबद्धम् ॥ ४९ ॥

वासोऽञ्चलानि व्यलुठन् धरण्यां
    बन्धात्कबर्याः स्खलिताश्च वेण्यः ।
लीलायितौ ताश्च करौ विधाय
    कुमारगात्रे कुसुमान्यवर्षन् ॥ ५० ॥

भो मत्कुमारानघ तापस, त्वां
    कुत्रान्तराले निदधामि हन्त ।
पिधातुमिच्छामि तवाक्षियुग्मं
    गूढ स्वमर्मस्थितवेदनाभिः ॥ ५१ ॥

शक्ताऽभविष्यं यदि नाम दग्धं
    हे मत्प्रभात प्रथमोदिताद्य ।
उषाभ्ररक्तां स्वकदीप्तलज्जा-
    माकृष्य गात्रं तव ह्याऽऽवरिष्यम् ॥ ५२ ॥

हे मे कृशानो तपसां निधे भो !
मा मा ग्रहीस्त्वं हुतजातमासाम् ।
भूत्वा स्वयं भस्म समावृणोमि
यस्त्वां, बलं तद्विधिना न दत्तम् ॥ ५३ ॥

धिगङ्गना धिक् शतकृत्व एता-
स्त्वां चापि धातर्गतलज्ज धिग् धिक् ।
धिक्कारगानै रमणीकुलस्य
दिशश्च सर्वा मुखरा अभूवन् ॥ ५४ ॥

लज्जाकुला दुःसहवेदनार्ता
लतेव लूना पतिता पृथिव्याम् ।
आचक्ष्यहं तं च तपोधनं, "भोः
क्षमस्व पापाम् अयि पुण्यवृत्त ॥ ५५ ॥

क्षमस्व दीनामपि मां क्षमस्व
क्षमस्व भूयः करुणानिधे माम् ।
धावन्त्यगच्छं हरिणीव विष्वग्
लज्जाशुगैर्मर्मणि विक्षताहम् ॥ ५६ ॥

रुदत्यवोचं पुनरार्तकण्ठा,
"क्षमस्व भो मामयि पुण्यराशे"।
श्रुत्वा वचो मे ह्यहसन् पिशाच्यः
पृथ्व्यां लुठन्त्यश्चपलाङ्गभङ्गैः ॥ ५७ ॥

मन्मूर्ध्नि वृक्षास्तु तपोवनस्य
दयार्द्रचित्ताः कुसुमान्यवर्षन् ।
दूराच्छ्रुतौ मे ध्वनिताभवच्च
वंशीस्वनाभा मधुरैकवाणी ॥ ५८ ॥

“ आनन्दपूर्णा तव नाम मूर्ति-
रानायि देवेन दिवाद्य केन ।
स्पर्शस्त्वदीयोऽमृतसेककल्पो
दिव्या च भा ते नयने विभाति ॥ ” ५९ ॥

ध्रुवं ह्यपश्यो निजदेवतां त्वं
भ्रान्तं न चासीत्सरलं तवाक्षि ।
स्वहस्तपूजाकुसुमानि मे त्वं
निधेहि मस्ते, भवनं नयामि ॥ ६० ॥

गन्धोऽर्चनोत्थस्तव देवतायाः
स्थाता चिरं व्याप्य मनोगृहं मे ।
जीवामि यावद्भुवनेऽहमत्र
रुद्धं विधास्ये प्रतिहारमस्य ॥ ६१ ॥

मन्त्रिन्, स हासः कुटिलः पुनस्ते !
नन्वस्तु देहो मम देवशून्यः ।
निर्मान्ति मृत्सप्रतिमां नरा यां
किं साधकास्तां न हि पूजयन्ति ॥ ६२ ॥

तां पूजयित्वा दिवसैकमात्रं
क्षिपन्ति ते तां सुचिराय वारि ।
विधाय तां क्रीडनकं कदाचित्
किं साथ पौरैः पुनरर्चितव्या ॥ ६३ ॥

गतं समाप्तिं यदि पूजनं मे
गतापि कोटिं मम जीवखेला ।
समाप्य पूजां मम देवताया
झम्पं प्रदाता क्षितिपिण्डमप्सु ॥ ६४ ॥

यदृच्छया त्वं हस राजमन्त्रिन्
    भूत्वा निजाहङ्कृतिपूर्णमत्तः ।
गृहाण दत्ताः सकलास्तु मुद्रा
    उपायनं तत्सहितं च मत्तः ॥ ६५ ॥

वृथा कथास्त्वं बहुला मयोक्त-
    श्चित्तं तदर्थं व्यथते मदीयम् ।
अधोगताया अपि मे रमण्याः
    स्मर्तव्यमेकं वचनं तु विज्ञ ॥ ६६ ॥

स्वबुद्धिशक्त्या विदितं हि सर्वं
    तथापि किञ्चिन्ननु शिष्टमस्ति ।
दैवेन बोध्यः सहसा हि यो यद्
    ऋते तदन्यो न हि बुध्यते तत् ॥ ६७ ॥

—: × :—

# गान्धार्या आवेदनम्

अनुवादक :— श्री फटिकलालदासः

दुर्योधनः तताभिवन्दे चरणौ तवाहम् ।

धृतराष्ट्रः सिद्धोऽभिसन्धिस्तव किं, दुरात्मन् ?

दुर्योधनः जयो हि लब्धः ।

धृतराष्ट्रः किमसौख्यमाप्तम् ?

दुर्योधनः जातोऽस्मि सम्यग् विजयी हि तात ॥

धृतराष्ट्रः अखण्डराज्यं समवाप्य हन्त
कुतः सुखं रे वद दुर्मते, ते ?

दुर्योधनः न कामयेऽहं स्वसुखं कदापि ।
जयो ह्यभीष्टो मम चास्त राजन्,
स एव लब्धो, विजयी ततोऽद्य ।
क्षुद्रेण सौख्येन कदापि तात
क्षत्रस्य नायाति शमं बुभुक्षा ।
प्रदीप्तजिह्वानलतापपक्-
मीर्ष्याब्धिमन्थोद्भव - देवपेयं
रसो जयस्याद्य मया निपीतः ।

जयी ततोऽस्म्यद्य, सुखी न तात ।
ऐक्येन बद्धाः कुरुपाण्डुपुत्राः
स्थिता यदैकत्र सुखी तदासं
यथा कलङ्कः शशिवत्समध्ये
निरस्तभीतिः क्षतिकीर्तिहीनः
सुखं समास्ते गगने निशायाम् ।
सुखी तदासं समयेऽपि यस्मिन्
गाण्डीवटङ्कारभयेन जिष्णो-
र्नायादरातिः प्रतिहारदेशे
दुग्ध्वा धरित्रीं निजबाहुवीर्यैः
स्वभ्रातृरागाददुर्यदांशं
ते पाण्डुपुत्राः सुखभाक् तदासम् ।
प्रपद्य भोगान् विविधान् नवांश्च
निश्चिन्तचित्तः कुतुकेन तिष्ठन्
सुखी तदासं सततं च तात ।
सुखं तदासीद् भुवि पाण्डवानां
यदाजघान प्रतिशब्दघोरो
जयध्वनिः कौरवकर्णरन्ध्रं,
यदा च कुन्तीसुतकीर्तिबिम्बं
समुज्ज्वलेनाङ्गुलिना कुरूणां
कक्षान्धकारं प्रकटं चकार ।
निर्वाप्य सर्वं भवतश्च तेज-
स्तले गरिम्णो जयिपाण्डवानां
गृढस्तथा स्निग्धसुशान्तरूपं
मण्डूककल्पो जडतान्धुमध्ये
यदा न्यवात्सं सुखवांस्तदासम् ।
पराभवं तेऽद्य समावहन्तो

गच्छन्त्यरण्यं तनयास्तु पाण्डोः !
जयोऽद्य लब्धो, न सुखं हि तात ।

धृतराष्ट्रः धिग् द्रोहबुद्धिं स्वजनेषु जाल्म ।
किं विस्मृतं यत्कुरुपाण्डवानां
पितामहोऽत्र स्थित एक एव ?

दुर्योधनः न विस्मृतं तात पितामहो य-
दस्माकमेको हि पुरा बभूव ।
तथापि तेजोधनमानशौर्यै-
र्वयं समाना न हि पाण्डुपुत्रैः ।
कश्चित्परश्चेद्बहुदूरसंस्थो
जेताऽभविष्यन्निजशौर्यवीर्यैः
क्षोभोऽभविष्यन्मम नैव तत्र ।
मध्याह्नसूर्यं प्रति नैशचन्द्रः
कदापि पुष्णाति न वैरिभावम् ।
प्राच्यामुषायामुदयाद्रिशृङ्गे
न भ्रातृसूर्यद्वयमस्ति किन्तु ।
यद् द्वन्द्वमास्त त्रुटितं तदद्य,
वर्तेऽहमेकोऽद्य जयेन युक्तः ।

धृतराष्ट्रः नीचेयमीर्ष्या सविषा भुजङ्गी ।

दुर्योधनः ईर्ष्या न नीचा, महती परं सा ।
सा नाम गण्या बृहतां स्वधर्मः ।
वनस्पतीनां युगलं वनेऽपि
धत्ते स्वमध्ये व्यवधानमेकम्;
लक्षं तु नीचानि परस्पराङ्गे
विलीनगात्राणि तृणानि सन्ति ।

तिष्ठन्त्यसंख्यानि तथाम्बरे च
सौभ्रात्रबद्धानि सदैव भानि;
किन्त्वत्र चन्द्रस्तपनोऽद्वितीयः ।
अस्तं गता पाण्डुशशाङ्कलेखा,
वितिष्ठते तत् कुरुसूर्य एकः ।
अतो हि तातात्र जयी भवामि ।

**धृतराष्ट्रः** पराजितस्तिष्ठति किन्तु धर्मः ।

**दुर्योधनः** न लोकधर्मेण स राजधर्मः
पितः समानो भवतीह जातु ।
नृणां समाजे समकक्षलोकः
सुहृत्सहायोऽस्त्यनुरागबद्धः ।
एकेश्वरः किन्तु नृपो हि लोके ।
समानमानात् समवीर्यशत्रो-
र्नान्योऽस्ति कश्चिद्भुवि तस्य तुल्यः ।
चिन्तानिमित्तं, पदमापदां स,
पुरोऽन्तरालो, भयमेव पश्चा-
दहर्निशं गौरव - शक्ति - नाशी,
भागापहारी निजसम्पदां तु ।
क्षुद्रो जनो जातु बलं विभज्य
मित्रेण सार्धं न बलेन हीनः ।
खण्डीकृतः किन्तु नृपस्य दण्ड-
स्तस्यैव शक्तेः क्षयकारणं स्यात् ।
सर्वेभ्य ऊर्ध्वं निजमस्तकं चे-
देको न राजा सततं निदध्याद्,
दूराद्धहोश्चेद् बहवो हि लोका
अकम्प्रमन्याहतमुद्धतं च

शिरोऽस्य पश्येयुरनारतं न,
दूरे बहौ तर्हि कथं स्थितः स्या-
न्नृणां बहूनामुपरि स्वकस्य
दृष्टेः प्रचारो दृढशासनस्य ?
विराजते हा भुवि राजधर्मे
न भ्रातृधर्मो, न च बन्धुधर्मः ।
एकोऽस्ति तस्मिञ्जयधर्म एव ।
अतः कृतार्थोऽस्मि जयी च राजन् ।
अपागतोऽद्य व्यवधानकर्ता
स पञ्चचूडात्मकगौरवाद्रि-
र्नतः पुरस्तान्मम पाण्डवानाम् ।

धृतराष्ट्रः द्यूतेन जित्वा कपटेन लब्धं
यद्, वीतलज्ज स्वजयं तमात्थ ?
प्रजायते ते किमनेन गर्वः ?

दुर्योधनः यस्मिन् बलं यस्य तदेव तस्य
युद्धार्थमस्त्रं परिगण्यतेऽत्र ।
समो न लोको नख - दन्त - वीर्यै -
र्व्याघ्रैररण्ये न हि वेत्ति कस्तत् ?
तथापि हत्वा वद लज्जतेऽत्र
कोऽधिज्यधन्वा पुरुषः शरैस्तान् ?
प्रदाय झम्पं मरणस्य मध्ये ?
करोति मूढो हि यदात्मदानं
न जातु युद्धं कथये पितस्तत् ।
लक्ष्यं हि युद्धे जयलाभ एकम् ।
जयः स लब्धोऽद्य यतो हि तात,
गर्वस्ततो मे — गणये न मार्गम् ।

**धृतराष्ट्रः** अहो जयी त्वं यत एव वत्स
तवाद्य निन्दा कुरुतेऽत्र पूर्णं
धिक्कारशब्दैर्भुवनं नभश्च ।

**दुर्योधनः** बिभेमि निन्दावचनान्न भूयो,
निहन्मि कण्ठं ह्यवरुध्य तस्य ।
मूकां प्रकुर्वे मुखरां पुरीं मे
समुद्धतां तद्रसनां निपीडय
मत्पादपीठस्य तले प्रसह्य ।
श्रुतं मया कालमियन्तमत्र
निरुत्तरेणैव वचः प्रजानां,—
"दुर्योधनः क्रूरमनाः", "स पापो",
"दुर्योधनो नीचमतिः परं" च ।
किन्त्वद्य धृत्वा नृप राजदण्ड-
माबालवृद्धं पुरुषान् स्त्रियश्च
सर्वाः प्रजा मे ननु वाचयामि,—
"दुर्योधनोऽतिप्रबलो नृपालो,"
"दुर्योधनो न क्षमते स्वनिन्दा-
मालोचनां वा निजकर्मराजेः",
"दुर्योधनः स्वं वहते हि नाम
सगौरवं स्वेन करेण नित्यम् ।"

**धृतराष्ट्रः** निशम्यतां वत्स वचो ममेदं ।
निर्वासिता चेद्रसनाग्रनिन्दा
गूढान्धकारे हृदयस्य निम्ने,
तत्र स्थिता सा सततं तनोति
गभीरमूलं जटिलं प्रसारि,
करोति चित्तं च विषेण तिक्तम् ।

सुचञ्चला सा रसनाग्रसंस्था
नृत्यं विधाय त्वरितं तु याति
श्रमेण खिन्ना प्रशमं चिराय ।
तस्यै न यच्छावसरं स्वशक्ते-
र्हृद्गुप्तदुर्गे परिवर्धनाय ।
सम्प्रीतिमन्त्रैः सहवेणुवाद्यैः
सुस्मेरवक्त्रो वशमानयंस्ता
निन्दाभुजङ्गीः कुरु वत्स बन्दीः ।

**दुर्योधनः** अव्यक्तनिन्दा नृपगौरवस्य
क्षतिं विधत्ते न हि जातु काञ्चित् ।
भ्रूक्षेपमात्रं न करोमि तत्र ।
प्रीतेरभावे मम नास्ति खेदः,
स्पर्धां तु राजन्न हि मर्षयामि ।
स्वाधीनकामप्रभवं यदेव
प्रीत्यर्पणं, तेन न मेऽस्ति कार्यम् ।
तां प्रीतिभिक्षां सततं ददाति
दीनेषु दीनोऽपि जनः पृथिव्याः ।
प्रीतिं तदीयां वितरन्तु लोका
निजाखुभुग्भ्यो गृहपालितेभ्यो,
द्वारस्थितेभ्यः पथि कुक्कुरेभ्य-
स्तेभ्योऽथवा दुर्गतपाण्डवेभ्यो—
न तत्र काचिन्ममता ममास्ति ।
इष्टं भयं मे प्रकृतेः सकाशा-
च्छुल्कं भवेत्तन्मम नाम राज्ञः ।
सुदर्पितानां प्रविनाश्य दर्पं
काङ्क्षामि नित्यं जयमेव लोके ।

निवेदनं मे शृणु तात किञ्चित् ।
सिंहासनं ते परिवृत्य नित्यं
स्थिता इयन्तं समयं हि यावत्
त एव लोका मम निन्दका ये
सृष्टा त्वया मे व्यवधानमेकं
प्राचीरगात्रेष्विव शल्यवृक्षाः ।
पाण्डोः सुतानां गुणराशिगीत-
मश्रावयंस्ते, मम सानुजस्य
तीव्रां च निन्दां नियतं भवन्तम् ।
इत्थं वयं स्नेहधनात् पितुस्ते
निर्वासिता हन्त चिरादभूम ।
इत्थं तथाशैशवमेव सर्वे
जाता वयं हीनबला भृशं च ।
पाषाणबाधाकुलितेव सिन्धुः
स्नेहस्य धारा जनकस्य रुद्धा
शीर्णाऽभवत्सा गतिशक्तिहीना,
क्षीणा वयं चापि गतासुकल्पाः ।
निर्बाधयानां समवाप्य तां तु
स्फीता अभूवन् खलु पाण्डवास्ते ।
अद्य प्रभृत्येव न निन्दकांश्चेद्
भीष्मप्रमुख्यान् विदुरादिसङ्घान्
दूरान् विधत्से मम राजपीठात्,
पदे पदे ते यदि विज्ञवेशा
हितानि धर्म्याणि वचःशतानि
साधूपदेशच्छलतो निगद्य
धिक्कारनिन्दावचनैरजस्रं
छिन्दन्ति राज्ञो मम कर्मबन्धं,

कुर्वन्ति दण्डं मम भारवन्तं,
द्वैधं वहन्ते नृपशक्तिमध्ये,
लज्जावमानैरथवा किरीटं
म्लानं प्रकुर्वन्ति, तदा क्षमस्व
दोषं महाराज, न कार्यमस्ति
सिंहासने कण्टकशय्यया मे ।
जितस्य जेतुः परिवृत्तिकृत्या
प्रदाय राज्यं मम पाण्डवेभ्यः
स्वीकृत्य तेषां वनवासदुःखं
निर्वासितः स्यां स्वयमेव तात ।

**धृतराष्ट्रः** हा वत्स, किं त्वं कुरुषेऽभिमानम् ?
स्नेहः पितुस्ते यदि नाशमैष्य-
च्छ्रुत्वा कठोरां सुहृदुक्तनिन्दां
तदाऽभविष्यन्ननु मङ्गलं नौ ।
स्नेहो ममैयांस्त्वयि विद्यते यद्
विनाश्य सर्वां मतिमात्मनो हा
करोम्यधर्मेण सदैव सख्यं,
तेनापि सार्धं तव सर्वनाशम् ।
स्नेहो ममैयान्न हि विद्यते चेत्
कथं त्वदर्थं कुरुवंशरूपे
पुरातनेऽस्मिन् सुमहत्यरण्ये
कालानलं वै ज्वलयामि घोरम् ?
तथापि दोषं प्रददासि वत्स
स्नेहो न मेऽस्तीति निदारुणं किम् ?
कालद्विजिह्वं मणिलोलुपः सन्
यमिष्टवांस्त्व स्वकरेण धृत्वा

फणं हि तस्यार्पितवान् करे ते ।
अन्धोऽहमन्धो बहिरन्तरे च
त्वया प्रयामि प्रलयान्धकारे ।
हाहारवैर्बन्धुजना: समन्ता-
न्निवारयन्ति प्रसभं सदा मां,
निशाचरा गृध्रशिवाश्च सर्वे
ककुप्सु शब्दैरशिवै रसन्ति,
पदे पदे मे सकला हि मार्गाः
सङ्कीर्णतां यान्ति पुरः स्थिताश्च,
विपन्निपातोरथभयेन गात्रं
प्रजायते कण्टकितं मदीयं,
तथापि हस्तेन दृढेन बद्ध्वा
भयङ्करस्नेहवशादरे त्वां
स्ववत्समध्येऽनिलवेगशील
उल्कातपे मत्तविमूढहासै-
र्याम्यन्धकारः कवले च मृत्योः ।
एकावहं त्वं च, तथान्यसङ्गी
स वज्रमुष्टिर्हृदि संस्थितो यः
सर्वां हि वेत्त्यन्तरगूढवार्तां,
यामस्त्रयः सम्मुखदृष्टिहीनाः
पश्चात् स्थितानामवमत्य चापि
निषेधवाणीं सुहृदां जनानां
निम्ने निपातस्य निदारुणस्य
करालमाकर्षणमात्रमाप्त्वा ।
चैतन्यमाविर्भवितैकदा ते
यदा विधातुर्द्रुघणो निमेषात्
प्रपन्नकालः पतिता हि मूर्ध्नि ।

कालः स किन्तु ध्रुवमस्ति दूरे ।
तस्मात्तु पूर्वं कुरु संशयं न
स्नेहे पितुर्वत्स सुविद्यमाने,
नालिङ्गनं ते शिथिलं विधेहि,
मुषाण सर्वाणि धनानि चैव
क्षिप्रेण हस्तेन यथेच्छमत्र ।
निःशत्रुपृथ्व्येकनराधिपः सन्
सुखी भव त्वं विजयी च वत्स ।
रे वादयन्तां जयवाद्यमेके,
शून्ये तथान्ये त्वरितं समन्ता-
ज्जयध्वजाश्चापि समुन्नयन्तु ।
जयोत्सवे नोऽद्यतने न धर्मो
न न्याय-नीती, न च मित्र-बन्धू,
न सञ्जयो, नो विदुरो, न भीष्मो,
न लोकनिन्दा, न च लोकलज्जा
स्थास्यन्ति, नो सा कुरुराजलक्ष्मीः ।
वत्स्यन्ति तत्रैव स केवलोऽन्धः
पिता च पुत्रश्च समानमन्धः,
कालान्तकः सोऽपि यमस्तृतीयः,
स्नेहस्तथान्धो जनकस्य चापि,
शापश्च धातुर्न हि कश्चिदन्यः ।

(चरस्य प्रवेशः)

**चरः** अहो महाराज पुरस्थविप्रा
हित्वाग्निहोत्रादिकनित्यकृत्यं
देवार्चनं सान्ध्यमुपासनं च

तिष्ठन्ति सर्वे मिलिता विषण्णा-
श्चतुष्पथे पाण्डुसुतानपेक्ष्य ।
न कोऽपि पौरः स्थित एव गेहे,
पण्यस्य शाला अपि सन्ति रुद्धाः
आसन्नसन्ध्यासमयेऽपि दीपा
ज्वलन्ति नो वा पुरमन्दिरेषु ।
ध्वनन्ति देवालयकक्षमध्ये
न तूर्यभेर्यो, न च शङ्खघण्टाः ।
शोकाकुलास्ते पुरुषाः स्त्रियश्च
दलैर्निबद्धाः सजलाक्षियुग्मा
दरिद्रवेशैरभितः पुरस्य
द्वारोपकण्ठं सहिताश्चलन्ति ।

**दुर्योधनः** जानन्ति मूढा हतदैवता न
दुर्योधनस्तिष्ठति यत्प्रबुद्धः ।
समागतं दुर्दिनमेव तेषाम् ।
राज्ञः प्रजानां भविता हि मध्ये
घनिष्ठघोरो ननु संस्तवोऽद्य ।
पश्यामि नूनं च कियन्त्यहानि
स्पर्धा प्रजानामथवा निरस्त्र-
दर्पस्य हुङ्कार इहैव तिष्ठेत ।

**( प्रतीहारस्य प्रवेशः )**

**प्रतीहारः** गान्धारजन्मा महिषी नृपात्र
पादौ दिदृक्षुर्भवतः समेता ।

**धृतराष्ट्रः** तद्दर्शनं भोः प्रतिपालयामि ।

**दुर्योधनः** प्रयामि तस्माज्जनकाधुनाहम् ।

( प्रस्थानम् )

**धृतराष्ट्रः** तूर्णं पलायस्व - कथं सहेथाः
साध्व्या जनन्याः स्थिरदृष्टिवज्रम् ।
रे पुण्यभीरो, न हि केवलं ते
लज्जा भयं वास्ति मदन्तिके हा ।

( गान्धार्याः प्रवेशः )

**गान्धारी** अभ्यर्थनैका चरणे तवास्ति ।
रक्षानुनीतिं नृप तां मदीयाम् ।

**धृतराष्ट्रः** किं प्रार्थना तिष्ठति ते प्रियायाः
कदाप्यपूर्णा सविधे मदीये ?

**गान्धारी** त्यजाधुना तम् ।

**धृतराष्ट्रः** वद कं हि देवि ।
तमेव मूढं खलु यस्य पाप-
सङ्घर्षमाप्त्वा निशिताद्य जाता
धर्मस्य घोरा करवालधारा ।

**धृतराष्ट्रः** क एव सोऽस्ति, क्व च तस्य वासः ?
तस्याभिधेयं वद केवलं मे ।

**गान्धारी** दुर्योधनस्ते तनयः स एव ।

**धृतराष्ट्रः** त्याज्यः स किं देवि ?

**गान्धारी** ममानुरोधा-
ज्जहाहि तं दुर्मतिमाशु राजन् ।

धृतराष्ट्रः हे राजमातः, कठिनार्थना ते ।

गान्धारी याच्ञा किमेषा मम केवलायाः ?
दिवं गतानां कुरुवंशजाना-
मभ्यर्थनैषाप्यनिशं ह्यमीषाम् ।
त्यज त्यजेमं नरनाथ तूर्णं
येनार्दिता सा कुरुराजलक्ष्मीः
प्रतीक्षते साश्रुमुखी क्षणं च
नक्तन्दिवं राजकुलं विहातुम् ।

धृतराष्ट्रः उल्लङ्घितो येन कुलस्य धर्मो,
धर्मो हि शास्ता भवितैव तस्य ।
अहं पिता - नैव विचारकर्ता ।

गान्धारी किं खिन्न माता बत चास्मि तस्य ?
किं गर्भभारेण निपीड्यमाना
तं नापि हृत्पिण्डतले ह्यवोढम् ?
अङ्कस्थितस्यैव शिशोश्च तस्य
विलोकयन्त्या अकलङ्कवक्त्रं
किं दुग्धकुल्या स्तनयुग्मतो मे
स्नेहाकुलाया गलिता न चास्त ?
तरोर्लतायां मृदुवृन्तबद्धं
फलं यथा तिष्ठति तत्र लग्नं
बालस्तथासावपि कोमलेन
तद्वृन्तकल्पस्वभुजद्वयेन
देहं जनन्या मम नाम धृत्वा
बहूनि वर्षाणि न किं स्थितोऽभू-
दाकृष्य हासं मम वक्त्रहासा-

दसूनसुभ्यो वचनाद्वचश्च ?
तथापि वच्मि प्रसभं सुतं मे
त्यजाद्य राजन् हितकाम्यया तम् ।

**धृतराष्ट्रः** रक्षामि किं तं वद वर्जयित्वा ।

**गान्धारी** धर्मं तवैवं ननु रक्ष नाथ ।

**धृतराष्ट्रः** प्रदास्यते ते वद किं स धर्मः ।

**गान्धारी** नवं नवं दुःखमनेकशो मे ।
अधर्ममूल्येन सुखं सुतस्य
राज्यस्य शर्माणि तथा च जित्वा
कथं वहेयं सुचिरं स्ववत्से
संस्वज्य शल्यद्वयमेतदेव ?

**धृतराष्ट्रः** सकृत् प्रिये धर्मवशात् कुरूणां
द्यूताहृतं तद् धनराज्यजातं
प्रत्यार्पयं पाण्डुसुताय हृष्टः ।
परक्षणे श्रोत्रपथे मदीये
सुतानुबन्धी जनकस्य सोऽन्धः
स्नेहो ह्यगुञ्जीच्छतकृत्व एवम् ,—
"एतत्त्वया रे किमकारि मूढ ?
जीवत्यहो नैकपदे कदाचि-
न्नौकाद्वये कोऽपि पदे निधाय ।
पापप्रवाहे सकृदेवमत्र
कलेवरं मज्जयतां कुरूणां
स्थाने न धर्मेण कदापि सन्धिः ।
पापं हि पापप्रतिहारमित्वा
सहायतां प्रार्थयते सदैव ।

कृतं त्वया किं हतभाग्य वृद्ध
निर्बुद्धिकल्पेन निपत्य घोरे
निर्वीर्यलोकोचितसंशयेऽद्य ?
प्रत्यर्पिते किं पुनरेव राज्ये
कृतावमानक्षतचिह्नलेखा
पाण्डोः सुतानां हृदयाद्विलुम्पेत् ?
हुताशने तद्भवितैव नूनं
नवेन्धनानामिव भूरि दानम् ।
न शक्तशत्रुं परिपीड्य दभ्रं
कदापि मुञ्चेद्धृतशक्तिवृद्ध्यै ।
तमेव तस्माद्दलयस्व सद्यः —
पापेन कार्या विफला न लीला ।
आहूयते चेत्सकृदेव पापं
गृहाण वृत्वा सुचिरं तदेव ।"
सा पापबुद्धिर्नियतं मदीया
वात्सल्यरूपं जनितुर्गृहीत्वा
सुतीक्ष्णसूचीसमवाक्यशल्यै-
रविध्यदेवं कतिभिः श्रुती मे ।
निशम्य पापप्रियचारुवाचं
प्रत्यानयं पाण्डुसुतान् पुनस्तान् ।
द्यूतच्छलेन व्यसृजं सुदीर्घे
वनस्य वासेऽकरुणं च सर्वान् ।
हा धर्म ! हा रे हृदयप्रवृत्ते !
को वेत्ति संसारनिगूढमर्म ?

**गान्धारी** न जातु धर्मो भवतीह राजन्
सम्पत्तिहेतुर्न च सौख्यसेतुः ।

धर्मे हि धर्मस्य भवेत्समाप्तिः ।
निर्बोधनारी किमहं भवन्तं
धर्मस्य वाक्यं ननु बोधयामि
ज्ञातं हि सर्वं भवतो यतोऽस्ति ।
एष्यन्ति पाण्डोस्तनया अरण्यं
पणेन बद्धा यत एव तेऽत्र ।
आकारितास्ते न पुनः स्वराज्यं
प्रत्यागमिष्यन्त्यतिसत्यसन्धाः ।
विशालराज्ये कुरुपाण्डवाना-
मेकाधिपस्त्वं ननु राजसेऽद्य ।
तस्मादिदानीं विजहाहि पुत्रम् ।
दुःखं प्रदायानघपाण्डवेभ्यो
न भुङ्क्ष्व सौख्यं स्वयमेव पूर्णम् ।
न न्यायधर्मं विमुखं कुरुष्व
राजन् पुरूणामित एव हर्म्यात् ।
अद्यप्रभृत्येव सुदुःसहानि
दुःखानि सर्वाण्ययि धर्मराज
ममैव शीर्षोपरि सन्निधेहि ।

**धृतराष्ट्रः** सत्यो महादेवि तवोपदेश-
स्तीव्रा च वाणी समुदाहृता या ।

**गान्धारी** अधर्मवृक्षस्य फलं विषाक्तं
मधूपसृष्टं तनयोऽत्रचित्य
हर्षेण नृत्यं कुरुते स पापः ।
मा दा हि तस्मै समयं फलस्य
तस्योपभुक्त्यै नरनाथ कञ्चित् ।

बलेन हस्तादपहृत्य तच्च
क्षिप्त्वा च दूरे परिदेव्यतां सः ।
छलेन लब्धं धनराज्यजातं
पापेन पूर्णं च विहाय सोऽपि
निर्वासने गच्छतु पाण्डुपुत्रै-
र्वहन् स्वशीर्षे समदुःखभारम् ।

**धृतराष्ट्रः** धर्मे प्रमाणं हि विधिर्विधातु-
नित्यं स आस्ते भुवि जागरूकः,
समुद्यतस्तिष्ठति चास्य दण्डः ।
निजं हि कार्यं निजराज्यमध्ये
विधास्यते स स्वयमेव काले ।
पितास्मि - नो धर्मविधानकर्ता ।

**गान्धारी** न केवलस्त्वं जनकः सुतस्य ।
धर्मस्य सव्येतरपाणिभूतो
राजाधिराजोऽसि न किं पृथिव्याः ?
धर्मस्य रक्षा त्वयि तिष्ठतेऽतः ।
जनेषु कश्चिद्यदि गेहमध्यात्
साध्वीमदोषामबलां च नारी-
माकृष्य तस्याः कुरुतेऽवमानं,
पृच्छामि किं ते नृप तर्हि कार्यम् ?

**धृतराष्ट्रः** ददामि निर्वासनदण्डमस्मै ।

**गान्धारी** तदङ्गनानामवलम्ब्य पक्षं
तप्ताश्रुसिक्ता तव पादपीठे
सम्प्रार्थयेऽहं नृपते विचारम् ।

दुर्योधनस्ते तनयोऽपराधी—
प्रमाणमत्रास्ति भवान् स्वयं वै ।
स्वार्थान्धलोकद्वयमन्तराहं
पश्यामि नित्यं कलहं भवन्तम् ।
दोषं गुणं वास्य न जातु बुध्ये ।
लसन्त्यसंख्या इह सामभेद-
दण्डादिनीतिप्रचयाश्च पुंसाम् ।
विदन्ति सुष्ठु प्रकृतिं पुमांसः
परस्परस्यापि, वयं न जातु ।
शक्तेर्विरोधे प्रतिहन्ति शक्ति-
श्छलं छलस्यापि विरोधि नित्यं,
निहन्त्युपायश्च चिरादुपायम् ।
अन्तःपुरे शान्तगृहान्तराले
निजे निजे कर्मणि बद्धचित्ता
वयं वितिष्ठामह एव दूरे ।
शुद्धान्तमध्यं सबलं प्रविश्य
बाह्याद्विरोधाद्वहते विचित्य
यस्तत्र विद्वेषतनूनपातं,
भीत्या समर्थान् पुरुषान् विहाय
सहायशून्यां गृहधर्मशीलां
नारीं गृहीत्वा च य एव दुष्ट-
स्तत्पुण्यदेहोपरि पापहस्तं
निधाय तस्याः कुरुतेऽवमानं,
पत्या च सार्धं कलहं विधाय
पत्नीं निगृह्यास्य दुराशयी यो
गृह्णाति शोधं, न हि केवलं स
पाषण्डवर्यः, स नपुंसकोऽपि ।

क एव दण्डो वद तस्य, राजन् ?
निष्पापवंशे यदि वै पुरूणां
भवेदधर्मस्य नवावतार-
स्तं सोढुमर्हामि, सहे च नित्यम् ।
किन्तु प्रभो हन्त मनस्यकुर्वि
सन्मातृगर्वेण सदाहमेतद्
यद् वीरपुत्रा मम नाम गर्भे
जन्मालभन्ताप्रतिमाः कुलेऽस्मिन् ।
हा नाथ तस्मिन् दिवसे यदाह-
मश्रौषमार्तं द्रुपदात्मजायाः
कण्ठस्वरं तीव्रमभर्तृकाया
य एव लज्जा-करुणा-घृणानां
तापेन सर्वां द्रवतामनैषीत्
प्रासादपाषाणनिबद्धभित्तिं,
तदा गवाक्षं प्रसभं गताह-
मपश्यमस्या हि पतिव्रताया
आकृष्य वासो हसतः समुच्चैः
पिशाचपुत्रान् मम तत्सभायाम् ।
जानाति धर्मो दिवसे हि तस्मि-
श्चिराय चूर्णं मम नाम जातं
सर्वं जनन्या ह्यवशिष्टगर्वम् ।
हे राजसङ्घाः कुरुवंशजाताः !
क प्रस्थितं वो भरतस्य वर्षा-
द्दीप्तं निजं पौरुषमद्य हन्त ।
महारथा भोः, जडमूर्तिकल्पा
यूयं सभायां सकलाः स्थिता हा
परस्परास्यं ह्यवलोकयन्तः ।

एकेऽहसन्नोष्ठविकुञ्चनेन,
वाचं निगूढां कुतुकेन काश्चित्
कर्णे च कर्णे च परे ह्यवोचन् ।
कोषे कृपाणो गत एव निद्रां
वज्राङ्गनिःशेषितलुप्तविद्युद्
यथाम्बरे तिष्ठति मीलिताक्षी ।
अभ्यर्थनां मे शृणु नाथ राजन् ।
निराकुरु त्वं मम नाम मातुः
सुदुःसहां तां परमां हि लज्जां ;
क्षत्रस्य भूपोद्धर वीरधर्मं ;
पदाहतं चापि पतिव्रताया
विद्रावय क्रन्दितमाशु देव ;
न्यायस्य धर्मे ह्यधुना विलुप्ते
पुनश्च राजन् भव मानशीलो
जहीहि दुर्योधनमात्मपुत्रम् ।

धृतराष्ट्रः त्वं केवलं हा परितापवह्नि-
सुजर्जरे मे हृदये करोषि
वृथाहतिं देव्यधुना कठोराम् ।

गान्धारी शतेन गुण्या किमु वेदना मे
दुनोति चित्तं न हि नाथ नित्यम् ?
दण्डस्य दाता सह दण्डितेन
यदाश्रुपातं कुरुते समानां
प्राप्याहतिं नाथ तदा विचारः
स एव गण्यो भुवि सर्वमुख्यः ।
न दूयते यस्य कृते मनः स्वं
तस्मै मतं स्यान्नु दण्डदानं

निपीडनं वै प्रबलस्य घोरम् ।
यद्दण्डदुःखं तनयाय दातुं
नालं स्वयं त्वं न हि तत्प्रदेयं
कस्मैचिदेवान्यजनाय जातु ।
यो नैव पुत्रस्तव नाथ विद्धि ।
तस्यापि कश्चिज्जनकोऽस्ति लोके ।
भविष्यसि त्वं सविधे हि तस्य
विचारकर्ता परमापराद्धः ।
श्रुतं मया यद्भुवनस्य कर्तुः
सर्वे वयं सन्ततयो भवामः ।
स्वयं विचारं निजसन्ततीनां
करोति नारायण एव सोऽयम् ।
दत्ते स दुःखं, लभतेऽपि दुःखम् ।
नोचेद्विचारे वद कोऽधिकार-
स्तस्यात्र लोकेऽपि निजेन सृष्टे ।
निर्बुद्धिनार्या निजचित्तमध्ये
प्राप्ता मयैषा ननु शास्त्रसिद्धिः ।
पापं स्वपुत्र यदि निर्विचारं
राजाधिराजः क्षमसे, तदा त्वं
यं यं हि दण्डं धृतधर्मदण्डः
प्रादा इयन्तं समयं हि यावत्
कृतागसे लोकगणाय भूप,
प्रत्यावृतः सन् स स दण्ड एव
दण्डस्य कर्तारमसंशयं त्वां
मूर्ध्न्याहनिष्यत्यधुना प्रसह्य ।
स न्यायधर्मेण कृतो विचारः
कठोरपापस्य तनुं विगृह्य

संस्थास्यते ते हृदयं निपीड्य ।
पापं सुतं तद्विजहाहि राजन् ।

धृतराष्ट्रः वाचं प्रिये संहर संहरेमां
छेत्तुं न शक्नोमि विमोहपाशम् ।
धर्मस्य वाणी व्यथयत्यतस्ते
वृथैव चित्तं ननु केवलं मे ।
त्याज्यो विधातुस्तनयः सपाप-
स्ततं विहातुं स्वयमस्मि नालम् ।
तस्याहमेकं शरणं भवामि ।
मत्तोर्मिमध्ये भवसागरस्य
विसृष्टमङ्गं तनयेन येन
कथं त्यजेयं वद तं पिता सन् ।
नाशाऽस्ति तस्योद्धरणस्य कापि,
तथापि वत्से तमहं विधृत्य
तेनैव साकं समपापवारि
लम्फं प्रदायैकविनाशमेमि ।
कृत्वा द्विधा दुर्गतिमस्य भुञ्जे
सार्धं ह्यनेनार्धफलं स्वयं च ।
एषाऽद्वितीया मम सान्त्वनात्र ।
पश्याधुना नास्ति विचारकालो,
नास्ते च कश्चित्प्रतिकारमार्गः ।
भाव्यं यदासीद्घटितं तदेव,
फलं च भोग्यं भवितव्यतायाः ।

(प्रस्थानम्)

गान्धारी अश्रान्त रे मे स्थिरमेधि चित्त !
प्रतीक्ष्यतां भो नतमस्तकेन

विधेर्विधानं ह्यवलम्ब्य धैर्यम् ।
सुदीर्घरात्रेः परतो यदा स
जागर्ति कालो निजशुद्धिहेतो-
र्निदारुणं दुर्दिवसं मतं तत् ।
असह्यमुष्माणमवाप्य वायु-
र्गत्या विहीनः स्थिरतामुपेत्य
निद्राभिभूतोऽपि यथा कदाचि-
ज्जागर्त्यकस्माज्झटिकातनूभृद् ,
आक्रामति स्वं जडिमानमाशु,
स्वपुच्छघातैरिव वृश्चिकोऽन्धः
पुनः पुनर्भीषणमाहते च
दम्भोलिशूलैर्निजमुत्तमाङ्गं,
जागर्ति तद्वद्बलवान् स कालो,
लोका 'अकालं' सभयं यमाहुः ।
तूर्णं महाकालसमह्वयस्य
रे नारि, शीर्षं नमयास्य पादे ।
सुदूररुद्रालयसम्प्रवृत्तौ
वज्रस्य विस्फूर्जथुवत्करालः
संश्रूयतेऽसौ रथचक्रशब्दः ।
रे नारि, तत्पादतले निधेहि
त्वदार्तजीर्णं हृदयं वितत्य ।
वर्तस्व रे रे शतधा विदीर्ण-
हृत्पिण्डरक्ताब्जकृताञ्जलिस्त्वं
निर्वाग् विनिद्रा स्थिरपक्ष्मपङ्क्तिः ।
ततो यदोत्थास्यति धूलिरभ्रे,
विलापरावः सहसा च शून्ये,
कम्पिष्यते सा धरणी च पादे,

हा हा तदा रे हतभाग्यनारि,
हा राजभार्ये, शतवीरमातर्,
हा रे विलापध्वनिमात्रकर्त्रि,
तदा सुघोरं रजसां निकाये
विलोठ्य कायं नतमस्तका त्वं
निमील्य नेत्रे शयनं भजेथाः ।
नमो नमस्तत्परतो ध्रुवाय
ललाटलेखापरिणाम ! तुभ्यम् ।
नमो नमस्तेऽपि कठोरनिर्वाङ्-
निदारुणे भोः करुणे च शान्ते !
पुनश्च भूयोऽपि नमो नमस्ते
कल्याणकान्ते कठिने क्षमे ! च ।
विद्वेषवह्नेरपि भीषणायै
नमो नमो निर्वृतये च तुभ्यम् ।
श्मशानभस्माचितविग्रहायै
नमो नमो निष्कृतये परायै ।

**( दुर्योधनमहिष्या भानुमत्याः प्रवेशः )**

**( सख्यौ प्रति )**

**भानुमती** गृहाण शीर्षे सखि चन्द्रवक्त्रे
माल्यानि वासोमणिभूषणानि ।
त्वं चारुशीले भव तत्सहाया ।

**गान्धारी** वत्सेऽत्र धीरं चरणौ निधेहि ।
पृच्छामि तावद्भवने पुरूणां
महोत्सवः कोऽद्य भवेद् यदर्थं

त्वं यासि नूत्नाम्बरभूषणादि-
सुसज्जिता तत्र वधु प्रिये मे ।

**भानुमती** समागतः शत्रुपराभवस्य
शुभक्षणो देवि गृहेऽस्मदीये ।

**गान्धारी** यस्यैव शत्रुः स्वजनः कुटुम्ब
आत्मा तदीयः स्वयमस्ति शत्रुः।
प्राप्तानि कल्याणि कुतो नवानि
सद्यस्तवेमानि विभूषणानि ?

**भानुमती** तैः पाण्डुपुत्रैर्द्रुपदात्मजायै
दत्तानि वीर्यैर्भुवनं विजित्य
यावन्ति रत्नाङ्गदकुण्डलानि,
यज्ञस्य तस्मिन् दिवसे च यानि
गर्वाद्दधत्याच्छुरितो हि जातो
माणिक्यसूचीशतवक्त्रमध्यात्
सौभाग्यदर्पो वपुषश्च तस्या
विध्यन् हि वक्षः कुरुकामिनीनां,
तैरेव रत्नैर्मम सर्वमङ्गं
विभूष्य रिक्ता वनमेति साद्य ।

**गान्धारी** तथापि मूढेऽजनि हा न शिक्षा,
तैरेव रत्नैरियदेव गर्वम् !
कीदृक्षभीमा तव चाद्य कान्ति-
र्भयङ्करा च प्रलयस्य सज्जा !
युगान्तरोल्कासदृशानि किं न
केयूररत्नानि दहन्ति देहम् ?
ललाटिका रत्नमयी तवेयं
सौभाग्यवज्रानलहेतिरेव ।

सञ्जायते त्वामवलोकयन्त्या:
शरीरमध्ये दरकम्पनं मे,
विरौति चित्तं ह्यसकृत्सखेदम्
त्वदङ्गभूषाचयशिञ्जितानि
समावहन्ते मम भीतकर्णौ
घोरां शिवाताण्डवझङ्कृतिं च ।

**भानुमती** न वीरपत्न्यो वयमत्र भीता
दुर्भाग्यपातादपि राजमातः ।
जयोऽस्ति लोके नियतं यथात्र,
पराजयश्चापि मतस्तथैव ।
क्षत्रस्य राज्ञो महिमांशुमाली
विवर्तते चक्रगतिक्रमेण ।
मध्येऽन्तरिक्षं स्थितिमान् कदाचि-
त्कदापि सोऽस्ताचलमध्यवर्ती ।
वीराङ्गना क्षत्रसुताहमम्ब
स्मृत्वा कथां तां सततं वितिष्ठे
सन्त्रासवत्सोपरि भीतिशून्या ।
दुर्दैवयोगः समुपस्थितश्चे-
ज्जाने तदानीमुपहस्य भाग्यं
कथं कृतान्तं शरणं प्रयातुम् ।
पादौ भवत्याः परिषेव्य नित्यं
जीवामि मातः कथमत्र गेहे
तस्यैव शिक्षापि मयाभिलब्धा ।

**गान्धारी** अमङ्गलं चेन्, न हि केवलाया-
स्तवेह वत्से भविता तदेव ।
सार्धं दलैः स्वैर्धृतकालमूर्ति-

क्षुधोपशान्त्यै यतते यदा तद्
हाहारवः सञ्चरतीह दिक्षु,
सुवीरवक्षोरुधिरप्रवाहै-
र्मिलन्ति बह्व्यो विधवाश्रुधाराः,
शतानि नारीकरभूषणानां
पतन्ति हस्ताद् विगलन्ति हन्त
रसालकुञ्जे झटिकाहतानि
वृन्दान्यकस्मादिव मञ्जरीणाम् ।
मा मास्म भाङ्क्षीर्वधु बद्धसेतुम् ।
क्रीडाच्छलेनापि, सुदर्पिते भो,
गृहे ध्वजं नोन्नय विप्लवस्य ।
दुर्भाग्यरूपैः स्वजनस्य रत्नैः
गर्वं कृथा मा विहिताङ्गसज्जा ।
अद्य प्रभृत्येव विशुद्धचित्ता
व्रतोपवासांश्चर संयतात्मा ।
उन्मुच्य चैतं कचपाशबन्धं
सुशान्तचित्तार्चय देववृन्दम् ।
न चात्र सौभाग्यदिने सपापे
गर्वेण धातुर्जनयस्व लज्जाम् ।
नवानि वासोमणिभूषणानि
सद्यः स्वदेहादपसार्य वत्से
निवर्त्यतामुत्सववाद्यघोषः ।
राज्ञ्या विहायोचितडम्बराणि
गत्वाग्निसद्माह्वय पुत्रि सौम्यं
पुरोधसं त्वं पुरुवंशजानाम् ।
कायेन वाचा मनसा विशुद्धा
कालं प्रतीक्षस्व च तत्र वत्से ।

( भानुमत्याः प्रस्थानम् ।
द्रौपद्या सह पाण्डवानां प्रवेशः )

**युधिष्ठिरः** वनाभियानस्य पुरस्त्वदीयां
शुभाशिषं मङ्गलकामनां च
संलब्धुकामा वयमद्य मातः
समागतास्ते सविधे विनीताः ।

**गान्धारी** दुःखस्य रात्रिर्विलयं हि गन्ता,
सौभाग्यसूर्यो द्विगुणोज्ज्वलः स-
न्नुदेष्यते वः पुनरेव वत्साः ।
वायोः सकाशाद्बलमात्मकीयं,
भानोः सकाशादमितप्रतापं,
धैर्यं क्षमां चैव भुवः सकाशाद्
दुःखव्रता मे तनया लभध्वम् ।

( युधिष्ठिरं प्रति )

स्थित्वा सुगुप्तं तव दैन्यमध्ये
वत्सातिदीना कमलासना त्वां
प्रच्छन्नरूपेण सदानुयातु ।
तद्दुःखमध्यान्नृपतिश्रियं सा
सदाक्षयां कामपि सञ्चिनोतु ।
वनं गतस्यानुदिनं भयेन
शून्यं च निर्वासनमस्तु वत्स
ऋतेऽपि पापात्तव दुःखभोगो
युनक्तु चित्ते नवदीप्ततेजो
वह्नेः शिखायामिव दग्धहेम ।

भवेन्महादुःखमिदं सहायं
युष्माकमेकं वनवासकाले ।
स तेन दुःखेन हि धर्मराज
ऋणी विधिः स्थास्यति ते सकाशे
यदा स्वहस्तेन तदेव तेन
ऋणं स्वकीयं परिशोधनीयं
तदा पुरःस्थे पथि दैवतेषु
नरेषु को वा भविता प्रतीपः ?
पुत्रो मदीयः कृतवान् स पापः
पापानि युष्मान् प्रति यानि यानि
सर्वाणि तानि प्रसभं ममाशी-
श्छिनत्तु, पुत्राधिकपुत्रवृन्द ।

( द्रौपदीमालिङ्ग्य )

भूलुण्ठिते स्वर्णलते मदीये !
स्वर्भानुसंग्रस्तशशाङ्कलेखे !
वत्से स्वकीयं शिर उन्नमय्य
वाक्येऽवधानं कुरु मामकीने ।
तवापमानं कृतवान् य एव
तस्यापमानश्चिरकालमत्र
भूत्वा कलङ्कोऽक्षय एव तिष्ठेत् ।
पतिव्रतायास्तव योऽवमानो
नपुंसकानां करतोऽभिलब्धः
सर्वाङ्गनाभिर्जगतीतलस्य
समानभागैः स गृहीत एव ।
प्रयाहि वत्सेऽमलिनास्यपद्मा
सभर्तृका त्वं गहनाय साध्वी ।

विधाय दुःखानि सुखानि पुण्यात्
कुरुष्व नाकं तदरण्यभूमिम् ।
सुदुःसहां ते पतिलाञ्छनार्तिं
निखाय वत्से हृदि संलभस्व
पतिव्रतानां कृतिसार्थकत्वम् ।
प्रासादमध्ये दिवसं निशां च
सहस्रसम्भोगविलासराशे-
रायोजनानीह भवन्ति नित्यम् ।
एकाकिनी किन्तु वनस्थलीषु
भविष्यसि त्वं सकलस्य सौख्यं,
सर्वाश्रयः, सान्त्वन - शर्म - दात्री,
मूर्ता च सम्पत्, सहगामिनी च,
क्लान्तेश्च शान्तिः सुखमावहन्ती,
रुजं गतानां परमा च सेवा,
दुष्काललक्ष्मीः, निशि चन्द्रभाति-
रुषा च साक्षाद्विगृहीतमूर्तिः ।
एकाकिनी त्वं भवितासि तत्र
प्रीतिश्च सर्वा, सकला च सेवा,
माता च पत्नी च समं समन्तात् ।
पतिव्रता त्वं सितपद्मकल्पा
सुसौरभा गौरवमावहन्ती
राजिष्यसे पूर्णविकाशमाप्त्वा ।

—:*:—

# गीताञ्जलिः १

अनुवादकः—दुर्गादासगोस्वामी

## भारततीर्थम्

हे चित्त! जागृहि शनैर्मम पुण्यतीर्थे
नन्वत्र भारतमहानरसिन्धुतीरे।
स्थित्वोद्भुजस्त्विह मुहुर्नरदेवमीडे
सुच्छन्दसा तमपि नन्दित एव वन्दे ॥ १ ॥

ध्यानेन निश्चलतनुर्ननु भूधरोऽसौ
भूमिः पुनर्धृतनदीजपमालिकेयम्।
नित्यं निभालय पवित्रतरां धरित्री-
मत्रैव भारतमहानरसिन्धुतीरे ॥ २ ॥

आकारिताः कति नृणामिह केन धाराः
प्राप्ताः कुतः खररयाज्जलधौ च नष्टाः।
आर्योऽप्यनार्य इह स द्रविडोऽत्र चीनो
लीनः समं हि शकहूणकमोगलाद्यैः ॥ ३ ॥

द्वारं प्रतीच्यपिहितं कुरुतेऽद्य सर्वै-
रानीयते तदुपदा विमुखा न केचित्।
दानाप्तियोजनसमन्वयकारिणस्ते
नन्वत्र भारतमहानरसिन्धुतीरे ॥ ४ ॥

येऽप्यागमन्निह जयध्वनिनाजिमत्ता-
स्तीर्त्वा मरून् गिरिनदीविकटोच्चरावैः ।
दूरे न सन्ति निखिलाः किल ते मदन्त-
र्मच्छोणिते ध्वनति च स्वरचित्रतैषाम् ॥ ५ ॥

स्वच्छन्दतो ध्वन मुहुर्ननु रुद्रवीणे !
येऽद्यापि सन्ति घृणया मनुजाः सुदूरम् ।
एष्यन्ति तेऽप्यथ परीत्य तु बन्धनाशा-
दत्रैव भारतमहानरसिन्धुतीरे ॥ ६ ॥

अत्रैकदा निरवधिः प्रणवस्य नादो
मन्त्रैक्यतो हृदयतन्तुषु झङ्कृतोऽभूत् ।
हुत्वा बहून् स्वतपसा पुनरेकवह्नौ
प्राबोधयत् पृथुलहृत् परिहृत्य भेदान् ॥ ७ ॥

तत्साधनाभजनयोरिह यज्ञशाला-
द्वारं तु तिष्ठति निरर्गलमद्य तावत् ।
अत्राखिलव्यतिकरः शिरसानतेन
भावी च भारतमहानरसिन्धुतीरे ॥ ८ ॥

रक्ता शिखा ज्वलति दुःखभवाद्य तस्मिन्
होमानले हृदयकृन्नियतिस्तु सह्या ।
दुःखं मनो ! वह शृणु प्रमुदैकहूतिं
लज्जाभियौ जय निकारचयोऽप्यपास्ताम् ॥ ९ ॥

याते समाप्तिमिह दुःसहवेदनौघे
प्रादुर्भविष्यति महानिह कीदृगात्मा ।
प्रैति क्षपा पृथुगृहे च विबुध्यतेऽम्बा
पश्यात्र भारतमहानरसिन्धुतीरे ॥ १० ॥

आर्यैर्ह्यवार्य ! ननु हिन्दु-महम्मदीया-
वद्य त्वमाङ्गल ! झटित्यपि कृस्त-शिष्य !
विप्रैहि भोः ! शुचिमना धर सर्वहस्ता-
नेह्येहि हे पतित ! ते निकृतिर्निरास्ताम् ॥ ११ ॥

आयात मातुरिह नस्त्वरयाऽभिषेके
नापूरि मङ्गलघटस्त्वधुनापि सर्वैः ।
स्पृष्टेन तीर्थपयसा च शुचीकृतेन
हन्तात्र भारतमहानरसिन्धुतीरे ॥ १२ ॥

---

## आत्मत्राणम्

रक्षिष्यसि त्वमिह मां विपदीति नैषा
मत्प्रार्थनात्र मम भीर्न यथा तथास्तु ।
त्वं सान्त्वनां व्यथितचेतसि दुःखतापे
नैवार्पयेर्यदि तु दुःखजयी मम स्यात् ॥ १ ॥

संप्राप्यते यदि तु कोऽपि न मे सहायो
न क्षीयते निजबलं तु यथा तथास्ताम् ।
संसारतः क्षतिरुपैत्यपि वञ्चना चे-
दङ्गीकृतिर्मनसि मेऽपचयस्य मास्तु ॥ २ ॥

त्वं त्रास्यसे विपदि मामिति नार्थयेऽहं
शक्तिर्भवत्वपि तथा तु यथोत्तरेयम् ।
मां सान्त्वयेस्तु लघयन् यदि नैव भारं
वोढुं क्षमे ननु यथाहमयं तथास्तु ॥ ३ ॥

स्मर्तास्मि ते मुखमहं खलु नम्रमूर्ध्ना
सम्पद्दिने परमियं निखिला धरित्री ।
मां वञ्चयिष्यति यदा बत ! दुःखरात्रौ
त्वत्संशयो भवति मे न यथा तथास्ताम् ॥ ४ ॥

—: * :—

## (१०८)

### अपमानितः

हे दुर्भाग्य ! मम स्वदेश ! निकृतिं येषामकार्षीः पुरा
तस्यामेव च तैर्भविष्यसि समा लोकाधिकाराच्च यान् ।
निःसार्य प्रमुखे निधाय च तथाप्यङ्के निजे नाददाः
स्थानं त्वं भवितास्यहो ! जगति तैस्तुल्योऽपमानेऽखिलैः ॥ १ ॥

दूरात् स्पर्शमहो ! नृणां परिहरंस्त्वं प्रत्यहं लिप्तवान्
प्राणानां पुरुषं चिरेण घृणया द्वारे निषीदन् पुनः ।
दुर्भिक्षस्य विधेः सुदारुणरुषा तैर्भक्ष्यसे भागशः
सर्वैरन्नजलादिकञ्च निकृतौ भावी त्वमेतैः समः ॥ २ ॥

पीठात् स्वाद् उदचालयः सपदि तान् यत्र त्वमङ्ग ! स्वयं
तत्र त्वं त्वकृथाः स्वशक्तिमपि तैर्निर्वासितां हेलया ।
पादैः सा दलिता प्रयाति रजसि द्रागेहि तन्निम्नत-
स्त्राणं नास्ति तवान्यथा तु भवितास्येतैर्निकारे समः ॥ ३ ॥

नीचैः पातयसि त्वमत्र यमहो ! कर्ता स ते बन्धनं
पश्चात् स्थापयसि स्वयं च खलु यं स त्वां तथा कर्षति ।
अज्ञाने त्वमपावृणोस्तमसि यं प्रच्छाद्य ते मङ्गलं
दूरत्वं तनुते महत् स निकृतौ भावी त्वमेतैः समः ॥ ४ ॥

हाऽसम्मानभरः शिरस्यवतरत्येवं शताब्दीशतात्
किं मूर्ध्ना त्वमये ! तथापि न नृणां नारायणं वन्दसे ।
पश्यस्यानतदृक् तथापि भगवान् यच्चावतीर्णो नु किं
पांसौ निःस्वजनस्य तत्र निकृतौ भावी त्वमेतैः समः ॥ ५ ॥

द्वारे तिष्ठति ते न पश्यसि तु किं मृत्योः स दूतोऽपि ते
जातेः शापमहङ्कृतौ तमलिखद् यद्याह्वयस्यत्र नो ।
सर्वान् दूरमपास्व भोः ! परिवृतस्त्वञ्चाभिमानैस्ततो
मध्येमृत्यु चितास्थभस्मनि समः सर्वैर्भविष्यस्यहो ! ॥ ६ ॥

—:०:—

## (१४२)

## यात्रादिने

यात्रादिनेऽहं निखिलान् ब्रवीमि
वाणीमिमां यन्मम जीवनेऽस्मिन् ।
व्यलोकयं यच्च यदाप्नवं च
न काप्यहो ! तत्तुलनास्ति लोके ॥ १ ॥

ज्योतिःसमुद्रे शतपर्णपद्मं
यद्राजतेऽस्मिन्नपिबं मधूनि ।

तस्यैव तस्मादहमस्मि धन्यो
यात्रादिने नन्विति वेदयानि ॥ २ ॥

क्रीडामकार्षं किल विश्वरूप-
क्रीडागृहेऽस्मिन् कियदेव वाहम् ।
किञ्चापरूपं प्रणयादपश्यं
विस्फार्य तावन्नयनद्वयं मे ॥ ३ ॥

स्पर्शातिगो यः सकलेऽपि देहे
सोऽयं स्वयंग्राहमलम्भयन्माम् ।
शेषं स कुर्यादिह चेत् तथास्तु
यात्राक्षणे नन्विति वेदयानि ॥ ४ ॥

—: * :—

## (१४७)

### असमाप्तः

पूजाः समस्ताः खलु भूतलेऽस्मिन्
याताः समाप्तिं न हि जीवने याः ।
जानेऽङ्ग ! जाने न चिराय ताव-
देकान्ततस्ता अपि लोपमापन् ॥ १ ॥

व्यशीर्यत क्षोणितलेऽस्फुटद् यत्
पुष्पं तथा हारितवत्यपि स्वाम् ।
धारा नदी या मरुमार्गमध्ये
जानेऽङ्ग ! जानेऽस्ति न तद्विनाशः ॥ २ ॥

अद्यापि पश्चादवतिष्ठते य-
न्नूनं मदीये खलु जीवनेऽस्मिन् ।
जानेऽङ्ग ! जाने न हि जातुचित् तत्
पृथ्वीतलेऽभूद् वितथं नितान्तम् ॥ ३ ॥

अनागतानीह भवन्ति मे या-
न्यनाहतानीह च ते विपञ्चयाः ।
तन्त्रे ध्वनन्ति ध्रुवमेव जाने
जानेऽङ्ग ! नो तान्यपि लोपमापन् ॥ ४ ॥

---

(१४८)

## नमस्कारः

प्रभो ! प्रणत्या तु ममैकयैव
त्वदर्थया केवलमेकनत्या ।
लुठत्ययं मे सकलोऽपि देह-
स्त्वदीयसंसारभुवोऽङ्गनेऽस्मिन् ॥ १ ॥

यथा घनश्रावणमेघपुञ्जं
मनः समस्तं रसभारनम्रम् ।
तवालयद्वारि पतन्ममास्तां
नत्यैकया नाथ तवैकनत्या ॥ २ ॥

उद्वेलधाराश्च बहुस्वराणां
संमिश्रय गीतोच्चय आत्मलोपी ।
समाप्तिमाप्नोत्वपि नीरवाब्धौ
नत्यैकया नाथ ! तवैकनत्या ॥ ३ ॥

हंसा यथा मानसयात्रिणो मे
प्राणाः समस्ता दिवसक्षपौघान् ।
पारेमहामृत्यु तथोड्डयन्तां
नत्यैकया नाथ तवैकनत्या ॥ ४ ॥

—: * :—

# गीताञ्जलिः २

अनुवादकः—इन्द्रमोहनचक्रवर्त्ती

(१)

शिरो मे अयि! नमय तव चरणधूलितले।
सकलं मे अहङ्कारं मज्जय नयनजले।
कुर्वन्नात्मनो गौरवदानम्
आत्मन एव वृणे अपमानम्,
स्वमेव केवलं परिवेष्ट्याहं भ्रमामि पले पले।
सकलं मे अहङ्कारं मज्जय नयनजले।
मा भून्मम कोऽपि प्रचारः स्वकीये मे कार्ये
तवैव इच्छा भवतु पूर्णा मम जीवनमध्ये।
याचेऽहं तव परमशान्तिम्
प्राणस्ते धत्ते परमकान्तिम्,
तिष्ठ हे नाथ! मां व्यवधाय हृदयपद्मदले।
सकलं मे अहङ्कारं मज्जय नयनजले॥

(१७)

आलोकः क्नु अरे आलोकः।
विरहानलैर्ज्वालय तं ज्वालय।

विद्यते दीपो नास्ति च शिखा,
किमेतद् भाले आसीन्मे लिखा,
मरणं मम आसीदस्माच्छ्रेयः ।
विरहानलैः प्रदीपं प्रज्वालय ।

वेदनादूती गायति, अरे चित्तम्,
त्वामभि भगवान् जागर्ति नित्यम् ।

निशीथकाले घनान्धकारे
आह्वयति त्वां प्रेमाभिसारे,

प्रदाय दुःखं रक्षति तव मानम् ।
त्वामभि भगवान् जागर्ति चिरम् ।

गगनतलं मेघेन परिवृतम्,
वार्दलजलं पतति झरझरम् ।

घोरनिशायामद्य किमर्थं
सहसा जाग्रदेतन्मे चित्तं

कथं नु एवं व्यथया परिप्लुतम् ।
गगनतलं मेघेन परिवृतम् ।

क्षिपति विद्युत् क्षणिकाभां केवलम्,
निबिडतरतमो नयति नेत्रम् ।

न जाने क्व वा अनेकदूरे
रणितं गीतं गभीरस्वरे,

कृष्यते अभिपथं सकलचित्तम् ।
निबिडतरतमो विलग्ननेत्रम् ।

आलोकः क्व नु, क्व नु अरे आलोकः ।
विरहानलैर्ज्वालय, तं ज्वालय ।

ह्रियते मेघस्तथा पवनः,
काले प्रयाते का गतिर्मम,
घनतिमिरो निकष इव कृष्णः ।
निधाय चित्तं दीपं ज्वालय प्रेम्णः ।

(२०)

अद्य प्रवातरजन्यामभिसारस्तव,
प्राणसख ! हे बन्धो हे मम ।
आकाशो रौति हताशसमः,
नास्ति च निद्रा नयने मम,
मुक्त्वा द्वारं हे प्रियतम,
पश्यामि पुनः पुनः ।
प्राणसख ! हे बन्धो हे मम ।
बहिरिह न किञ्चित् पश्यामि,
क्व च ते पन्थास्तच्चिन्तयामि ।
सुदूरे क्व नु तटिनीपारे,
गहने क्व नु वनानीधारे
उत्तरणं हे तव ।
प्राणसख ! हे बन्धो हे मम ।

(२२)

त्वं कथमिह गानं कुरुषे गुणी,
अवागहं केवलं तच्छृणोमि ।
स्वरालोको वितनुते भुवनम्,
स्वरानिलश्चलोऽभिगगनम्,

भित्त्वा शिलां नीत्वा व्याकुलवेगं
स्यन्दमाना स्वरसुरधुनी ।

कामयेऽहं गातुमीदृशं स्वरम् ,
कण्ठे मम नाप्नोमि तं स्वरम् ।

किं नु मे कथा, कथा मे बाधते,
नीत्वा नतिं चित्तं मे देवते,

पातितोऽहं त्वया किंविधपाते
सर्वतो मे स्वरजालमजनि ।

(५८)

जीवनं यदा शुष्कायते
एहि करुणासारैः ।

सकलमाधुरी गुप्ता भवेत्
एहि गीतसुधारसैः ।

कर्म यदा प्रबलाकारं
गर्जदाच्छादयते सर्वं
हृदय प्रान्ते हे नीरवनाथ !
एहि शान्तचरणैः ।

आत्मानं यदा कृत्वा कृपणं
प्रान्ते तिष्ठति मनो दीनहीनं
मुक्त्वा द्वारं हे उदारनाथ !
एहि राजसमारोहैः ।

वासना यदि विपुलधूलिभि-
र्मोहयति अज्ञम् अन्धैस्तमोभिः
हे पवित्र ! हे अनिद्र !
एहि रौद्रालोकैः ।

(६५)

आह्वय, आह्वय माम् अयि !
तव स्निग्ध-शीतल-गभीर-
पवित्रान्धकारे ।

तुच्छदिनस्य क्लान्तिग्लानी
नयतो जीवनमभिधूलि
सर्वक्षणस्य वाङ्मनसयोः
सहस्रविकारे ।

मुक्तं कुरु माम्, अयि ! मुक्तं कुरु
तव निबिड-नीरवोदार-
निःसीमान्धकारे ।

नीरवरात्रौ संहृतवाक्
बहिर्मम बहिर्लीयेत,
आविर्भवतु अन्तरतमो
अखण्डाकारे ।

(६७)

पुष्पमिव स्वतः स्फुटयसि गानम्,
हे मम नाथ, एतद्धि तव दानम् ।

अये, पश्यन् तत् पुष्पम् आनन्दे अहं प्लवे
ममैतत् प्रतीत्य उपहारम् अहं ददे,

त्वं करेण तद्गृह्णासि[स्थितः] स्नेहस्मिते
दययैव प्रभो, रक्षसि ममाभिमानम् ।
तत्परं यदि पूजावेलाप्रयाते
जीर्यन्मे गानं धरणीधूलौ लीयते,

तदा न च कापि क्षतिः—तव करतलपुटे
अजस्रं धनं लुठति कति लीयते,

तानि स्फुटन्ति मम जीवने कालाय कियते
कृत्वा चिराय सार्थकं मे प्राणम् ।

—: * :—

# गीताञ्जलिः ३

अनुवादकः—शैलेन्द्रनाथ मौलिकः

(१)

मम प्रणतं शिरः क्रियतां तव
चरणधूलितले ।
सकलमभिमानं मम
मज्जय दृशोर्जले ।

दातुं निजाय गरिमाणं
करोमि केवलमपमानम्
निजभावरभावरं सदा
भ्रमामि च पले पले ।

सकलमभिमानं मम
मज्जय दृशोर्जले ।

करोमि यथा न निजविघोषं
स्वकीयकार्यं मम
जीवितेन तथा तव मनोरथः
विधीयतां पूर्णः

याच्यते मया चरमशान्तिः
प्राणेषु तव परमकान्तिः

मामावृत्य निवसतु मम

हृदयपद्मदले ।

सकलमभिमानं मम

मज्जय दृशोर्जले ।

(४)

'विपदो मम रक्षां कुरु'

नेयं मम प्रार्थना

विपदि भीतिहीनं कुरु माम् ।

दुःखतापव्यथितहृदि

नैव दीयते सान्त्वना

कृपया दुःखजयिनं कुरु ताम् ।

सहायो मम यदि न मिलति

बलं तदा न दलतु कदापि

भुवि कदापि घटितेऽनिष्टे

लब्धा यदा वञ्चना

मन्ये न जातु क्षीणं तदा माम्

त्वं हि मम त्राता भवितासि

नेयं मम प्रार्थना

तरितुं मम शक्तिः सदास्ताम्

भारान् मम लघून् विधाय

दीयते नैव सान्त्वना

विधेहि तथा वहामि यथा तान् ।

सौख्यवासरे नम्रशिरसा

मुखं तेऽभिज्ञास्ये चेतसा

दुःखनिशायां निखिलजनैः
क्रियते यदा वञ्चना
ईक्षे न जातु सभयाकुलस्त्वाम् ।
मानसं मम विकचं कुरु
मानसचर हे ।
कुरु निर्मलमुज्ज्वलमयि
चिरसुन्दर हे ।
उद्यतमतिप्रबुद्धमपि
निर्भयं कुरु हे
सुशिवमनलसमतिनिःसंशयं
कुरु हे ।
आन्तरं मम कुरु विकचम्
आन्तरतर हे ।
योजय मां निखिलसङ्गे
मुञ्च हे मम बन्धम्
सञ्चारय सकलकर्मसु
शान्तं तवच्छन्दः ।
चरणपद्मे चित्तं मम निष्पन्दितं कुरु हे
कुरु नन्दितमतिनन्दितमभिनन्दितं हे ।
आन्तरं मम विकचं कुरु आन्तरतर हे ।

( ६ )

प्रेम-प्राण-गेय-गन्धालोकपुलकैः
परिप्लाव्याखिलद्युलोके भूलोके
वर्षति त्वदमलामृतझरः ।
समन्ततोऽद्य त्रुटितस्सकलबन्धः
जागर्तीह भो विग्रहवानानन्दः

जीवनमाविर्भवति पीयूषभरम् ।
चेतना मम कल्याणरससरसा
शतदलमिव पूर्णपरमहर्षा
तव चरणान्तसमर्पितमधुधारा ।
नीरवालोकप्रबुद्धहृदः प्रान्ते
उदारोषायामरुणोदयकान्तिः
अपसृतावृतिरलसनयनतारा ।

(१२५)

ममेयं गीतिः जहाति सा
कृत्स्नभूषणम्
त्वाम् निकषा न पाति सा
सज्जाभिमानम्
अलंकारो मध्यपाती
सङ्गमन्तरालयति
तस्य ध्वनिरावृणोति
तव भाषणम् ।
तवाग्रतः शोभते न
मत्कविदम्भः
महाकवे, त्वच्चरणे
स्वं दातुकामोऽहम् ।
जीवितेन चाहं यते
वेणुमृजुं चेद्विदधे
स्वरेण ते कुर्वीथास्तद्-
रन्ध्रपूरणम् ।

—: * :—

## गीताञ्जलिः ४

अनुवादक :—एस्. एल्. ताम्बे

(११)

काशतृणानां रचितो गुच्छः । शेफालिकया माला बद्धा ॥ १ ॥
नवधान्यानां कुसुममञ्जरीः । आनयामि तेऽलंकाराय ॥ २ ॥
शुभ्रघनानां रथमारूढा । शरल्लक्ष्मि, नीलेन वर्त्मना ॥ ३ ॥
धौतश्यामलतेजउज्ज्वले । एहि वनगिरौ लसत्प्रकाशे ॥ ४ ॥
शीतबिन्दुयुतसितजलजानां । धारय शीर्षे सुन्दरमुकुटम् ॥ ५ ॥
गङ्गातीरे निभृतनिकुञ्जे । गलितानां मालतीसुमानां ॥ ६ ॥
तव सेवायै विततमासनं । तव चरणोपरि पक्षोन्मेषम् ॥ ७ ॥
कर्तुमना भ्राम्यति कलहंसः । मानससरसो निवृत्तगमनः ॥ ८ ॥
त्वत्स्वर्णवीणातन्तुषु मधुरं । झङ्कारयुतं गुञ्जनगानम् ॥ ९ ॥
तनु, तेन तदा मञ्जुनिनादाः । हास्यतरङ्गैर्ये परिपूर्णाः ॥ १० ॥
पश्याश्चर्यं क्षणे भवेयुः । अश्रूणां धारासु परिणताः ॥ ११ ॥
स्पर्शमणिस्तव केशकलापे । वारंवारं भृशं चकास्ति ॥ १२ ॥
क्षणमात्रं तव सदयकरेण । चित्तायसि मम चालय, याचे ॥ १३ ॥
तदा तेन मम सकलभावनाः । स्वर्णकान्तिभासुरा भवेयुः ॥ १४ ॥
तमश्च निखिलं दीप्तिमद्भवेत् । ईदृङ् नूनं तव सामर्थ्यम् ॥ १५ ॥

—: * :—

मातस्त्वदीयं पश्यामि दयार्द्रं चरणद्वयम् ।
अरुणस्य नवांशूनां रूपेण प्रकटीकृतम् ॥ १ ॥

मातर्मृत्युहरा वाणी निःशब्दगगनेऽधुना ।
शनैः शनैः प्रसरति माधुर्ये याऽमृताद्वरा ॥ २ ॥

भुवनव्यापिनीं मातर्वन्दे त्वां नतमस्तकः ।
सर्वजीवनकार्येषु वन्दे त्वां नतमस्तकः ॥ ३ ॥

कायं मनो धनं चाद्य पूजाया भक्तिपावने ।
धूपे मातस्तवाग्रेऽहम् अर्पयामि कृपां कुरु ॥ ४ ॥

मातस्त्वदीयं पश्यामि दयार्द्रं चरणद्वयम् ।
अरुणस्य नवांशूनां रूपेण प्रकटीकृतम् ॥ ५ ॥

—: * :—

# *गीताञ्जलिः ५

अनुवादकः—गुणेश लक्ष्मण अमलादिः

(१)

मां त्वमनन्तमकार्षीरिवं तव सन्ततो हि सन्तोषः ।
भङ्गुरमिदं तु भाण्डं रिक्त्वा नवजीवनेन भरसि मुहुः ॥ १ ॥

एतां वेतसवंशीं तनुमात्रां गिरिदरीषु समनैषीः ।
शश्वन्नवस्वनानपि निजनिःश्वसितेन तत उदस्राक्षीः ॥ २ ॥

त्वदमरकरसङ्गेन प्रमुदितमेतन्निरस्तमर्यादम् ।
वाचमनिर्वचनीयां तन्वपि हृदयं मदीयमुद्गिरति ॥ ३ ॥

दानानि तवानन्तान्यल्पकयोस्त्ववतरन्ति मम करयोः ।
यन्ति युगानि वितरतस्तव भवति तथापि भर्तुमवकाशः ॥ ४ ॥

(२)

गानं यदाऽऽदिशसि मे हृदयं दलतीव मम तदभिमानात् ।
आलोकयामि तव मुखमुदयन्ति च मम जलानि लोचनयोः ॥ १ ॥

यत्किमपि जीविते मम रूक्षं चापस्वरं च कटु विषमम् ।
लयमुपयाति तदखिलं मञ्जु च सङ्गीतमेकमुल्लसति ॥ २ ॥

---

* इतःपरमाङ्गलगीताञ्जलेरनुवादाः ।

सागरसन्तरणोद्यतमुदितविहङ्गीव वियति डयमाना ।
भवति प्रविततपत्रा त्वां समुपासितुमियं मम नमस्या ॥ ३ ॥

जाने यन्मम गाने प्रीतिस्तव भवति भक्तिभावयुते ।
जाने यदपि च गायक इत्येवाहं तवैमि सान्निध्यम् ॥ ४ ॥

यस्याभ्याशेऽपि गतेर्नाऽऽशा मामस्पृशत्तदङ्घ्रियुगम् ।
तव निजगीतिप्रविततपत्रप्रान्तेन संस्पृशामि सुखम् ॥ ५ ॥

गानानन्दमदान्धः स्वात्मानं विस्मरामि भाववशात् ।
प्रभुरसि खलु मम यस्त्वं तं त्वां सम्बोधयामि सख इति च ॥ ६ ॥

(४)

भो मज्जीवितजीवन निजतनुशुद्ध्यर्थमविरतं प्रयतै ।
जाने यन्मम गात्रेष्वखिलेषु तवैव चिन्मयः स्पर्शः ॥ १ ॥

सर्वमसन्निजमनसो निवारयितुमपि तथा सदा प्रयतै ।
जाने यत्त्वं तत्सद्येनोज्ज्वलितो ममाऽऽन्तरविवेकः ॥ २ ॥

हृदयात्सदा विकसितप्रेम्णः पापान्यपासितुं प्रयतै ।
जाने यदासनं तव मम हृदयस्याऽऽन्तरेऽस्ति गर्भगृहे ॥ ३ ॥

स्वाचरणेन पुनस्त्वामाविष्कर्तुं सदा व्यवसितः स्याम् ।
जानंस्तवैव शक्तिः सामर्थ्यं मे ददाति चरितुमिति ॥ ४ ॥

(८)

यः कोऽपि परिच्छन्नो राजकुमारोचितैर्महावस्त्रैः ।
कण्ठे च रत्नखचिता यस्य विराजन्ति शृङ्खलास्तरकाः ॥ १ ॥

नश्यति तस्य शिशोः खलु केलिगतः सर्वथोत्सवविशेषः ।
वेषो ह्यस्य निकामं स प्रतिपदमवरुणद्धि जगति गतिम् ॥ २ ॥

अपि वैष विलुलितः स्याद्वेषो मम दूषितोऽपि वा धूल्या ।
शङ्कित इति संसारं परिहरति बिभेति चाल्पमपि स चलन् ॥ ३ ॥

मातर्निरर्थकं खलु मण्डनमपि बन्धनात्मकमिदं ते ।
तद्धारिणं निरुन्ध्याद्यदि तद्धितकरधराङ्कगतधूल्याः ॥ ४ ॥

मानवगणसाधारणजीवनयात्रामहोत्सवनिवेशम् ।
प्रविविक्षोरधिकारं यदि मुष्णीयाच्च तस्य तदशेषम् ॥ ५ ॥

(११)

गानेनानेन कृतं पठनेनालं जहाहि जपमालाम् ।
देवालयस्य सर्वद्वाराण्यावृत्य कमिह पूजयसे ॥ १ ॥

कोणमिमं तिमिरावृतमध्यास्यैकान्तमाश्रितस्त्वमरे ।
पश्योन्मीलय नयने न हि तव पुरतोऽस्ति तावको देवः ॥ २ ॥

कृषति तु कृषकः कठिनां भुवमास्ते यत्र चाध्वकृद्भिन्दन् ।
उपलांस्तत्र स ताभ्यां सह भवति सदाऽऽतपे च वर्षे च ॥ ३ ॥

वसनं तस्य रजोवृतमंशुकममलं त्वमप्यपास्य निजम् ।
तद्वद्भूतलमवतर धूलिभिरभितो वृतं सुनिःशङ्कः ॥ ४ ॥

मोक्षं वाञ्छसि वा त्वं मोक्षोऽयं तव कुतः समासाद्यः ।
प्रभुणाऽपि सृष्टिबन्धनमानन्देन स्वयं प्रतिगृहीतम् ॥ ५ ॥

बद्धः स तिष्ठतीशोऽप्यस्माभिः किल समं सदा सर्वैः ।
दिशति च कर्मणि युक्तो भवति स्वयमेव नान्यथा मुक्तः ॥ ६ ॥

व्यावर्तस्व ध्यानाद् धूपं कुसुमानि च त्यज कृतं तैः ।
का क्षतिरेतद्यदि तव वसनं मलिनं भवेद्विदीर्णं वा ॥ ७ ॥

सङ्गच्छस्वानेन श्रमजलनिष्यन्दशोभितललाटः ।
सन्तिष्ठस्व च सततं तेन परिश्राम्यता स्वयं श्राम्यन् ॥ ८ ॥

(३५)

यत्र भयातीतं मन उन्नतमपि धार्यते च यत्र शिरः ।
मुक्तं ज्ञानं यत्र च सत्यान्तःप्रत्ययात्स्रवन्ति गिरः ॥ १ ॥

सङ्कुचितभवनभित्तिभिरभितः शकलीकृतं न यत्र जगत् ।
अश्रान्तः श्रमशीलः पूर्णत्वायेहते च यत्र जनः ॥ २ ॥

यत्र न विवेकबुद्धेः स्वच्छविचाराम्बुवाहिनी नितराम् ।
शुष्कान्धरूढिमरुगतसिकतासु सरस्वतीव लुप्तपथा ॥ ३ ॥

यत्र त्वया प्रणीता क्रमते मतिरपि सदा विकासवती ।
शश्वदुदारविचाराचारैः किल सोज्ज्वलाऽऽन्तरस्फूर्त्या ॥ ४ ॥

एवं विलसति दिव्यं तेजस्तव यत्र सात्त्विकं विविधम् ।
तं स्वातन्त्र्यस्वर्गं भजतां तात प्रबुध्य मम देशः ॥ ५ ॥

(४८)

प्रातः शान्तिसमुद्रे प्रादुर्भूता विहङ्गरवभङ्गाः ।
उल्लसिताश्च सुमनसः समवर्तन्ताध्वपरिसरे सर्वाः ॥ १ ॥

परितश्च प्रविकीर्णा मेघान्तरतः सुवर्णसम्पत्तिः ।
चलितास्तु वयं व्यवसितनिजमार्गेणाग्रतस्तदनपेक्ष्य ॥ २ ॥

गानं विहारमपि वा न वयं हर्षेण किमपि कृतवन्तः ।
ग्रामं न चाप्यगाम क्वापि परार्थार्थिनो विनिमयार्थम् ॥ ३ ॥

नोक्तं न वा स्मितं नः पथि न चिरायितमथो न विश्रान्तम् ।
कालक्रमेण तु पुनश्चलिताः स्मस्त्वरिततरपदन्यासाः ॥ ४ ॥

अम्बरशिखरमयाद्रविरुवंश्छायाश्रिता अपि कपोताः ।
मध्याह्नतप्तपवनेऽनृत्यन्भ्रान्तानि शीर्णपर्णानि ॥ ५ ॥

स्वप्नायितः शयालुर्गोपवटुः संश्रितो वटच्छायाम् ।
अहमप्यशयि जलाशयमनु तनुमायम्य शाद्वले श्रान्तः ॥ ६ ॥

सतिरस्कारमकार्षुर्ममोपहासं तु सहचराः सर्वे ।
प्रोन्नतशिरसश्च पुरश्चलितास्ते सत्वरं दृढोत्साहाः ॥ ७ ॥

न च तैः कदाऽपि दृष्टं पृष्ठे न क्वचन वाऽपि विश्रान्तम् ।
कालान्तरेण नीले दूरतरे तमसि ते तिरोऽभूवन् ॥ ८ ॥

नैकक्षेत्राणि गिरींस्ते व्यचरंश्चित्रदूरतरदेशान् ।
पूज्याः खलु वीरगणाः क्रममाणा यूयमिममनन्तपथम् ॥ ९ ॥

उपहासोपालम्भैरुत्थानाय प्रतोदितस्यापि ।
नाभून्मम प्रवृत्तिर्नेष्टोऽहं सर्वथेति चामन्ये ॥ १० ॥

न्यक्कारेऽपि तदानीं तस्मिन्मम सम्बभूव हृदि मोदः ।
आह्लादस्य च मन्दच्छाया कस्यापि लघुतराऽवतता ॥ ११ ॥

तत्र च रविकरचित्रितहरितप्रच्छायतिमिरगतशान्तिः ।
शनकैर्वितता हृदि मम निजयात्राहेतुविस्मृतिश्चाभूत् ॥ १२ ॥

तस्मिन्गीतसनाथच्छायाकृतगहनमोहमयजाले ।
सक्तं मनो विमुक्तप्रतियत्नेनार्पितं मया विवशम् ॥ १३ ॥

अन्ते त्वहं प्रबुद्धो नेत्रे उद्घाट्य यावदालोके ।
पार्श्वे भवान् स्थितो मे स्वापं सम्प्लावयन्स्मितप्रभया ॥ १४ ॥

भूयोऽभवद्भयं मम यथाऽयमतिकष्ट आयतः पन्थाः ।
यत्नोऽपि तव प्राप्तेः कठिनोऽत्यन्तप्रयासमय इति च ॥ १५ ॥

( ५० )

द्वाराद् द्वारं ग्रामे भिक्षार्थं जातु चरति मयि वीथ्याम् ।
स्वर्णरथस्तव दूरे स्वप्नवदाविर्बभूव चित्ररुचिः ॥ १ ॥

राजेन्द्रोऽयं को वेत्युदयमिता मम सविस्मयस्याऽऽशाः ।
निजदुःस्थितिदिवसाः खलु समवसिता इत्यभावयं हृदये ॥ २ ॥

भिक्षां प्रतीक्षमाणः स्थितोऽस्मि देयामयाचितां तत्र ।
धननिकरं पुनरभितो धूलिषु विकरिष्यमाणमपि विपुलम् ॥ ३ ॥

विरतो रथःस्थितोऽहं पथि यत्र तवापतच्च मयि दृष्टिः ।
अवतीर्णोऽसि च सस्मितमन्ते मम भाग्यमुदितमिति मेऽभात् ॥ ४ ॥

सहसोद्धृतनिजदक्षिणहस्तस्त्ववदः किमु प्रदेयं मे ।
त्वयि वर्तत इति राज्ञः परिहासोऽयं तवैव खलु सदृशः ॥ ५ ॥

प्रासारयोऽग्रहस्तं भिक्षार्थं भिक्षुकस्य यत्पुरतः ।
पर्याकुलः स्थितोऽहं किल किङ्कर्तव्यमूढविकलमतिः ॥ ६ ॥

तदनु च विचित्य कोशाच्छनैरदां ते कनिष्ठकणमेकम् ।
सायं तु रिक्तो निजकोशं भुवि मम कियद्गताऽऽश्चर्यम् ॥ ७ ॥

आलोक्य फल्गुनिकरे तस्मिन्काञ्चनकनिष्ठकणमेकम् ।
सर्वस्वं ते दातुं किं न मनोऽभून्ममेति भृशमरुदम् ॥ ८ ॥

( ६० )

बाला मिलन्ति तीरेऽनन्तजगन्मयमहासमुद्रस्य ।
उपरि खनन्तमचलं सलिलमधस्तात्तु चञ्चलं तुमुलम् ॥ १ ॥

बाला मिलन्ति तीरेऽनन्तजगन्मयमहासमुद्रस्य ।
उच्चैरुत्क्रोशन्तः सोल्लासमितस्ततः प्रनृत्यन्तः ॥ २ ॥

रचयन्ति वालुकाभिर्गृहाणि विहरन्ति शून्यशुक्तिदलैः ।
बध्नन्ति शीर्णपर्णैस्तरणीर्दधति च महार्णवे हसिताः ॥ ३ ॥

बाला ललन्ति तीरेऽनन्तजगन्मयमहासमुद्रस्य ।
जानन्ति न जलतरणं न च ते जानन्ति जालविस्तरणम् ॥ ४ ॥

वणिजस्तरन्ति नौभिर्जलधिं मुक्तार्थिनश्च गाहन्ते ।
बालास्तु लघूनुपलांश्चिन्वन्ति प्रविकिरन्ति चैव पुनः ॥ ५ ॥

नान्विष्यन्ति निगूढं धनं न जानन्ति जालनिक्षेपम् ।
विहरन्त्येव तु तीरेऽनन्तजगन्मयमहासमुद्रस्य ॥ ६ ॥

उल्लसति साट्टहासं जलधिर्वेला च मन्दहसिताभा ।
गायति च वीचिमाला बालान्प्रति कालभीषणाऽन्तकरी ॥ ७ ॥

शिशुदोलामिव धुवती माता गीतीर्निरर्थकाः प्रतनाः ।
क्रीडति जलधिर्बालैर्जलधेर्वेला च मन्दहसिताभा ॥ ८ ॥

बाला मिलन्ति तीरेऽनन्तजगन्मयमहासमुद्रस्य ।
वियति भ्राम्यति वात्याऽपथे निमज्जन्ति चार्णवे नावः ॥ ९ ॥

चरति कृतान्तो विष्वग् बाला विहरन्ति चैव विश्रब्धम् ।
तीरेऽनन्तजगन्मयमहोदधेर्बालमेलकोऽति महान् ॥ १० ॥

( ७३ )

मुक्तिः सन्यासेन न मम बद्धस्त्वेव बन्धनसहस्रैः ।
आनन्दमयैर्मुक्त्याऽऽश्लिष्टं स्वात्मानमनुभवामि दृढम् ॥ १ ॥

आवर्जयसि मदर्थे सततं स्वं मधु नवासवं नाना ।
रुचिगन्धयुतं मृण्मयपात्रमिदं पूरयंस्त्वमाकण्ठम् ॥ २ ॥

लोको मम दीपयिता दीपान्विविधांस्तवार्चिषा शतशः ।
स्थापयिता च तवाग्रे वेद्याः संसारमन्दिरे प्रीत्या ॥ ३ ॥

न हि न हि निजेन्द्रियाणां द्वाराणि बलात्कदाचिदावृणुयाम् ।
चक्षुःश्रुतिसंस्पर्शानन्दास्तव दधतु काममानन्दम् ॥ ४ ॥

ज्वलितारो निर्दग्धा आनन्दज्योतिषा ममाऽऽभासाः ।
फलितारः परिपक्वाः प्रेमरसेनापि वासनाः सर्वाः ॥ ५ ॥

( ८२ )

कालस्तवास्त्यनन्तः प्रभो क्षणानां न भवति तव गणकः ।
कालोऽसि कलयतां स्वयमाकलनं तव कुतोऽस्तु कालस्य ॥ १ ॥

दिवसाश्च रात्रयश्च व्यतियन्ति युगानि कुसुमवच्च तथा ।
विकसन्ति म्लायन्ति च जानासि खलु प्रतीक्षितुं कालम् ॥ २ ॥

किमपि च तनुमात्रं तव वनपुष्पं पुष्णतः श्रिया सततम् ।
शतशोऽतियन्ति शरदः कार्यपरस्य न तवाऽऽदरः काले ॥ ३ ॥

न भवति परन्तु कालोऽस्माकमिहार्थं विनाऽतिवाहयितुम् ।
कार्यः कालाभावाद्यथोचितेऽस्माभिरवसरे रभसः ॥ ४ ॥

कालातिपातमणुमपि परमदरिद्रा वयं न सोढुमलम् ।
कृपणो न कपर्दस्याप्यपव्ययं जगति कर्तुमुत्सहते ॥ ५ ॥

एवमपि याति कालो मम सर्वस्मै विसृज्यमानोऽयम् ।
तस्मै यः कोऽपि भवेदर्थी तेन स्वदिष्टमनुशोचन् ॥ ६ ॥

एवं च यावदन्तं शून्या तव भवति वेदिरुपहारैः ।
दिनसमयो व्यवहारैर्व्यपैति मम लौकिकैः समाक्रान्तः ॥ ७ ॥

द्वारं तव पिहितं स्यादिति दिवसान्ते भिया त्वरे सुचिरात् ।
पश्यामि परं तु यथा पर्याप्तोऽद्यापि वर्तते समयः ॥ ८ ॥

( ८४ )

सेयं किल विरहार्तिर्विलसति जगतीह सर्वतो वितता ।
रूपाणि प्रसुवाना सततमसङ्ख्यान्यनन्त आकाशे ॥ १ ॥

निशि निःशब्दं तदिदं स्थिरतारकमीक्षते विरहदुःखम् ।
प्रावृषि च नभसि तिमिरे पर्णेष्वाकर्ण्यतेऽस्य मधुररुतम् ॥ २ ॥

मानवकुलसुखदुःखप्रणयाकाङ्क्षात्मनैति तद्घनताम् ।
स्रवति च मम कविहृदयात्सततं गीतात्मना व्रजद्द्रवताम् ॥ ३ ॥

( ९५ )

अनभिज्ञ एव तस्य क्षणस्य खल्वहमभूवमत्यन्तम् ।
प्रथमं यदेह ततर स्वजीवनद्वारदेहलीं बालः ॥ १ ॥

शक्त्या नु कतमयाऽस्मिन्नीतोऽस्म्युद्भेदमद्भुते भुवने ।
मुकुल इव मध्यरात्रे निबिडारण्यान्तरे तमोगहने ॥ २ ॥

प्रातर्दिनप्रभायामुन्मीलितमात्रयोर्विलोचनयोः ।
प्रतिपन्नं तु मया यल्लोकेऽस्मिन्नसि नैव किमपि परः ॥ ३ ॥

तर्कातीतेन पुनस्तेनैव च नामरूपरहितेन ।
धारयता मम जननीरूपमहं धारितोऽस्मि बाहुभ्याम् ॥ ४ ॥

मरणेऽप्येवं भास्यत्यपरिचितं मे तदेव परिचितवत् ।
जाने मरणेऽपि मम प्रीतिः स्याज्जीवने यथैवास्मिन् ॥ ५ ॥

क्रन्दति शिशुः प्रकामं मात्रा सव्येतरस्तनापोढः ।
शाम्यति परं क्षणान्तर एव तु सक्तः पयोधरे सव्ये ॥ ६ ॥

—:*:—

# गीताञ्जलिः ६

अनुवादकः—उडालि सुब्बरामशास्त्री

(५)

स्थातुं पार्श्वे क्षणमिव तव प्रार्थये तेऽभ्यनुज्ञां
यद्यत्कार्यं मम तदखिलं पूरयिष्ये परस्तात् ।
नो विश्रान्तिः सुखमपि भवेद्दर्शनं ते विना मे
कर्माख्येऽस्मिन् विपुलजलधौ मे कृतिः स्यादनन्ता ॥ १ ॥

अद्यायातः श्वसितरसितैर्मे गवाक्षं वसन्तः
गायन्त्येते मधुकरवराः निष्कुटाऽऽस्थानमध्ये ।
कालोऽयं मे तव हि पुरतोऽत्रोपवेष्टुं प्रशान्तः
गातुं गीतीर्मधुरमधुराश्चात्मनो मेऽर्पयित्रीः ॥ २ ॥

(६)

शीघ्रं चैनं चिनुहि कुसुमं मा कृथास्त्वं विलम्बं
म्लानं नो चेद्व्रजसि निपतेद्व्यर्थसंलब्धजन्म ।
मालायां ते भवतु कुसुमस्यास्य मा वाऽवकाशः
भूयाद्बाधाकृदपि महितस्ते करस्पर्शलेशः ॥ १ ॥

माभूच्छान्तो दिवससमयोऽलक्षितान्तो मयाऽयं
मा ते पूजाकरणसमयश्चात्ययासीददृष्टः ।
युक्ते काले चिनुहि कुसुमं प्राप्नुहीष्टोपयोगं
यद्यप्येतन्न सुरभि न वा रम्यवर्णादियुक्तम् ॥ २ ॥

( १० )

हीना दीना निपतितजना निर्धना वा वसेयुः
यत्रेदं ते पदकमलयोर्न्यासपीठं पवित्रम् ।
नन्तुं प्रह्वीकृतमपि शिरो मे न शक्नोति गन्तुं
पादावेतौ कलितवसती हीनदीनादि मध्ये ॥ १ ॥

दर्पो नैव प्रभवति पदं प्राप्तुमेतत्कदाचि-
च्चेलैर्जीर्णैश्चरसि सततं यत्र दीनादिमध्ये ।
नो वा शक्तं हृदयमपि मे निस्सहायादि साद्धं
दीनादीनाविहितवसतिं मध्यतस्त्वाऽधिगन्तुम् ॥ २ ॥

( १४ )

आशाऽनन्ता निरवधिविधा दीनमाक्रन्दनं मे
मोघीकुर्वन्नदयमनिशं प्रार्थनां मामरक्षः ।
सन्दृब्धेयं तव वरकृपा जीविते सम्यगेवं
रक्षारीतिर्ननु तव विभो नित्यमत्यद्भुतासौ ॥ १ ॥

प्राणानेतान् मतिमथ तनुं चान्तरिक्षं च वह्निं,
मह्यं प्रादा विततकरुणस्त्वं विना प्रार्थनां मे ।
दूरीकुर्वन्नवसि सततं चेतसो मे दुराशाः
योग्यं चैवं खलु वितनुषे प्राभृतं तद्ग्रहीतुम् ॥ २ ॥

क्लान्तस्वान्तं मुहुरिह कृतां ते प्रतीक्षां विनिद्र-
श्चान्वेषं ते विफलमकृथा निर्दयस्त्वं निलीनः ।
नोरीकुर्वन्नसकृदपि मां तत्र योग्यं विधास्यन्
रक्षस्याशानिवहविपदस्सर्वदोषास्पदायाः ॥ ३ ॥

( २८ )

दुर्गा बन्धा, मम तु हृदयं खिद्यते तान् बिभित्सोः,
स्वातन्त्र्येच्छोरपि मम मनो लज्जते कर्तुमाशाम् ।
नानामि त्वामनुपमसखं मेऽद्भुतैश्वर्यपूर्णं
नैवावासे तदपि भवनान्मण्डनाभासजातम् ॥ १ ॥

मृत्युक्रान्ता मलिनमलिनेयं निचोली मदीया
द्वेष्म्येवैनां तदपि सुदृढं प्रेमबद्धां करोमि ।
नैके दोषा ऋणमतिमहद्गूढलज्जापि गुर्वी
श्रेयःप्रार्थी भयमपि भजे मेऽर्थितं दास्यसीति ॥ २ ॥

( ३६ )

देवाऽऽशासे, मम हृदयतश्छिन्धि दैन्यं समूलं
दद्याश्शक्तिं सुखमसुखमप्यश्रमेणैव वोढुम् ।
दद्याश्शक्तिं भृशमविकलामत्र यस्यास्सहायात्
कुर्वन् सेवां जगति सततं सत्फलं प्रेम कुर्याम् ॥ १ ॥

दद्याश्शक्तिं धनविरहितान् द्रष्टुमात्मीयबुद्ध्या
मूर्धानं मे न विनमयितुं चाग्रतो धृष्टशक्तेः ।
दद्याश्शक्तिं मम मतिमिमां क्षुद्रदूरां विधातुं
प्रेम्णा शक्तिं मम तव वशां कर्तुमाधेहि शक्तिम् ॥ २ ॥

( ३९ )

संशुष्केऽस्मिन् हृदि च कठिनेऽत्रैहि वृष्ट्या दयायाः
गीत्या चायाह्यतिमधुरया जीवने नष्टशोभे ।
कार्यानीके ध्वनति परितो दूरतो मां च रुन्ध-
त्यायाहि त्वं प्रशमसहितो मां विभो शान्तिदेव ॥ १ ॥

कोणे कस्मिंश्चिदपि हृदये मे स्थिते देव दीने
भित्त्वा द्वारं प्रविश सहसा राजवन्मेऽधिराज ।
अन्धीभूते मनसि रजसाऽऽशाकृतेन श्रमेण
त्वं मामायाह्यघहर ! विनिद्रा ! ऽत्र ते कान्तिघौघैः ॥ २ ॥

( ६१ )

निद्राऽऽयाता नयनयुगलीं, ब्रूहि, बालस्य कस्मात् ?
आयातैषा किल सुरवधूखेटकात् काननान्तात् ।
खद्योताभाशबलिततरुच्छायमाश्रित्य तस्मि-
न्नासाते द्वे ललितकलिके मोहके सुप्तिमूले ॥ १ ॥

कुत्रोद्भूता दरहसितरुक्सुप्तबालोष्ठखेला ?
साऽर्धस्येन्दोः किल सितकलाशारदाभ्रं चुचुम्ब ।
आविर्भूता प्रथमत इयं तत्र हैमप्रभाते
स्वाम्नाल्लोकादत उपगता बालकस्याऽऽस्यपद्मम् ॥ २ ॥

बालस्याङ्गे लसति मृदुले स्वादु यत्सौकुमार्यं
तत्कुत्रेयत्सुचिरमवसद् गोपितं ? वेत्ति को वा ? ।
काले तस्मिन् जननिरभवत् यत्र नातिप्रगल्भा
मूकप्रेमाकृति हृदि चिरं गुप्तमासीत्तदाऽस्याः ॥ ३ ॥

( ७७ )

जाने त्वाऽहं मम विभुमतो दूर एवात्र वर्ते,
मन्ये न त्वां मम जनमतो नोपगच्छामि पार्श्वम् ।
जाने च त्वां स्वपितरमतस्ते पदान्तेऽस्मि नम्रः
गृह्णाम्येतं न तु तव करं मित्रवन्मे करेण ॥ १ ॥

स्थाने यस्मिन् स्वयमवतरेः घोषयन्स्वं मदीयं
नाऽस्म्यत्राऽतस्सुहृदिति हृदालिङ्गितुं त्वां न शक्तः ।
भ्रातृणां मे त्वमसि सहजः, नाऽऽद्रिये तान्, प्रयच्छा-
म्येभ्यो भागं न हि मम धने, माऽस्म्यतस्ते सभागी ॥ २ ॥

लोके शोके न हि जनसुखे वास्म्यहं तुल्यभागी
तस्माद्देव ! प्रतिफलमहो ! दूरतस्ते भवामि ।
त्यक्तुं भीतिर्भवति महती जीवितं मे, ततोऽहं
शक्तो नाऽस्मिन् महति सलिले जीवनाख्ये प्रवेष्टुम् ॥ ३ ॥

( ८३ )

मुक्ताहारं जननि ! विमलं कल्पयाम्यद्य रम्यं
कर्तुं तेऽलङ्कृतिमिह गले दुःखनेत्राम्बुजालैः ।
ताराश्चकुस्तव पदयुगे नूपुरे स्वप्रभाभि-
र्हारोऽयं स्यादुरसि रुचिरे लम्बमानस्तवाऽस्मिन् ॥ १ ॥

ऐश्वर्याणामथ च यशसां मूलमाद्यं किल त्वं
दद्या मा वा तदुभयमसौ ते ह्यचिन्त्या प्रवृत्तिः ।
किन्तु क्लेशो जननि सकलः सर्वथाऽयं मदीयः,
दत्ते क्लेशे तव बलितया त्वं ददासि प्रसादम् ॥ २ ॥

( ९६ )

अस्त्वेतन्मे चरमवचनं प्रस्थितस्यात्र लोकाद्
यद्यद्दृष्टं जगति सकलं तन्मयाऽतीव चित्रम् ।
कान्त्यम्भोधिस्फुटसरसिजस्याऽस्य मध्ये निलीना-
नास्वाद्यैतान्मधुकणगणानेष धन्योऽस्मि लोके ॥ १ ॥

रङ्गे नैकाकृतिपरिगते खेलता सार्धमन्यै-
रस्मिन्दृष्टो झटिति स मया नामरूपादिहीनः ।
गात्रं सर्वं मम पुलकितं स्पर्शदूरस्य तस्य
स्पर्शादन्तो यदि मम भवेदस्तु सोऽत्रैव सद्यः ॥ २ ॥

( १०३ )

त्वत्पादैकप्रणतिविधये देव ! सर्वेन्द्रियाणि
व्याप्तानि स्युः, चरणसविधे ते जगत्संस्पृशेयुः ।
मेघो वर्षाजलगुरुभरैर्लम्बमानो यथाऽयं
बुद्धिर्द्वारे तव नमतु मे कर्तुमेकं प्रणामम् ॥ १ ॥

भिन्ना गानस्वरततिरियं चैकरूपा वहन्ती
मौनाम्भोधिं विशतु भगवन् ! कर्तुमेकं प्रणामम् ।
गेहोत्कण्ठाः कुधरनिलयान् सारसा वोत्पतन्तो
नित्यं यायादविलयपदावाप्तये जीवनं मे ॥ २ ॥

# गीताञ्जलिः ७

अनुवादकः—को. ल. व्यासरायशास्त्री

## ईशः कुत्रास्ति ?

देवागारे पिहितद्वारे
तमोवृतेऽस्मिन् भजसे कम् ।
त्यज जपमालां त्यज तव गानं
नास्त्यत्रेशः स्फुटय दृशम् ॥ १ ॥

तत्रास्तीशः कठिनां भूमिं
यत्र हि कर्षति लाङ्गलिकः ।
यत्र च जनपदरथ्याकर्ता
प्रस्तरखण्डान् दारयते ।
ईशस्तिष्ठति वर्षातपयो-
स्ताभ्यां सार्धं मलिनवपुः ।
दूरे क्षिप तव शुद्धां शाटी-
मेहि स इव पांसुरभूमिम् ॥ २ ॥

मुक्तिः ? क्व नु सा दृश्या मुक्तिः
सलीलमीशः सृजति भुवम् ।
तिष्ठति चास्मद्धिताभिलाषी
सविधेऽस्माकं मिषन् सदा ॥ ३ ॥

ध्यानं हित्वा बहिरेहि त्वं
त्यज तव कुसुमं त्यज धूपम् ।
पश्यंस्तिष्ठ स्वेदजलार्द्र-
स्तन्निकटे कार्यक्षेत्रे ॥

यदि तव वसनं धूसरितं स्यात्
यदि च सहस्रच्छिद्रं स्यात् ।
का वा क्षतिरिह तेन भवेत्ते
तत्त्वमिदं चिन्तय चित्ते ॥ ४ ॥

---

# गीताञ्जलिः ८

अनुवादकः—मा. कृष्ण नम्पूतिरि

(३)

मन्नाथ गायति भवान्कथमित्यजानं-
स्तूर्ष्णीं स्थितश्चपलहृत्तव तत्सुगीतम् ।
कर्णे श्रृणोमि सततं इह तत्प्रकाशः
सम्यक् प्रकाशयति लोकमिमं स्वगत्या ॥ १ ॥

हे लोकनायक विभो भवतः सुगीते-
र्जीवोऽधितिष्ठति समस्तवियत्प्रदेशम् ।
त्वद्गानपुण्यलहरीप्रतिबन्धजालं
भित्त्वा कठोरमखिलं पुरतः प्रयाति ॥ २ ॥

गातुं मदीयहृदयं भवदीयगीत्या
साकं समुत्सुकमतीव तथाऽपि सोऽहम् ।
तीव्रप्रयत्नवशगोऽपि लभे न चैकं
रम्यं स्वरं तदनु हन्त पराजितोऽस्मि ॥ ३ ॥

शब्दः समुद्भवति मद्वदनात्स शब्दः
सङ्गीततां व्रजति नो भगवन् कदाऽपि ।
तस्मात्पराजयमवाप्य पुना रुदन् हा
नाथेति हन्त बहुधा विलपामि दीनः ॥ ४ ॥

लोकाधिनाथ भवता भवदीयगान-
बन्धे मदीयहृदयं दृढबद्धमेव ।
कृत्वा ततः सरसमेव भवान्सुगान-
माश्रावयत्यतितरां सदयं सदा माम् ॥ ५ ॥

(७)

गीतं मदीयमधुना सकलं विभूषा
जालं विमुञ्चति पटादिकृतां च शोभाम् ।
सामीप्यविघ्नमनुवासरमावयोस्त-
त्सर्वं तनोति सुतरां करुणापयोधे ॥ १ ॥

श्रोतुं भवत्स्वरमतीव निगूढमेकं
पर्युत्सुकोऽहमधिकं भगवन् भवामि ।
तावज्झणत्कृतिरुदेति विभूषणौघा-
द्विघ्नं तनोति भवता सह मेलने मे ॥ २ ॥

पद्यं करोमि यदहं खलु पद्यकारो
दम्भो भवत्सविधमेत्य चकास्ति लज्जा ।
निस्तुल्यपद्यकर ते चरणारविन्द-
द्वन्द्वे समर्प्य सकलं पतितोऽस्मि दासः ॥ ३ ॥

मज्जीवितं भगवतस्तव गानभेद-
सम्पूरणाय भविता यदि वेणुतुल्यम् ।
भूषादिहीनमृजुतासहितं विधातुं
शक्नोमि चेदिदमतीव कृती भवेयम् ॥ ४ ॥

( ९ )

हे मन्दचित्त तव कन्धरया त्वमेव
त्वामुद्वहन्नटसि किन्तु वनीपक त्वम् ।
त्वद्गेहमेत्य किमिदं बत याचसे वा
सर्वेश्वरे सकलमर्पय वीतखेदः ॥ १ ॥

भारं त्वदीयमखिलं ननु सर्वशक्ते
सम्यक् समर्प्य न विलोकय जातु पश्चात् ।
दीपं त्वदाग्रहविदीपितमस्य वायु-
र्निर्वापयिष्यति जवादतिनिन्द्यमेतत् ॥ २ ॥

तस्याशुचेः करयुगेन कृतं हि दानं
मा मा गृहाण सकृदप्ययि याचक त्वम् ।
प्रेम्णा वितीर्णमतिपावनदानमस्य
स्वीकार्यमस्तु तव मन्दमते सदैव ॥ ३ ॥

( १०२ )

ज्ञातो भवानिति मया जनसङ्घमध्ये
तिष्ठन्करोम्यहमतीव निजप्रशंसाम् ।
पश्यन्ति ते कृतिषु मे सकलासु तासु
चित्रं त्वदीयमतिवन्द्यमनन्तकान्ति ॥ १ ॥

ते सम्यगेत्य सविधं मम हृष्टचित्ताः
पृच्छन्ति मां भवति कः स महाप्रभावः ।
वाच्यं किमुत्तरमहो नहि जातु जाने
शक्नोमि नाहमिति तान्विनयाद्वदामि ॥ २ ॥

गच्छन्ति ते मयि पराजयमाकलय्य
निन्दन्ति मामतितरां त्वमहो तदानीम् ।
तत्रैव तिष्ठसि मनोज्ञमुखेन्दुबिम्बा-
दाकीर्य मोहनमृदुस्मितचन्द्रिकां स्वाम् ॥ ३ ॥

गानानि तावकविचित्रकथापराणि
स्थास्नूनि पावनपदानि कृतानि तानि ।
निःसारयन्ति हृदयान्मम तद्रहस्यं
पृच्छन्ति ते पुनरुपेत्य तदीयमर्थम् ॥ ४ ॥

उद्दिष्टमर्थमधुना वद मामितीदं
श्रुत्वा न किञ्चिदपि वक्तुमहं समर्थः ।
निन्दन्ति तेऽपि परिहासपराः प्रयान्ति
त्वं तत्र तिष्ठसि मृदुस्मितसुन्दरास्यः ॥ ५ ॥

---

# मा याहि राजन् विमुखीभवंस्त्वम्*

अनुवादकः— वसन्त पाटील्

द्वारं कदाचिद् हृदयस्य दृष्टं
मुद्राङ्कितं चेत्स्थगितं पिधानैः ।
भित्त्वा कपाटं विश चित्तकोशं
मा याहि राजन् विमुखीभवंस्त्वम् ॥ १ ॥

यदा प्रियं नाम च तावकीनं
वीणागुणो झंकृतिभिर्न गायेत् ।
कृपाजलं सिञ्च कुरु प्रतीक्षां
मा याहि राजन् विमुखीभवंस्त्वम् ॥ २ ॥

निमन्त्रितैस्ते हृदयेश सद्यः
स्वप्नो न चैतन्यमवाप्नुयाच्चेत् ।
वज्रप्रहारेण विबोधयेर्मा
मा याहि राजन् विमुखीभवंस्त्वम् ॥ ३ ॥

तवासने नाथ यदा सयत्नं
प्रस्थापितोऽन्यः परिपूजनाय ।
त्वमेव सम्राड् हृदयेऽभिषिक्तो
मा याहि राजन् विमुखीभवंस्त्वम् ॥ ४ ॥

---

* गीतविताने प्रथमखण्डे ११ —'यदि ये आमार हृदय दुयार .........
फिरिया जेयो ना प्रभु'

# वङ्गेषु शरत्

अनुवादकः— धीरेन्द्रनाथ मुखोपाध्यायः

अहो ! प्रभाते शरदीह कीदृङ् निरूपितं रूपमनिन्द्यमद्य ।
शोभातिरेकेण चकास्ति कान्तं श्यामं नवाङ्गं तव वङ्गमातः ॥ १ ॥

अलं न वोढुं सरिदम्बुभारं, क्षेत्राणि धान्यं न तथैव धर्तुम् ।
पिकादिनादैर्वनपर्षदन्तः स्थितासि मातः ! शरदि प्रभाते ॥ २ ॥

शुभं तवाह्वानमदीनमम्ब ! विश्वां धरित्रीं परितः प्रयातम् ।
प्रत्येकगेहे तव देवि ! भाव्यं नवीनधान्यैरुचिमन् नवान्नम् ॥ ३ ॥

न बिन्दुमात्रं विरतिस्तवास्ते प्रयान्ति भारैर्बहुधान्यगुच्छाः ।
वीथीषु गन्धो वितनोति तस्य, ते प्रेषिताऽऽह्वानलिपिर्जगत्याम् ॥ ४ ॥

विनीय सम्यग् जलदातिभारं सुनीलवर्णं कृतमम्बरं ते ।
श्यामा धरित्री शिशिरं निषिच्य सुशीतला ते विहिता तथैव ॥ ५ ॥

जलस्थलाकाशतलेषु मन्ये वंशीरवो भाति मनोज्ञलग्ने ।
दलैस्तव द्वारि तरी समेति, नीलं कृतं व्योम, हिमा च पृथ्वी ॥ ६ ॥

विनोदयन् क्लान्तशरीरमेष शीतः समीरः प्रथमं प्रवाति ।
कुटीषु सञ्चारयते नवीनप्राणान् तथा नित्यनवीनवाञ्छाः ॥ ७ ॥

दिक्षु प्रयासाः कति सन्ति मातर्मुखं जनानां तव हासपूर्णम् ।
उच्चीयते मुष्टिभिरत्र सौख्यं नवं नवं भाण्डनिकेतने ते ॥ ८ ॥

आगच्छतागच्छत, ये च यत्र सर्वे समायात जवेन यूयम् ।
अपावृतं भाण्डगृहं जनन्या संलुठ्यते सन्ततमन्नसम्पत् ॥ ९ ॥

नावा समागच्छत भिन्नपारात् पल्लयन्तराद् वा जननीसुताश्च ।
को रौति दीनः क्षुधयेति माता जिज्ञासते, तत् समुपेत सर्वे ॥ १० ॥

शेफालिमाल्यं जननीसुकण्ठे तन्मञ्जुगन्धाद् वसुधा सुगन्धा ।
निरम्बुमेघः खचितोऽञ्चलान्ते विभाति शुभ्रो नवनीतकल्पः ॥ ११ ॥

सुवर्णवर्णं किरणं किरीटं विधृत्य माता मधुरं चकास्ति ।
हरिद्धिरण्यव्यतिमिश्रणेन तस्या मनोज्ञो महिमा तनोति ॥ १२ ॥

प्रसूनभूषावृतपादयुग्मा दण्डायमाना जननी ममास्ते ।
दीप्ता प्रसूनैः शिशिरेण धान्यैर्हसत्यजस्रं निखिला धरित्री ॥ १३ ॥

---

# स्पर्शमणिः

**अनुवादकः—धीरेन्द्रनाथ मुखोपाध्यायः**

नदीतटे साधुरनन्यचित्तः सनातनो नाम सुनामवित्तः ।
जपन् हरेर्नाम मुदा सदा स श्रीधाम वृन्दावनमध्युवास ॥ १ ॥

अथैकदा कश्चन दीनवेषो विप्रात्मजः साधुवरं वरेण्यम् ।
चिरं तपस्यन्तमुपेत्य शान्तं भक्त्या नतस्तच्चरणौ ववन्दे ॥ २ ॥

पप्रच्छ साधुस्तमवेक्ष्य दक्षो, "भो विप्र, कस्त्वं, कुत आगतोऽसि" ।
"आसादितस्त्वामतिदूरदेशात् , किं वा निगाद्यं";—निजगाद विप्रः ॥ ३ ॥

"भो, वर्धमानाभिधमण्डलान्तर्गते पुरे 'मानकरे' वसन्तम् ।
जानीहि मां जीवन-नामधेयं, नास्ति क्वचिन् मत्सम-मन्दभाग्यः ॥ ४ ॥

भूसम्पदः स्वल्पतया कथञ्चित् शिरो नतीकृत्य नयामि कालम् ।
पूर्वं तपो-याग-पवित्र-कृत्यैः कीर्तिः परासीदधुना विलुप्ता ॥ ५ ॥

आराध्य भक्त्या बहुशो महेशो वरं मया याचित आत्मभूत्यै ।
स्वप्नेऽथ देवेन निशावसाने दिष्टं, "त्वदिष्टं भविता फलाढ्यम् ॥ ६ ॥

तदद्य गत्वा यमुनातटिन्याः पितेति मत्वा च सनातनं तम् ।
तत्पादयुग्मं भज भूसुर त्वं, तत्रैव पन्था हि धनागमस्य" ॥ ७ ॥

अत्यद्भुतं तद्वचनं निशम्य चिन्ताकुलोऽसौ द्विजमाबभाषे ।
"गेहे यदासीन् मम दानयोग्यं त्यक्त्वागतः, सम्प्रति भैक्ष्यसारः" ॥ ८ ॥

विदूरिता विस्मृतिरस्य दैवात् . फूत्कारयन् साधुरवोचदुच्चैः ।
"सत्यं हि सत्यं, पुलिने कदाचिल्लब्धं स्वतः स्पर्शमणिं स्मरामि ॥ ९ ॥

कदापि देयं यदि वा मम स्यात्, तत् सैकते मे निहितं त्वमुत्र ।
हे विप्र, नीत्वापसर, स्थिरं ते दैन्यं मृदुस्पर्शनतोऽप्यपेयात् ॥ १० ॥

क्षिप्रं स विप्रः समुपेत्य लुब्धो लेभे मणिं तं सिकता निरस्य ।
अयस्मये तत्कवचे करस्थे स्पर्शेन हेमत्वमवापतुर्द्राक् ॥ ११ ॥

साधोर्महत्त्वं मनसा विचिन्वन् स विस्मितोऽभूत् सिकतानिषण्णः ।
कल्लोलगीतैर्यमुनाप्युवाह तस्मै वदन्तीव विचित्रवार्ताम् ॥ १२ ॥

पारेनदि क्लान्ततनुर्दिनान्ते जगाम सूर्योऽरुणरश्मिरस्तम् ।
ततः समुत्थाय पदे विलुठ्यन् प्रोवाच विप्रो गलदश्रुधारः ॥ १३ ॥

मूत्वा धनी येन धनेन साधो मणिं मणिं नो मनुषेऽणुमात्रम् ।
तस्यैव लेशं नतमस्तकेन याचेऽहमित्यास मणिं तटिन्याम् ॥ १४ ॥

---

# जीवनदेवतम्

अनुवादकः —धीरेन्द्रनाथ मुखोपाध्यायः

हे इष्टदेव, मम मर्मतलप्रतिष्ठ
हे सुन्दर. प्रियतरात्प्रिय, जीवनेश !
अन्तस्तलं मम सखे ! कृपया समेत्य
कच्चित् प्रशान्तिमगमत् सकला तृषा ते.॥ १ ॥

द्राक्षासमं नियत-निष्ठुर-पीडनेन
वक्षो निपीड्य सुख-दुःखक-लक्षपूरैः ।
हे देव, जीवन, परं महतो महीयन् !
पात्रं प्रपूर्य भवते बहुधा प्रदत्तम् ॥ २ ॥

प्रेमाभिषिक्तमनसा कति वर्णगन्धै-
श्छन्दोभिरत्र कतिभिः कतिभिश्च रागैः ।
हे नाथ, वासरगतं शयनं त्वदीयं
संग्रन्थनैर्विरचितं बहु यत्नतो मे ॥ ३ ॥

तृष्णा-सुवर्णमनिशं हृदयोपजातं
यत्नादति प्रतिदिनं गलितं विधाय ।
खेलार्थमत्र भुवि ते क्षणमात्रकालं
मूर्तिर्मया विरचिता कति नित्यनूत्ना ॥ ४ ॥

नीतस्त्वया कथमहं स्वयमेव वृत्वा
वृत्तं हि तन्न च मया विदितं कदापि ।

नक्तं प्रगे च मम किं रुचिसम्मते ते,
किं नर्म, कर्म, विजने भवने तवेश ॥ ५ ॥

वर्षा - शरत्समय - शीत - वसन्तकेषु
संगीतकैर्यदिह ते ध्वनितं हृदासीत् ।
सिंहासने तव निजे किमिहोपविश्य
सर्वं त्वया तदनिशं श्रुतमेकलेन ॥ ६ ॥

चेलाञ्चले मम मनःकुसुमं गृहीत्वा
माल्यं किमत्र रचितं विधृतं गले वा ।
केलिच्छलेन मम यौवनकानने किं
स्वैरं त्वया विचरितं चिरमत्र नाथ ॥ ७ ॥

संस्थाप्य नेत्रयुगलं मम मर्ममध्ये
किं वा विलोकयसि साम्प्रतमत्र बन्धो ।
यच्चापि दूषणमिह स्खलनं च यन्मे
क्षान्तं नु किं तदखिलं, त्रुटि-विच्युती वा ॥ ८ ॥

पूजाविहीनदिवसाः कति वा निवृत्ताः,
सेवाविहीनरजनी कति वापि नाथ ।
पूजार्थमर्घ्यकुसुमं विपिने विविक्ते
भूत्वा विकासि गलितं समभूद् वृथैव ॥ ९ ॥

येन क्वणेन कलितेयमयोग्यवीणा-
तन्त्री, पुनःपुनरहो ! बत स प्रनष्टः ।
हे सत्कवे ! विरचितां मधुरागिणीं ते
किं गातुमस्मि निपुणो नितरामशक्तः ॥ १० ॥

गत्वाम्बुसेचनकृते तव काननान्त-
श्छायातलेऽधिशयनादभवं प्रसुप्तः ।
हा हन्त, सान्ध्यसमये सुतरां हताशो
नीत्वाऽऽगमं च नयनद्वयपूर्णमश्रु ॥ ११ ॥

प्राणेश, शेषमिह किं गतमस्ति सर्वं
यच्चापि वस्तु सकलं समभून्मदीयम् ।
शोभाशतानि मम यानि च गीतकानि,
प्राणाश्च, जागृतिरपीह, सुषुप्ति-जाड्यम् ॥ १२ ॥

सञ्जातमद्य शिथिलं भुजबन्धनं मे
जातं च चुम्बनमहो मदिराविहीनम् ।
हे कान्त, कान्त ! मम जीवनकेलिकुञ्जे
सद्योऽभिसाररजनी किमियं प्रभाता ॥ १३ ॥

एनां तदा समितिमद्यतनीं निरस्य
रूपं समानय नवं च नवीनशोभाम् ।
नूत्नं विधाय नय मां सुचिरं पुराणं
भूयो बधान नवजीवविवाहबन्धैः ॥ १४ ॥

---

# भारतवन्दनम्*

अनुवादकः—विश्वेश्वर विद्याभूषण काव्यतीर्थः

अयि भुवनमनोमोहिनि
निर्मलसूर्यकरोज्ज्वलधरणि
जनकजननीजननि ॥

नीलसिन्धुजलधौतचरणतले
अनिलविकम्पितश्यामलाञ्चले
अम्बरचुम्बितभालहिमाचले
शुभ्रतुषारकिरीटिनि

प्रथमप्रभातोदयस्तव गगने
प्रथमसामरवस्तव तपोवने
प्रथमप्रचारिताः तव वनभवने
ज्ञानधर्मचारुकाव्यकथाः ॥

चिरकल्याणमयि त्वं हि धन्या
देशविदेशेऽन्नदानपुण्या
जाह्नवीयमुनाविगलितकरुणा-
पुण्यपीयूषस्तन्यवाहिनि ।

* 'अयि भुवनमनोमोहिनि'

# प्रणतिनिवेदनम्*

अनुवादकः—विश्वेश्वर विद्याभूषण काव्यतीर्थः

अवनमय ते चरणरजसि मम मस्तकम्
नयनसलिलचयैर्मज्जय गर्वम् ।
विधातुमात्मनो गौरवदानम्
प्रकरोमि स्वकमवमाननम्
विहरामि मुहुरहो परिवृत्य चात्मानम्
नयनसलिलैर्मज्जय गर्वजातम् ।

न कुर्यामहमात्मकर्मसु स्वप्रचारम्
संपूरय जीवने मे तेऽभिलाषम्
याचे ते चरमशान्तिम्
प्राणेषु तव परमकान्तिम्
समाच्छाद्य मामधितिष्ठ चित्तकमलम् ॥

---

* आमार माथा नत करे

# “ जयपराजयम् ”*

१

राजकन्याया नाम अपराजिता। उदयनारायणस्य सभाकविः शेखरो न जातु तां चक्षुषाप्यपश्यत्। किन्तु यस्मिन् दिवसेऽयं किमपि नूतनं काव्यं विरचय्य, सभातलमधिष्ठाय राजानं श्रावयति, तदा कण्ठस्वरम् इयदुच्चं विदधानस्तत् पठति, येन स स्वरस्तस्य समुन्नतस्य सौधस्य वातायनवर्तिनोऽदृश्यस्य श्रोत्रीसमूहस्य श्रवणपथं प्रवेष्टुं शक्नुयात्। स खलु तदानीं कमप्येकमगम्यं नक्षत्रलोकमुद्दिश्यात्मनः संगीतोच्छ्वासं प्रेरयतीव, यस्मिन् ज्योतिष्कमण्डलमध्ये तज्जीवनस्यापरिचितः कश्चिदेकः शुभग्रहोऽगम्येन महिम्ना विराजते। स कदाचिच्छायामिवालोकयति, कदाचिच्च नूपुरशिञ्जितमिवाकर्णयति। उपविशन् स चित्रयति–कीदृशं नु खलु तच्चरणयुगलं यत्संलग्नः कनकनूपुरः प्रतितालं गायति; तद् हि लोहितपाण्डरं चरणतलं प्रतिपदक्षेपं किं नु सौभाग्यं, कंन्वनुग्रहं कां नु वा करुणां विधाय भूमिं स्पृशति। मनसि तदेव चरणद्वयं प्रतिष्ठाप्य लब्धावसरः कविस्तस्मिन्नेव स्थाने आगत्य लुठति, तत्रैव च नूपुरशिञ्जनानुसारेणात्मनो गीतिं बध्नाति।

यस्यास्तु स छायां पश्यति, यस्या वा नूपुरं शृणोति, कस्या नाम सा छाया, कस्या एव वा स नूपुर इत्ययं तर्को वा संशयो वा न कदाचित्तस्य भक्तहृदये समुदित आसीत्। राजकन्यायाः परिचारिका मञ्जरी यदा जलाशयं गच्छति, तदास्याः शेखरस्य भवनपुरोवर्ती एव पन्थाः। सा किल गमनागमनयोः कविना किंचिदसंलप्य न प्रत्यावर्तते। स्याच्चेत् तथा

---

* श्रीविधुशेखरशास्त्रिभिः संपादितायाः मित्रगोष्ठीनाम्न्याः पत्रिकायाः (३. पृ. १८९-२०० शक. १८२८) उद्धृतम्।

निर्जनत्वं, सा खलु प्रभातप्रदोषयोः शेखरस्य गृहमध्येऽपि गत्वोपविशति। यावतो वारान् सा जलाशयमगच्छत् तावत एव यत् प्रयोजनमासीदिति नाबुध्यत, यद्यप्यासीदेवेति मन्यते, तथापि जलाशयगमनसमये तस्मिन्नेवावसरे किंचिद् विशेषायासेन रञ्जितवसनपरिधानस्य, कर्णयोश्च रसालमुकुलधारणस्य न किमप्युचितं कारणमधिगम्यते। लोकः कर्णाकर्णिकां मिथो हसितं चारभत। न खलु कश्चिल्लोकस्यापराध आसीत्। मञ्जरीमवलोक्य शेखरो विशेषेणानन्दं लभते। न चास्य तद्गोपनायापि तादृशः कश्चित्प्रयासोऽभवत्। तस्या नामधेयं मञ्जरीति। यदि विविच्यते, साधारणजनानाम् तदेवाभिधेयं पर्याप्तम्, शेखरः पुनः किंचित् कवित्वेन तां "वसन्तमञ्जरीति" सम्भाषते। लोकस्तु तदाकर्ण्य 'हन्त किमिदम्' इत्यकथयत्। अन्यच्च कवेर्वसन्तवर्णनायाम् "मञ्जुलवञ्जुलमञ्जरी" त्येतादृग्, अनुप्रासोऽप्यन्तरान्तरालभ्यत।

किं बहुना, जनरवो राज्ञोऽपि कर्णमध्यारोहत्। नरपतिः स्वकवेरीदृशस्य रसाधिक्यस्य परिचयमधिगत्य निकाममानन्दमनुभवति, तेन च नर्मालापं करोति। शेखरोऽपि तत्र सम्मिलति। हसन्नरपतिः पृच्छति "किं नु खलु भ्रमरो वसन्तराजसभायां केवलं गायति?" कविः प्रतिवक्ति—"नहि नहि, पुष्पमञ्जर्या मधु अपि पिबति।" इत्थं सर्वे हसन्ति प्रमोदं चानुभवन्ति। मन्येऽन्तःपुरे राजकन्यापराजितापि अन्तरान्तरा मञ्जरीमुपहसतीति। मञ्जरी तु न तेन सन्तुष्टा भवति। ईदृशमेव सत्यानृताभ्यां मिश्रित मानवजीवनं कथमप्यतिगच्छति। जीवनस्य किंचिद्धाता निर्मिमीते, किंचिदपरे निर्मिमते, किंचिच्च स्वयं निर्मीयते इति जीवनमिदमेकं किंचिद् बहुभिर्वस्तुभिः स्यूतानुस्यूतमिव, सत्यं चासत्यं च, काल्पनिकं च वास्तविकं च। कविस्तु यानि गानानि गायति, तान्येव केवलं सत्यानि सम्पूर्णानि च। गानस्य विषयः सैव राधा स एव च कृष्णः, स खलु चिरन्तनो नरः, सा च चिरन्तनी नारी, तच्चानादि दुःखं तच्चानन्तं सुखम्। तस्यां गीतिकायामेव तस्य स्वकथासीत्, तस्या एव च याथार्थ्यममरापुरस्य नरपतितः प्रकृतिर्यावत् सर्व एव स्वस्वचेतसि परीक्षितवन्तः। सर्वेषामेव वदने तस्यु

गीतिः। उदितायामेव चन्द्रिकायाम्, मनागापतित एव दक्षिणानिलाभासे सद्य एव चतसृषु दिक्षु कियद्भ्यः काननेभ्यः, कियद्भ्यः पथिभ्यः, कियद्भ्यो वातायनेभ्यः, कियद्भ्यः प्राङ्गणेभ्यः, कियतीभ्यश्च तरणीभ्यस्तद्-विरचिता गीतिका समुच्छ्वसिता सत्युद्गच्छति। किं बहुना, न खलु तद्यशसः सीमा बभूव। इत्थमेव बहूनि दिनान्यतीतानि। कविः कवितां रचयति। राजा शृणोति। राजसभायां जनाः साधुवादान् ददति। मञ्जरी जलाशय-मागच्छति। अन्तःपुरवातायनाच्च कदाचित् काचिच्छाया निपतति, कदाचिद्वा नूपुरशिञ्जितं श्रूयते।

२

अस्मिन् समये दाक्षिणात्यादेको दिग्विजयी कविः शार्दूलविक्रीडि-तेन च्छन्दसा राजप्रशस्तिं गायन् सभामण्डपमुपागतः। कविरयं स्वदेशा-न्निष्क्रम्य पथि मध्ये निखिलान् राजकवीन् पराभूयास्मिन् नगरे समुपस्थितः। राजकविः सादरमवदत् "एहि कवे एहि"। कविः पुण्डरीकस्तु दम्भभरेणाह "युद्धं देहि"। रक्षणीयो मानो महीपतेः—युद्धमवश्यं देयम्, किन्तु काव्ययुद्धं नाम किमिव भवतीति शेखरस्य विशेषज्ञानं नासीत्। स खलु नितान्तंचिन्तितः शंकितश्चाभवत्। निशायामस्य नाजायत निद्रा। केवलं यशस्विनः पुण्डरीकस्य दीर्घं बलिष्ठं देहम्, तीक्ष्णोच्चां नासिकां दर्पोन्नतं मस्तकं च दिग्विदिक्षु सर्वत्राङ्कितमिव द्रष्टुमेष आरभत। प्रभाते कम्पित-हृदयः कविः समराङ्गणं प्राविशत्। प्रत्यूषादेव सभागृहं लोकैः परिपूर्णम्, अभितः कलकलध्वनिरुद्गच्छति। नगरे निखिलमन्यद् राजकृत्यम् बद्धम्।

शेखरकविर्बहुनायासेन वदनमण्डले स्मितोत्फुल्लतां सम्पादयन् प्रति-कविं पुण्डरीकं नमस्कारेण समभाषत। पुण्डरीकस्तु निकारभरेण केवल-मिङ्गितमात्रेण प्रत्यर्पितनमस्कारः स्वानुवर्तिभक्तवृन्दमवलोकयन्नहसत्। शेखरः सकृदन्तःपुरवातायनेषु नयनं निक्षिप्याबुध्यत यदद्य तेभ्यः शतशत-

कौतूहलाकुलानां कृष्णतारकाणां व्यग्रा दृष्टिर्जनसमूहेष्वजस्रं निपततीति। कविरेकवारमैकाग्र्येण स्वचित्तमूर्ध्वलोकमुत्क्षिप्य आत्मनो जयलक्ष्मीमवन्दत, मनसा चाभाषत "यदि नामाद्य मे जयो भवेत्, तर्हि तेन हे देवि हे अपराजिते, तवाभिधेयस्य सार्थक्यं सम्पद्येत"। भेरीतूर्यमुरजपटहमवाद्यत, अगाहत च गगनं मांसलः शङ्खध्वनिः। जयजयशब्देनोपरिस्थिताः सर्वे उदतिष्ठन्। शुक्लवसनो राजा उदयनारायणः शारदप्रभातस्य शुभ्रजलदच्छेद इव धीरगतिः सभां प्रविश्य सिंहासनमध्यतिष्ठत्।

पुण्डरीक उत्थाय भद्रासनस्य पुरोदेशमुपस्थितः, महती सभा निस्तब्धा।

विस्फारयन् वक्षः समुन्नमय्यश्चोर्ध्वं किंचित् साचीकृतां कंधरां विशालमूर्तिः पुण्डरीको गम्भीरेण स्वरेणोदयनारायणस्य स्तुतिपाठमारभत। अमात इव स कण्ठस्वरो महतः सभाभवनस्य चतुर्दिक्षु भित्तिषु, स्तम्भेषु, छदेषु च समुद्रकल्लोल इव सुगम्भीरो घातप्रतिघातमकार्षीत्। तद्वेगेन च पश्यन्त्या जनमण्डल्या उरःकवाटं कामं स्पन्दमानमभवत्। कियत् कौशलम्, कियद् वैदुष्यम्, उदयनारायणाभिधानस्य कियद् व्याख्यानम्, नामाक्षराणां कियद्भिः प्रकारैः कियन्तो विन्यासाः, कियन्ति च्छदांसि, कियन्ति च यमकानि!

पुण्डरीकः स्तुतिपाठं समाप्योपाविशत्। कियन्तं क्षणं स्तिमितनिस्तब्धं सभागृहं तत्कण्ठप्रतिध्वनिना, जनसहस्रं च विस्मयगाढमौनावलम्बनेन कामं गम्भीरमन्वभूयत। बहुदूरदेशागता विद्वांसो दक्षिणहस्तोत्थापनेन तारतरं "साधु साधु" इत्यवदन्।

अथ नरपतिः सिंहासनादेकवारं शेखरस्य वदनमवालोकयत्। शेखरोऽपि भक्त्या प्रणयेनाभिमानेन च सकरुणाम् ससङ्कोचां च कामपि दृष्टिं राजानमभिप्रेरयन् मन्दं मन्दमुदतिष्ठत्। रामभद्रो यदा लोकरञ्जनार्थं द्वितीयामग्निपरीक्षामादिशत्, तदानीं जनकतनयापि मन्ये, ईदृशेनैवावलोक-

नेन स्वामिनः सिंहासनस्य सम्मुखमवर्त्तत। कवेर्नयनं नीरवं राजानमज्ञापयद्—"अहं तवैव, यदि त्वं विश्वस्य पुरतो मां परीक्षितुमिच्छेः, परीक्षस्व। किन्तु"—इतः परमेव कविर्नयनमवानमयत्। पुण्डरीकः सिंह इवोत्थित आसीत्; शेखरस्तु सर्वतो लुब्धकवेष्टितहरिण इवातिष्ठत्। तरुणो, युवकः, रमण्या इव लज्जास्नेहकोमलं वदनमण्डलं, पाण्डुवर्णः कपोलः, शरीराभोगश्च नितान्तं स्वल्पः। पश्यता ज्ञायते, भावस्पर्शमात्रमेवेयमङ्गयष्टिर्वीणातन्त्रीव वेपथुमधिगमिष्यतीति। शेखरो वदनमनुन्नमयन्नेव प्रथममतिमृदुना स्वरेण स्तुतिपाठमारभत। आदौ तावत् श्लोकमेकं, मन्ये, न कश्चित् सम्यक् आकर्णयितुमपारयत्। अथ क्रमेण मुखमुदनमयत्। यत्रैव च दृष्टिमपातयत्, तत्रैव निखिलो जनः सभाभित्तिश्च भावावेशेन द्रुततामिवागच्छत्। स्फुटमधुरः कण्ठस्वरः कम्पमानः समुज्ज्वलदहनशिखेवोर्ध्वमुत्पतितुमारभत। कविः प्रथमं राज्ञश्चन्द्रवंशीयामादिपुरुषाणां कथामवातारयत्, ततः क्रमेण कियतो यज्ञान्, कियतो विग्रहान्, कियन्ति वीर्याणि, कियन्ति दानानि, कियन्ति च महान्त्यनुष्ठानानि वर्णयित्वा तां किल राजकथां वर्त्तमानं कालमुपानयत्; अन्ते च तां खलु दूरस्मृतिबद्धां दृष्टिं परावर्त्त्य राज्ञो वदनोपरि अस्थापयत्। ततश्च भाषया छन्दसा च राज्यस्थानामखिलानामपि प्रजानां कामप्यनिर्वचनीयां प्रीतिं मूर्त्तिमतीमिव विधाय सभामध्यमानयदिव यथा दूरदूरतरात् शतसहस्राणि प्रकृतिमानसस्रोतांसि सवेगमागत्य राजपितामहानां तमिमं पुरातनं प्रासादं महता सङ्गीतेनापूरयन्निव तच्च संगीतमेकैकमिष्टकमस्य सौधस्यास्पृशदिव, आलिङ्गदिव, अचुम्बदिव च, अनन्तरं चान्तःपुरस्य गवाक्षजालसम्मुखमुत्थाय राजलक्ष्मीस्वरूपाणां प्रासादलक्ष्मीणां चरणतलयोः भक्तिप्रणयभरेणालुठदिव। ततोऽपि च प्रत्यावृत्य राजानमुपगम्य महतोल्लासेन शतशतवारं सिंहासनस्य प्रदक्षिणमकार्षीदिव। अथ कविरकथयत्—'महाराज, शब्दे तावदहं पराभवमङ्गीकुर्यामपि भक्तौ तु को मां पराभवेत्!' वदन्नेवेदं शेखरः कम्पमानकलेवर उपाविशत्। अश्रुस्तिमितनयनाश्च दर्शकसामाजिका जयजीवेति शब्देनाम्बरमध्वनयन्।

जनानां तमिममुन्मादं धिक्कारसूचकेन हसितेनावगणयन् पुण्डरीकः पुनरप्युदतिष्ठत्। इतोऽयं गर्जन्नपृच्छत्—'किं नाम श्रेयः शब्दात्'। क्षणादेव निखिलमपि निस्तब्धम्। ततोऽसौ नैकप्रकारैरात्मनोऽत्यद्भुतं पाण्डित्यं प्रकाशयन् निगमागमवेदवेदान्तादिभिः प्रमाणयितुमारभत यद्विश्वमध्ये शब्द एव सर्वश्रेष्ठः। शब्द एव सत्यः, स एव च ब्रह्म। ब्रह्मविष्णुमहेशानाः शब्दस्यैव वशे स्थिताः। अत एव न किंचिच्छ्रेयः शब्दात्। पितामहश्चतुर्भिरपि वदनैर्न खलु शब्दं समाप्तुं शक्नोति, न च पञ्चाननोऽपि नाम तावद्भिर्मुखैः शब्दस्यान्तमधिगच्छति। अत एवायं धृतमौनो ध्यानपरायणस्तत्तत्त्वमेवानारतमन्विष्यति। पुण्डरीक इत्थमिव पाण्डित्यस्योपरि पाण्डित्यमाविष्कृत्य, शास्त्रस्योपरि च शास्त्रं समानीय शब्दकृते किमप्यतिमहत् सिंहासनं विनिर्माय तत्रैनमस्थापयत्, अपृच्छत्पुनरपि वज्रनिर्घोषेण 'शब्दादपि श्रेयः किम्?' दर्पनिर्भरेणायमभितो निरैक्षत। अथ यदा न केनाप्यसौ प्रश्नः प्रत्युक्तः, तदा धीरं धीरं स्वासनमगृह्णात्। विद्वांसः "साधु साधु", "धन्यो धन्योऽसीति" असकृत्तारमुच्चारयामासुः। वरपतिर्विस्मयस्तिमितोऽतिष्ठत्, कविः शेखरोऽपि तस्यैतस्यातिमहतो वैदुष्यस्य समीप आत्मानं हीनममन्यत। तद्दिनार्थं सभा भग्ना। शङ्खध्वनिरम्बरान्तरमुत्पतितः।

३

परेद्युरागत्य शेखरो गीतिकामारभत;—वृन्दावने प्रथमवेणुर्वादितः। आभीराङ्गना न तदाप्यजानन् को वा कुतो वा तमवादयदिति। सकृदबुध्यत मलयानिलेनायमाध्मायत; कदाचिदमन्यत—उदीच्यां गोवर्धनगिरिशिखराद् ध्वनिरागच्छति; कदाचिदाशङ्कयत—उदयाचलशृङ्गमधिष्ठाय कश्चिन्मिलनायेव ह्वयति, कदाचिदचिन्त्यत—अस्ताचलमूलमध्यास्य कश्चिद् विरहशोकेनाक्रन्दति, कदाचिद्वा समभाव्यत कालिन्द्या एकैकस्या लहरीत एव स शब्द उद्भवतीति। अनन्तरं च प्रतिकुञ्जं प्रतिपुष्पं, प्रतिजलस्थलम् ऊर्ध्वम्, अधः, बहिरन्तश्चेति सर्वत एव स एव हृदयहरणो वेणुस्वन उदचरत। न तु

कश्चिदबुध्यत कस्तमवादयदिति । न च कश्चिन्निर्णेतुं प्राभवत् स किल वेणुध्वनिः किं नु नाम प्रतिवचनं प्रार्थयत इति । लोचनयुगलं नु केवलमश्रु परिपूर्णमभवत् ।

समितिं नृपतिं, स्वपक्षं परपक्षम्, कीर्त्तिमकीर्त्तिम्, उत्तरं प्रत्युत्तरम्, जयं पराजयञ्चेति सर्वमेव विस्मृत्य शेखरकविरात्मनो हृदयरूपे निर्जने लता-कुञ्जेऽवस्थायेव तामिमां वंशीगीतिकामगायत् । तदानीं किल कवेर्मनस्यासीत् केवलमेका ज्योतिर्मयी मानसी मूर्त्तिः । अश्रूयत च तेन केवलं कश्चित् कमलचरणयोर्नूपुरध्वनिः । मूढहृदय इव कविर्गीतिं समाप्य यदा उपा-विशत्, तदा तत् खलु सभाभवनान्तरं केनाप्यनिर्वचनीयेन माधुर्येण कयापि चातिमहत्या विरहवैयाकुल्या परिपूर्णमिवातिष्ठत् । न कोऽपि साधुवादं प्रदातुमपारयत् ।

ईषदुपशान्तेऽस्य सामाजिकचेतसां भावस्यातिशये, पुण्डरीकः सिंहा-सनस्य पुरतः उदतिष्ठत् । अकरोच्च प्रश्नम्—'का वा राधा, क एव वा कृष्णः'? उक्त्वैवेदमयमभितो दृष्टिमपातयत् । शिष्यांश्चालोकयन् मनाग् हसन् पुन-रपृच्छत्, "का वा राधा क एव वा कृष्णः" पृष्ट्वा चेदमसामान्यं पाण्डित्यं प्रकाशयन् स्वयमेवोत्तरं प्रदातुमारेभे, प्रत्यपादयद्देषः—राधा नाम प्रणवः, ओङ्कारः, कृष्णो ध्यानयोगः, भ्रुवोरन्तरालवर्त्ती बिन्दुर्वृन्दावनम् । इदं च व्याख्यातुमयम् इडां, पिंगलां, सुषुम्नां, नाभिपद्मं, हृत्पद्मम्, ब्रह्मरन्ध्रम् अन्यच्चै-तादृशमुपानयत् । अमीमांसत च राकारस्य कोऽर्थः, कोऽर्थो धाकारस्य, कृष्णशब्दस्य च ककाराद् णकारं यावदेकैकस्याक्षरस्य कियन्तः प्रकारा भिन्नभिन्ना अर्थानां सम्भवन्तीति । स खल्वेकवारमबोधयत्—कृष्णो नाम यज्ञः, राधा अग्निः, अपरवारमबोधयत् कृष्णो वेदः, राधा षड्दर्शनी ; कृष्णः शिक्षा ; राधा दीक्षा, राधा मीमांसा, कृष्णस्तर्कः ; राधा उत्तरप्रत्युत्तरम् कृष्णो जयलाभः । अथायं राजानं, पण्डितान्, सहासं चालोक्योपाविशत् । महीपतिः पुण्डरीकस्य महाद्भुतया शक्त्या मुग्धोऽभवत्, सभासदो विद्वांसश्च विस्मयस्य परां सीमानमध्यगच्छन् । राधाकृष्णपदयोर्नवीनया व्याख्यया च

वेणुनिस्वनः, कालिन्दी कल्लोलः, प्रणयमोहश्च दूरनगमन् । अपनीयेव कश्चित् वसुमत्या वासन्तिकं ललितललितं हरितिमानं, गोमयेन तामलिम्पत् । शेखर आत्मनस्तावतां दिवसानां तास्ता निखिला गीतीर्मुधैवेति मन्तुमारभत । नातः परमस्य पुनरपि गातुं शक्तिरासीत् । तस्मिन्नहनि समितिर्भग्ना ।

४

परेद्युः पुण्डरीको व्यस्तं, समस्तं, द्विव्यस्तं, द्विसमस्तकम्, आद्युत्तरम्, मध्योत्तरम्, अन्तोत्तरम्, वाक्योत्तरम्, श्लोकोत्तरम्, वचनगुप्तम्, क्रियागुप्तम्, कारणगुप्तम्, मात्राच्युतकम्, च्युतदत्ताक्षरम्, अर्थगूढम्, शुद्धापभ्रंशम्, व्याजोक्तिः, प्रहेलिका, चक्रबन्धः, पद्मबन्ध इत्याद्यनेकैः प्रकारैरद्भुतां शब्दचातुरीमदर्शयत् । तत्सर्वं शृण्वन्तः सामाजिका विस्मयस्तिमिताः संवृत्ताः, शेखररचितानि काव्यानि निकामं सरलानि प्रसन्नानि च । सुखदुःखोत्सवादौ सर्वत्रैव तानि साधारणैरगीयन्त । तेऽद्य स्पष्टमबुध्यन्त शेखरस्य न किमपि गुणनैपुण्यमस्ति—यदीच्छेयुस्तेऽपि तादृशानि काव्यानि विरचयितुं प्रभवेयुरिव । यत्पुनर्न तथा कुर्वन्ति, तत्र अनभ्यासः, अनिच्छा, अनवसरश्चेत्यादिकमेव कारणम् । न हि ताः किल कथाविशेषेणाभिनवाः, दुरूहा वा । न च ताभिर्जगज्जनानां शिक्षणमपि किंचिद्भवति । यत्पुनरद्य तैराकर्णितं, तन्महदद्भुतं, अतीतेऽपि दिवसे यत् श्रुतं, तत्रापि विपुलायाश्चिन्ताया अनेकस्याश्च शिक्षाया विषया आसन् । पुण्डरीकस्य पाण्डित्यं नैपुणं चेत्यनयोः पुरतस्तेषां स्वकीयः कविर्बालक इव साधारण इव च तैरमन्यत । मीनपुच्छाघातेन सलिलाभ्यन्तरे यद्गूढमान्दोलनं जायते, कमलं यथास्य एकैकमाघातमनुभवितुं प्रभवति, पुण्डरीकोऽपि तथैव परितो वर्त्तमानानां प्रेक्षकाणां चेतसि समुदितं भावमवगन्तुम् अपारयत् ।

अद्य चरमं दिनम् । अद्यैव जयपराजयं निर्णीयेत । नृपतिः स्वकविं तीव्रया दृष्ट्यावालोकयत् । अयं तदभिप्रायः— न त्वमद्य निरुत्तरस्तिष्ठेः, अवश्यं

खलु त्वं यावच्छक्यं यत्नमादध्याः । शेखरः श्रान्तभावेनोदतिष्ठत्, इदं च किंचिदकथयत्—'सितकमलवासिनि, वीणाधारिणि देवि, त्वमपि नाम यदि कमलवनं शून्यं विधाय मल्लभूमिमवतरेः, तर्हि तव चरणासक्तानां पीयूषपिपासूनां भक्तानां हन्त का नु गतिरुत्पत्स्यते ।' स्ववदनमीषदुन्नमय्येदमवदत् कविः--यथा राजान्तःपुरस्य वातायनसम्मुखमेव तत्रभवती भगवती वल्लकीललितपाणिरवनमितनयनेवावर्त्तत ।

अथ पुण्डरीक आसनादुत्थाय सशब्दमहसत् 'शेखर' पदस्य च चरममक्षरद्वयमुपादाय निरर्गलं श्लोकं रचयितुमारभत । अकथयत् —कः खलु सम्बन्धो नाम स्वरस्य कमलवनेन ? सत्यपि च लोके सङ्गीतस्य प्रभूतानुशीलने सोऽयं जीवः किमिव नु फलमधिगतः ? वस्तुतस्तु पुण्डरीक एवाधिष्ठानं भगवत्याः सरस्वत्याः । सेयं महाराजस्याधिकारे कं नामापराधं कृतवती, येनेह सा खरवाहनीकृत्येत्थम् अपमान्यते ?

इदमाकर्ण्य पण्डितास्तारस्वरेणाहसन् । अन्येऽपि सभासदा न ततो व्यरमन् । तच्चालोक्य सभास्थाः प्रेक्षकाः -यैस्तद् बुद्धम्-सर्व एव हसितुमारेभिरे । अत्र युक्तप्रत्युत्तरप्रत्याशया महीपतिरङ्कुशेनेव तीक्ष्णेन दर्शनेनात्मनः कविबन्धुमुत्तेजयितुमयतत । शेखरस्तु मनागपि तन्न विगणयन्निश्चलोऽतिष्ठत् ।

ततो नरपतिर्मनसि शेखरं प्रति निकामं कुपितः सन् सिंहासनादवततार । स्वकण्ठादुन्मोच्य च भास्वरं मुक्ताहारं पुण्डरीकस्योरसि परिधापयामास । सभास्थाः सर्वे "धन्यो धन्य" इत्युदचारयन् । अन्तःपुराच्च युगपदेव कङ्कणवलयनूपुरादीनां निक्वणोऽश्रूयत—तमेवाकर्ण्य शेखर आसनं परित्यज्योत्थितो मन्दं मन्दं सभागृहाद् बहिरगच्छत् ।

## ५

कृष्णचतुर्दश्या रात्रिः । निबिडोऽन्धकारः कुसुमसौरभमुद्वहन् मलयानिलो विश्वबन्धुरिव नगरस्य प्रतिगृहं प्रविशति । भवनाभ्यन्तरे शेखरेण

दारुमञ्चादवतार्य स्वकीया ग्रन्थाः पुरतो राशीकृत्य स्थापिताः। अन्विष्यान्विष्य च तन्मध्यात् स्वविरचितास्तु पृथगेव संगृहीताः । बहूनां दिवसानां बहवो रचनाः। तासु काश्चित् स्वयमेव तेन प्रायो विस्मृताः। ताः किल स तत इतः किञ्चित् किञ्चित्पठितुमारभत। अद्य हि सर्वमेव तद्विरचनमकिञ्चित्करमिव तस्य प्रत्यभासत । निःश्वस्यावादीत् "अहो समग्रस्य जीवनस्य किमयमेव सञ्चयः?" कतिचिच्छन्दांसि, कतिचित्पदानि, तेषां च सम्मिलनानि ; तेषु यत् किमप्यनिर्वाच्यं सौन्दर्यम्, कश्चिदनिर्वेद्यश्चिरप्रमोदः, कश्चिच्च स्वहृदयस्यैव गभीरो भावो निबद्ध इति स्वयमेवायं तदानीं न वेत्तुमशक्नोत। यथा न किञ्चिदशनीयं व्याधिताय रोचते, अनेनापि तथैवाद्य यत किञ्चित करतलमागतं, सर्वमेव तद्दूरतः परित्यक्तम्। राज्ञा मैत्री, लोके कीर्तिः, हृदये चाशेति सर्वमेवाद्य अन्धतामिस्रं शून्यमिवास्य प्रत्यभात्। अथायं क्रमेणैकैकं निखिलं ग्रन्थं खण्डयित्वा पुरोवर्तिनि प्रज्वलति हुताशने निक्षेप्तुमारभत। हसंश्चोवाच "महान्तो महीपपतयोऽश्वमेधं यज्ञमनुतिष्ठन्ति—मम पुनरद्यायं काव्यमेधो यज्ञः।" परन्तु तदानीमेव तस्य स्मृतिपथमुदितं, नेयमुपमा सङ्गच्छते। अश्वमेधीयोऽश्वो यदा सर्वत्र विजयी सन् प्रत्यावर्तते, तदानीं किलाश्वमेधो विधीयते। अहन्तु यदा मे काव्यं पराभूतं, तदेमं कर्त्तुमुद्युक्तोऽस्मि इतः पूर्वमेवास्यानुष्ठानम् उत्तममभविष्यत्।

क्रमेण सर्व एव ग्रन्था अग्नौ समर्पिताः। वह्निर्लोलज्वालाकलापेनोद्दीप्तः। अथ कविः सवेगं शून्यं भुजद्वयमूर्ध्वमुत्क्षिप्य व्यलपत्। "तुभ्यमेव सर्वं प्रदत्तम्, तुभ्यमेव सर्वं प्रदत्तम्, नन्वपि रुचिरदहनशिखे, तुभ्यमेव सर्वं प्रदत्तम्, इयन्ति दिवसानि त्वय्येव सर्वमहं जुहुदासन्, अद्य चरमेयमाहुतिः। बहून् कालान् त्वं मे मनसि ज्वलितासि, अयि वह्निरूपिणि मोहिनि, यदि नामाहं कनकमभविष्यं, ननु समुज्ज्वलोऽभविष्यम्। परन्तु देवि, तुच्छं तृणमहम्, अत एव भस्मावशेषोऽस्मि संवृत्तः"। रात्रिरधिका संवृत्ता। शेखरः स्वगृहस्य सर्वाणि वातायनान्यपावृणोत्। तेन प्रदोषसमय एव स्वप्रियाणि कुसुमान्युद्यानात् सञ्चितान्यासन् धवलानि खल्वेतानि पुष्पाणि—यूथिका-

मल्लिकागन्धराजानि । मुष्टिग्राहं गृहीत्वा विकीर्णानि तानि शयनोपरि । प्रज्वालितश्च प्रदीपो गृहस्य चतुर्दिक्षु । अथ सह मधुना उद्भिद्विशेषस्य रसं निर्विकारमुखेन निपीय मन्दं मन्दमागत्य शय्यायामशेत । शरीरं संस्रस्तं, नयनं च निमीलितं भवितुमारभत ।

नूपुरः क्वणितः । सह दक्षिणपवनेन केशपाशस्य किमपि सौरभं गृहमध्यमविशत् । कविर्निमीलितेन नयनेनाकथयत्—'देवि, किं नु भक्ते सदयासि कच्चिद्? यतो दिनस्यानन्तरम् अद्य आत्मदर्शनं प्रदातुमागतासि ? स कस्याप्यतिमधुरस्य कण्ठस्य प्रतिवचनमश्रृणोत 'आगतास्मि कवे' । शेखरो विस्मयातिशयेन नयनमुदमीलयत । अपश्यत्—शयनसमीपे कापि परमा सुन्दरी रमणीमूर्त्तिः—मरणसमाच्छन्नेन बाष्पाकुलेन नयनेन न स स्पष्टमालोकितुमपारयत् । अमन्यत—सा खलु तस्याश्छायामयी प्रतिमा अन्तराद्बहिरागत्य मरणसमये तद्वदनमभिपश्यन्ती स्थितेति ।

उक्तवती रमणी, "अहं राजदुहिता अपराजिता" ।

कविः परं प्रयासेनोत्थायोपविष्टः ।

राजतनया अवोचत—"न खलु राज्ञा ते सुविचारो विहितः, तवैव जयः संवृत्तः; अत एवाहमद्य कवे जयमालिकां प्रदातुमागतास्मि" ।

उक्त्वेदमपराजिता स्वयं विरचितां पुष्पमालां निजकण्ठादुन्मोच्य कवेः कण्ठे परिधापितवती । मरणाहतः कविः शयनोपरि निपतितः ।

---

# स्वर्णमृगः*

अनुवादकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः

आद्यानाथ - वैद्यनाथ - चक्रवर्तिनौ द्वौ दायादौ । तयोश्च वैद्यनाथस्यैवार्थिकी परिस्थितिः कथञ्चिन्निकृष्टा । वैद्यनाथस्य पितुर्महेशचन्द्रस्य लेशतोऽपि वित्तविषया बुद्धिर्नासीत् । ज्यायसः शिवनाथस्योपरि सर्वथा तस्य निर्भरोऽवर्तत । शिवनाथोऽपि भ्रात्रे पुष्कलानि स्निग्धवचनानि प्रदाय विनिमयेन तस्य समग्रां सम्पदमात्मसादकरोत् । केवलं कतिचन राजकीयार्थपत्राण्येवावाशिष्यन्त । जीवनसागरे तानि पत्राण्येव तस्यैकमालम्बनम् ।

शिवनाथः खलु बहुशोऽन्विष्य पुत्रस्याद्यानाथस्य धनिकतनयया विवाहं विनिर्वर्त्य वित्तवर्धनस्य सौकर्यान्तरं संसाधितवान् । महेशचन्द्रः पुनः सप्तकन्याभारग्रस्तं दरिद्रं द्विजं दयमानः वराटिकामात्रमपि शुल्कमगृहीत्वा तस्य ज्येष्ठया दुहित्रा स्वतनयस्य (वैद्यनाथस्य) परिणयोत्सवं सम्पादितवान् । यत् स सप्तैव दुहितॄर्गृहं नानीतवान् तत्र तस्य पुत्रस्यैकत्वं ब्राह्मणस्य च तद्गतनिर्बन्धाभाव एव निदानम् । तथापि तासां विवाहेषु शक्तितोऽप्यतिरिक्तमर्थसाहाय्यमकरोत् ।

पितुर्मरणादनन्तरं वैद्यनाथस्तस्य राजकीयार्थपत्रकतिपयेनैव सर्वथा निश्चिन्तः सन्तुष्टचित्तश्चासीत् । कर्माद्धिकस्य वार्तापि तस्य मनसि कदापि नोदयमविन्दत । कर्म तस्यैकमेवासीत् । स खलु वृक्षस्य शाखा भङ्क्त्वा सुखासीनो महता यत्नेन यष्टीर्निर्मिमीते स । राष्ट्रस्य बालका युवानश्च

* मञ्जूषायाः (८. नवम्बर १९५३ - आगस्ट-१९५४) उद्धृतमिदम् ।

यष्ट्यर्थं तं शरणं जग्मुः । सोऽपि तास्तेभ्यः प्रददौ । किञ्च वदान्यतायाः सन्धुक्षणेन मत्स्यग्रहणदण्डं वियच्चारिपत्रक्रीडनकं काष्ठमयं सूत्रधानं च निर्मिमाणो भूयांसं कालं व्ययितवान् । यत्र महता यत्नेन सुचिरं तक्षण-निर्लेखनादिकमपेक्ष्यते, अथ च यद्धि तावन्तं परिश्रमं कालव्ययं नार्हति तथाविधं किञ्चिद् हस्तसाध्यं कार्यं चेदलभ्यत, तर्हि स उत्साहस्य परां काष्ठामधि-रोहति स्म ।

प्रायेणैवादृश्यत यद् यदा तावत् पल्ल्यां विभिन्नपक्षाणां संघर्षेण कुमन्त्रणेन च सुबृहन्तः पवित्रा वङ्गीयाश्चण्डीमण्डपा धूमाच्छन्नाः सञ्जायन्ते स्म, तदा वैद्यनाथः कलमकर्तनिकामेकां वृक्षशाखिकां चैकां गृहीत्वा प्रातरारभ्य मध्याह्नं यावत्, आहारान्निद्रायाश्चोर्ध्वं सायाह्नं यावत् स्वाङ्गणमण्डपे एकाक्ये-वातिवाहयति ।

षष्ठीदेव्याः प्रसादेन शत्रूणां मुखेषु भस्म प्रदाय क्रमेण वैद्यनाथस्य द्वौ पुत्रौ दुहिता चैकाजायन्त । भवनान्तरगृहिण्या विन्ध्यवासिन्या यथा भूषणादीनि, काशिका शाटिका, वार्तालापयोर्भङ्गिः, आचारव्यवहारयोर्गौरवं, न खलु तथाविधं मोक्षदायाः सम्भवति-को वेतोऽसमीचीनतरो व्यतिकरः स्यात् ! दिने दिने मोक्षदाया असन्तोषः समवर्धत । परिवारस्त्वेक एव । भ्रातुर्वित्तस्य वञ्चनामूलकलाभेनैव तेषामीदृशी समुन्नतिः । यथा यथा मोक्षदाकर्णयति वार्तामुन्नतेस्तथा तथा न माति स्म तस्य मानसे श्वशुरं प्रति, श्वशुरस्य चैककं पुत्रं प्रति, अश्रद्धा चावज्ञा च । स्वगृहस्थं किमपि तस्यै न रोचते । सर्व-मेवासौकर्यकरं सम्मानहानिसम्पादकं च । शयनपर्यङ्कं शवोद्वहनस्याप्ययोग्यम् । यस्य खलु सप्तकुलेषु कोऽपि नास्ति तथाविधश्चर्मचटिकाशावकोऽप्यस्मिञ्जीर्ण-प्राचीरे वस्तुं न समीहते । गृहोपकरणसन्दर्शनेन ब्रह्मचारिणः परमहंसस्यापि प्रवर्ततेऽश्रधारा नयनयोः । न खलु पुरुषेणेव कापुरुषजातीयेन केनाप्यासाम् अत्युक्तीनां प्रतिवचनं सम्भवति । अत एव वैद्यनाथो बहिर्द्वारवेदिकायामुपविष्टो द्विगुणेन मनोयोगेन यष्टितक्षणे प्रवृत्तोऽभवत् ।

परं न खलु मौनव्रतमेव विपदस्तारकम् । अन्तरान्तरा पत्युः शिल्पकर्म प्रतिघ्नती गृहिणी तमन्तःपुरमाजुहाव । गाम्भीर्यातिरेकेण चान्यत्र दृष्टिं पातयित्वावदत्, "मा तावद् गोपालकोऽस्मद्गृहे दुग्धं दात्" इति ।

वैद्यनाथः कञ्चित्कालं तूष्णीमवस्थाय सप्रश्रयमवदत्, "पयसो निरोधः समीचीनः स्याद्वा ? किं तावद् बालकाः पिबेयुः" इति ।

गृहिणी प्रत्यवदत्, "काञ्जिकम्" इति ।

कदापि वा विपरीत एव भावः प्रत्यक्षीक्रियते स्म । गृहिणी वैद्यनाथमाहूयावदत, "नाहं किमपि जानामि । यत्कर्तव्यं त्वमेव तत्कुरु" इति ।

वैद्यनाथो म्लानमुखेनापृच्छत्, "किं वा मया कर्तव्यम्" इति ।

पत्न्यवदत्, "मासस्यास्य कृते सर्वं द्रव्यादिकं क्रीणीहि" इति इत्युक्त्वा तथाविधां द्रव्यतालिकां प्रायच्छद्, यया किल राजसूययागोऽपि महता डम्बरेणानुष्ठातुं सुशकः स्यात् ।

वैद्यनाथश्चेत् साहसमवलम्ब्यापृच्छत्, "किमेतावन्तो द्रव्यसम्भारा अपेक्ष्यन्ते ?" इति, स प्रत्युत्तरमाकर्णयत्, "तर्हि पुत्राः सर्वेऽनाहारेण प्राणान् परित्यजन्तु, अहमपि प्रैमि, ततश्च त्वमेकाक्यवस्थायाल्पीयसैवार्थव्ययेन संसारयात्रां निर्वाहयितुं प्रभविष्यसि" इति ।

इत्थं क्रमेण वैद्यनाथोऽबुध्यत न खल्वित ऊर्ध्वं यष्टितक्षणेन कार्यं सेत्स्यति । यः कोऽप्युपायोऽवश्यमेव विधातव्यः । दास्यं वा वाणिज्यं वा तस्य दुराशामात्रमेव स्यात् । अत एव कुबेरस्य कोषागारे प्रवेशस्य कश्चन पन्थाः स्वल्पप्रमाण आविष्करणीय इति ।

एकदासौ निशायां शय्यामधिशयानः कातरं प्रार्थयत, "अये मातर्जगदम्ब, यदि तावत् स्वप्ने दुःसाध्यस्य कस्यचन व्याधेर्भेषजमनुशिष्यास्तर्हि वृत्तान्तपत्रेषु तस्य प्रकटनादिविलेखनस्य भारो मया ग्रहीष्यते" इति ।

तस्यामेव रात्रौ स्वप्ने तेन दृष्टम्, पत्नी तदीयाऽपरक्तां विधवाविवाहं निर्वत्स्यामीति कृतपणा तिष्ठतीति। विद्यमानेऽर्थाभावे कुतो वा तदुपयुक्त-मलङ्करणं लभ्येत इत्युक्त्वा वैद्यनाथस्तत्र विप्रतिपद्यते। न खलु विधवाया अलङ्करणमपेक्ष्यत इत्युक्त्वा पत्नी तदीया तां विप्रतिपत्तिं निराकरोति। एत-स्यापि किमप्यखण्डनीयमुत्तरं वर्तत इति तस्य मनस्युदेति, परमुत्तरं तु तत् कथमपि न प्रतिभाति। व्यतिकरे चास्मिंस्तस्य निद्राभङ्गः सञ्जातः। स चापश्यत् प्रभाता रजनीति। कथं च स्वपत्न्या विधवाविवाहो न सम्भवतीत्यत्र सदुत्तरं सद्य एव तस्य स्मृतिसरणिमुपारूढम्, तेन च मन्ये स कथञ्चिद् दुःखितोऽभवत्।

परेद्यवि प्रातःकृत्यं परिसमाप्य यावदसावेकक एव सुखासीनो वियच्चारिपत्रविहगस्य सूत्रं सन्नाहयति, तावत् कश्चन सन्न्यासी जयध्व-निमुच्चारयन् द्वारदेशमुपागतः। तस्मिन्नेव मुहूर्ते वैद्यनाथो विद्युत्स्फुरणमिव भाविन ऐश्वर्यस्य समुज्ज्वलां मूर्तिं प्रत्यक्षीचक्रे। सन्न्यासिने पुष्कलं समादरं स्वागतवचनादिकम् अभ्यवहार्यं च समुपानयत्। बहुतराच्चानुनयादूर्ध्वम-बुध्यत, प्रभवत्येव सन्न्यासी सुवर्णं विनिर्मातुमिति। स च तां विद्यां तस्मै प्रतिपादयितुं नासम्मतोऽभूत्।

गृहिण्यप्यसङ्गीतकमेवानृत्यत्। यथा हि समुपस्थिते यकृतो विकारे सर्वमेव हरिद्रावर्णं विलोकयति जनः, सापि तथैव पृथिव्याः सर्वत्रैव सुवर्णं पश्यति स्म। कल्पनाकर्मारेण शयनपर्यङ्कं गृहसज्जां भवनप्राकारमपि सुवर्णमण्डितं विधाप्य सा मनसा यातरं विन्ध्यवासिनीं न्यमन्त्रयत।

सन्न्यासी प्रतिदिनं दुग्धस्य शरावद्वयं मोहनभोगस्य च सार्धशरावमुप-भुङ्क्ते स्म; वैद्यनाथस्य चार्थपत्राणि-प्रदुह्यासजस्रं रौप्यरसं निःसारितवान्।

यष्टि-मत्स्यग्रहणदण्ड-सूत्रधान-प्रार्थिनो बालका वैद्यनाथस्य रुद्धद्वारं वृथैव समाहत्य प्रतितिष्ठन्ते। गृहे च पुत्रादयो यथाकालमाहार्यं न लभन्ते, निपत्य च स्फीतललाटा भवन्ति, क्रन्दनेन गगनं विदारयन्ति, गृहपतेर्वा

गृहिण्या वा कस्यापि तत्र लेशतोऽपि दृष्टिपातो वा भ्रुवोर्विक्षेपोऽपि वा नास्ति। निस्तब्धमेवाग्निकुण्डस्य पुरत उपविष्टयोः कटाहं च निरीक्षमाणयोरुभयोश्चक्षुषि पल्लवो नास्ति, वदने च वचनं नास्ति। तृषितैकाग्रनेत्रे निरन्तरमग्निशिखायाः प्रतिबिम्बनेन नेत्रमणिना स्पर्शमणेरिव गुणः समासादितः। दृष्टिरथश्च सायन्तनसूर्यास्तपथ इव जाज्वल्यमानेन सुवर्णप्रलेपेन रक्तवर्णः सञ्जातः।

अर्थपत्रिकाद्वये समाहुतेऽस्मिन् स्वर्णयज्ञानले, एकदा सन्न्यासी समाश्वासयत्, "श्वो हिरण्ये वर्णः संक्रान्तो भविष्यति" इति।

तस्मिंश्च दिवसे निशायां कस्यापि निद्रा नागता नयनयोः। स्त्रीपुंसौ मिलित्वा सुवर्णपुरीं निर्मिमाते स्म। तदधिकृत्यान्तरान्तरा मतभेदेन वितर्केण चोभयोर्मनसि कृतं पदम्, परमानन्दस्यावेगेनाचिरेणैव मीमांसा सञ्जाता। न खलु परस्परानुरोधेन ताभ्यां स्वस्य स्वस्य मतस्य किञ्चित्परित्यागे लेशतोऽपि सङ्कोच आश्रितः—निशायां तस्यां दम्पत्योरेकीकरणं तथा घनीभूतं सञ्जातम्।

परेद्यवि सन्न्यासी क्वापि न दृष्टः। समन्ततश्च सुवर्णस्य वर्णमन्तर्हितम्, सूर्यकिरणा अपि तमोमया एवादृश्यन्त। इत ऊर्ध्वं शयनपर्यङ्को भवनोपकरणानि गृहप्राकाराश्च चतुर्गुणं दारिद्र्यं जीर्णतां च प्रकटयन्ति स्म।

इत आरभ्य गृहकार्यमधिकृत्य यदैव वैद्यनाथस्तुच्छमप्यभिमतं प्रकटयितुमुद्युङ्क्ते तदैव गृहिणी तीव्रमधुरेण स्वरेण वदति, "बुद्धेः परिचयो बहुधा प्रदत्तः, इदानीं कियन्तिचिद्दिनानि विरतोऽवतिष्ठस्व" इति। वैद्यनाथः सर्वथा निर्वाण एव भवति।

मोक्षदया तथाविधायाः श्रेष्ठताया भाव आश्रितो यथा प्रतीयते न खलु स्वर्णमरीचिकयानया सा मुहूर्तमपि समाश्वस्तेति।

सापराधो वैद्यनाथः पत्नीं कथमपि तोषयितुं विविधान् उपायानचिन्तयत्। एकदा च कस्मिंश्चन चतुष्कोणे पत्रपुटे निभृतमुपहारमादाय पत्नीमुपसृत्य

प्रभूतहास्यविकासपुरःसरं निरतिशयेन चातुर्येण स्कन्धौ सञ्चाल्यावदत्, "उच्यतां तावत् किं मयानीतम्" इति।

पत्नी कौतूहलं संगोप्य तटस्थाब्रवीत्, "कथं वा मयोच्यते? न खल्वहं दैवज्ञा" इति।

वैद्यनाथोऽनावश्यकं कालव्ययं विधाय प्रथमतस्तावत् बन्धनसूत्रस्य ग्रन्थिं शनैरुन्मोचितवान्, ततश्च फूत्कारेण फूत्कारेण पत्राणां धूलिमपासारयत्, ततश्चातिमात्रेणावधानेनैकैकं पत्रापवृत्य पत्रपुटमुन्मोच्य आर्ट्स्टुडियो-निर्मितं वर्णरञ्जितं दशमहाविद्यानां चित्रं निष्कास्यालोकमभि प्रत्यावर्त्य गृहिण्याः पुरतोऽधारयत्।

तदात्व एव विन्ध्यवासिन्याः शयनकक्षस्थितानि वैदेशिक-तैल-चित्राणि गृहिण्याः स्मृतिपथमवतीर्णानि, उक्तं च तया, "हन्त मातर्जीवामि जीवामि। तवैव बहिःप्रकोष्ठे संस्थाप्य निषद्य निषद्य निरीक्ष्यतामिदम्। न खल्वेतेन मे कार्यम्" इति।

विषण्णो वैद्यनाथोऽबुध्यत—स खलु सहैवेतराभिः शक्तिभिर्योषिदनुरञ्जनस्य दुर्लभशक्त्यापि वञ्चितो विधात्रेति।

अत्रान्तरे मोक्षदा तद्देशे यावन्तो दैवज्ञा आसन् सर्वेभ्य एव तेभ्यः स्वपाणिरेखाः प्रादर्शयत्, जन्मपत्रिकां च। सर्व एवाब्रुवन् सा खलु जीवद्भर्तृकैव मरिष्यतीति। परं न खल्वसौ परमानन्दमयस्यास्य परिणामस्य कृते सर्वथा व्यग्रासीत्, अत एव न खल्वेतावतापि निववृते तस्याः कुतूहलम्।

आकर्णितं च तया, शोभनमेव स्वं पुत्रभाग्यम्। नचिरादेव पुत्रैश्च दुहितृभिश्च तस्या गृहं पूर्णं भविष्यतीति सम्भाव्यते इति। श्रुत्वा न खलु विशेषतः कोऽपि हर्षस्तया प्रकटितः।

अन्ततश्चैकेन गणयित्वोक्तम्, "वत्सराभ्यन्तरेण चेद् वैद्यनाथो दैवधनं न प्राप्नुयात्, अहं पुस्तकपञ्चाङ्गादिकं सर्वमेवाग्निसात् करिष्यामि" इति। गणकस्य निदारुणं पणमिमं श्रुतवत्या मोक्षदाया मानसे तिलमात्रस्याप्यविश्वासस्य कारणं नावाशिष्यत।

गणकस्तावत् प्रभूतं पारितोषिकं परिगृह्य प्रययौ। वैद्यनाथस्य जीवनं पुनर्दुर्वहं सञ्जातम्। अर्थोपार्जनस्य केचन सामान्याः पन्थानो वर्तन्ते, यथा कृषिः, श्ववृत्तिः, वाणिज्यं, चौर्यं, विप्रलम्भश्च। परं दैवधनस्याप्तये तथाविधः कोऽपि निर्दिष्ट उपायो नास्ति। अत एव मोक्षदा यथा यथा समुत्साहयति भर्त्सयते च तथा तथा वैद्यनाथः क्वापि पन्थानं नाधिगच्छति। कतमत् स्थानं खनितुमारप्स्यते, कतमस्यां पुष्करिण्यां निमज्जकान् अवतारयिष्यति, गृहस्य कतमं प्राचीरं वा भञ्ज्यात्, चिन्तयन्नपि किमपि निर्णेतुं न प्रभवति।

मोक्षदा च सातिशयमपरक्ता भर्तारं व्यज्ञापयत, "न खलु मयेतः पूर्वं स्वप्नेऽपि सम्भावितं यत् पुरुषस्य मस्तके मस्तिष्कस्य स्थान एतावद् गोमयं तिष्ठेत्" इति।

पुनस्तयोक्तं, "किञ्चिच्चलनारोहणादिकं स्वीकुरु। उद्यमं तावदातिष्ठ। न खलु मुखं व्यादायोपविष्टे त्वयि वियतो रूप्यकवृष्टिर्भविष्यति" इति। वचनमिदं समीचीनमेव, सैव च वैद्यनाथस्यैकान्तिकी वाञ्छा, परं कस्यां दिशि स चलिष्यति, किं वारोक्ष्यति तत्तु केनापि नोच्यते। अत एव प्राङ्गणे निषद्य वैद्यनाथः पुनरपि यष्टितक्षणे प्रवृत्तः।

इतश्चाश्विने मासि दुर्गोत्सवः प्रत्यासीदत्। चतुर्थीमेव तिथिमारभ्य घट्टेषु नावां संलगनमुपक्रान्तम्। प्रवासिनस्तावत् स्वगृहं प्रत्यावर्तन्ते स्म। तेषां च वङ्गेरिकासु वर्तन्ते मानकानि, कूष्माण्डानि, जीर्णानि च नारिकेलफलानि; त्रापुषेषु च पेटकेषु पुत्राणां कृते पादुका-छत्र-वस्त्रम्, प्रेयसीनां च कृते गन्धसारः, फेनकः (soap), अभिनवाख्यानग्रन्थाः, सुवासितं नारिकेलतैलं च।

मेघमुक्ते गगनमण्डले शारदाः सौरकिरणा उत्सवस्य हास इव सर्वतः प्रसृताः। पक्वप्रायाणि धान्यक्षेत्राणि वातनुन्नानि थरथरायन्ते ( विकम्पन्ते ), वर्षाविधौतानि बलवन्ति पादपपल्लवानि नवशीतपवनेषु शिरशिरायन्ते ( पुलकमनुभवन्ति ), त्रसरकञ्चुकप्रावृताः पाणिविलम्बितावर्तितोत्तरीयाः सातपत्रशिरसः प्रत्यावृत्ताः पथिकजनाः क्षेत्रमार्गेण गृहाभिमुखं प्रचलन्ति।

वैद्यनाथस्तत्र निषद्य तत्सर्वमालोकते, हृदयतश्चास्य दीर्घः श्वासः समुद्गच्छति। स च स्वेन निरानन्दगृहेण वङ्गीयानां सहस्रगृहाणां मिलनोत्सवमुपमिमीते, मनसि च चिन्तयति—किमिति विधाता मामेवमकर्मण्यं विधायासृजदिति।

शिशवः प्रभात एव समुत्थाय प्रतिमानिर्माणसन्दर्शनायाद्यानाथस्य गृहप्राङ्गणमुपातिष्ठन्। समुपनते च भोजनसमये दासी तान् बलाद् गृहीत्वानयत्। तदानीं च वैद्यनाथस्तत्र निषण्णो विश्वव्यापिन्यस्मिन्नुत्सवे स्वजीवनस्य वैफल्यं संस्मरन्नासीत्। दास्या हस्तात् पुत्रद्वयं मोचयित्वा स्वक्रोडसमीपमाकृष्य ज्यायांसमपृच्छत्, " वत्स अवो, ब्रूहि एषमः (this year) पूजावसरे किं वा प्रार्थयसे ? "

सपद्येव प्रत्युक्तमविनाशेन, " नावमेकं दास्यसि मे, तात " इति।

कनीयसा चिन्तितम्, न खलु ज्यायसः कस्मिन्नपि विषये लेशतोऽपि न्यूनेन भवितव्यमिति। तेनाप्युक्तम्, " मह्यमपि नावमेकां दास्यसि, तात " इति।

यथा पिता तथैव पुत्रः। कर्मानर्हं कारुकार्यं चेल्लभ्यते किमप्यन्यन्न कामयते। पित्रोक्तम्, " तथास्तु " इति।

इतश्च यथाकालं पूजावकाशे मोक्षदायाः कश्चन खुल्लतातो गृहं प्रत्यागतः। स खलु वृत्त्या व्यवहारजीवः। कियन्तिचिद्दिनानि मोक्षदा निरन्तरं तस्य गृहान् गच्छति स्म।

अन्ततश्चैकदागत्य पतिमवोचत्, "भो भवता वाराणसी गन्तव्या" इति।

सपदि वैद्यनाथेन चिन्तितम्, "प्रत्यासन्नो मे मरणकालः। दैवज्ञेन जन्मपत्रिकातस्तदेवाविष्कृतम्, सहधर्मिणी च तदभिज्ञाय मम सद्गतेरुपायं चिन्तयति" इति।

ततश्च श्रुतं तेन, "काश्यां गृहमेकं वर्तते, तत्र च निगूढं धनमस्तीति जनश्रुतिः। गृहं तत् क्रीत्वा तद्गतं धनमुद्धृत्यानेयम्" इति।

वैद्यनाथेनोक्तम्, "शान्तं पापम्। न खल्वहं काशीं गमिष्यामि।"
वैद्यनाथेन कदापि गृहं परित्यज्यान्यत्र न गतम्। प्राचीना धर्मशास्त्रकाराः समामनन्ति कथं गृहस्था गृहाद् उत्सारयितव्यास्तत्र स्त्रीणामशिक्षितपटुत्वं वर्तत इति। मोक्षदा तावद् वचनमात्रेणैव गृहाभ्यन्तरे मरिचधूममिव प्रसारयितुं प्राभवत्, परं तेन वराको वैद्यनाथः केवलमश्रुनीरेषु प्लवते स्म, काशीगमनस्य नामापि नोच्चारयति स्म।

व्यतीतानि द्वित्राणि दिनानि। वैद्यनाथः क्रमेण कियन्तिचित् काष्ठखण्डानि निकृत्य सन्तक्ष्य संयोज्य द्वे क्रीडानावौ निर्मितवान्। तत्र च गुणवृक्षकं संयोजितवान्, वस्त्रं छित्त्वा वातवसनं बद्धवान्, रक्तवस्त्रस्य पताकां प्रोड्डीनवान्, कर्णं च वहित्रं च निवेशितवान्। पुत्रिकामेकां कर्णधारम् आरोहिणञ्चापि न जहौ। तत्र च विपुलं यत्नमत्याश्चर्यं नैपुण्यं प्रकटितवान्। नितरां दुर्लभस्तथाविधः संयतचित्तो बालकः साम्प्रतं यस्येदृशनौसौन्दर्यसन्दर्शनेनापि चित्तचाञ्चल्यं नोत्पद्यते। अत एव यदा तावद् वैद्यनाथः सप्तम्याः पूर्वस्यां रात्रौ नावौ पुत्रयोः पाणिषु प्रायच्छत्, तौ हर्षभरेण ननृततुः। एकतस्तावन्नावः खेलक एव पर्याप्तस्तेषां तोषाय, तत्रापि गुणवृक्षको वर्तते, वातवसनं वर्तते, वहित्रं वर्तते, किञ्च यथास्थानं कर्णधार उपविष्टस्तिष्ठति—एतदेव सञ्जातं तेषां समधिकविस्मयस्य कारणम्। पुत्रयोरानन्दकलरवेण समाकृष्टा मोक्षदा तत्रागत्य दरिद्रस्य पितुः पूजोपहारमपश्यत्।

दृष्ट्वा च क्रुद्धा, क्रन्दित्वा, करतलेन शिर आहत्य, क्रीडनकद्वयमाच्छिद्य गवाक्षपथेन बहिर्न्यक्षिपत् । तिष्ठतु तावत् सौवर्णं कण्ठभूषणम्, तिष्ठतु कञ्चुकम्, तिष्ठतु तावद्विचित्रमुष्णीषम्, हतभाग्योऽयं पुरुषः क्रीडनकद्वयेन पुत्रौ विप्रलब्धुमागतः । तत्रापि कपर्दिकामात्रो व्ययो नास्ति, स्वहस्तस्यैव निर्माणम् ।

कनीयांस्तनय ऊर्ध्वश्वासेन क्रन्दितुं प्रवृत्तः । 'निर्बोधार्भकः' इत्युक्त्वा मोक्षदा तस्मै ठासिति चपेटां ददौ ।

ज्यायान् पुत्रः पितुर्मुखे दृष्टिं पातयन् स्वदुःखं व्यस्मरत् । स कृतकेनोल्लासेनावदत्, "तात, श्वः प्रत्यूषेऽहं नौद्वयं प्रत्यानेष्यामि ।" वैद्यनाथः परेद्यवि काशीगमने सम्मतोऽभवत् । परं पाथेयः क? पत्न्या भूषणानि विक्रीय सोऽर्थं संगृहीतवान् । भूषणानि तावद् वैद्यनाथस्य पितामह्याः समये निर्मितानि । ईदृशं जात्यं सुवर्णं गुरूणि च भूषणान्यद्यत्वे नैवोपलभ्यन्ते ।

वैद्यनाथस्य मनसि सञ्जातं स खलु मरणायैव प्रतिष्ठत इति । पुत्रौ क्रोडे कृत्वा चुम्बित्वा च साश्रुनेत्रो गृहान्निर्जगाम । तदानीं मोक्षदापि क्रन्दितुं प्रावर्तत ।

काश्या गृहस्वामी वैद्यनाथस्य खुलश्वशुरस्य परिचित आसीत् । स खलु गृहस्वामिनो व्यवहारजीव इति । मन्ये तत एव कारणाद् गृहं गरीयसा मूल्येन व्यक्रीणीतेति । वैद्यनाथ एकाक्येव गृहं स्वीकृत्य तत्रावस्थितः । सर्वथा नद्या अनुतटं तद् गृहम् । भवनभित्तिं धावित्वा नदीस्रोतः प्रवहति स्म ।

रात्रौ वैद्यनाथस्य गात्राण्यवासीदन् । शून्ये गृहे शिरसः समीपे प्रदीपं प्रज्वाल्य प्रावरणेनापादमस्तकं संवृत्य स शिश्ये । निद्रा पुनः कथमपि न समायान्नेत्रयोः । गभीरायां निशायां प्रशान्ततामुपगते निखिले कोलाहले, कुतश्चित् कश्चन झञ्झनारावमाकर्ण्य वैद्यनाथश्चकितोऽभवत् । शब्दोऽसौ

मृदुः परं विस्पष्टः। पाताले बलिराजस्य कोषाध्यक्षो नाणकानि गणयन् स्थित इति प्रतीयते।

वैद्यनाथस्य मनसि भीतिरपि समुदिता कौतूहलमपि समुदितम्, युगपच्चाशापि प्रादुर्भूता। कम्प्रेण पाणिना प्रदीपमादायासौ कोष्ठात् कोष्ठान्तरमभ्रमत्। अस्मिन् कोष्ठे प्रविष्टे अमुष्मात्कोष्ठाच्छब्दः समायातीति प्रतीयते। पुनरमुष्मिन् कोष्ठे प्रविष्टेऽस्मात्कोष्ठाच्छब्दः समायातीति प्रतीयते। वैद्यनाथः सर्वरात्रं केवलं कोष्ठात् कोष्ठान्तरं पर्यभ्रमत्। दिवसे पातालभेदी स शब्दः शब्दान्तरैः संमिश्रोऽभवत्, पृथक्तया न प्रत्यभात्।

रात्रेर्द्वित्रेषु यामेषु निद्रामुपगते सर्वस्मिञ्जगति पुनरपि स शब्दः प्रवृद्धः। वैद्यनाथस्य चित्तमतीवास्थिरं सञ्जातम्। शब्दं संलक्ष्य कस्यां दिशि गन्तव्यं तद् विभावयितुं नासौ प्रबभूव। मरुभुवोऽभ्यन्तरे सलिलकलकलः संश्रूयते, कस्याः पुनर्दिशः समायाति स शब्दस्तत्तु निर्णेतु न शक्यते। इयं च शङ्का समुदेति तस्य चित्ते सकृद् भ्रान्तपथावलम्बनेन मा तावन्निगूढा निर्झरिणी सर्वथा गोचरतातीता भूदिति। तृष्णार्तः पान्थः स्तब्धं स्थित्वा प्राणान् पणीकृत्य कर्णौ स्तब्धौ विधायावतिष्ठते, तृष्णा पुनरुत्तरोत्तरं प्राबल्यमधिगच्छति। सैवेदानीं समवस्था वैद्यनाथस्य।

अनिश्चयेन व्यतीतानि बहूनि दिवसानि केवलम् अनिद्रया वृथायासेन च तस्य सन्तोषस्निग्धे वदनमण्डले व्यग्रतायास्तीव्रत्वं रेखाङ्कितं सञ्जातं कोटरनिविष्टयोश्चकितयोश्च नेत्रयोः माध्याह्निकीष्विव सिकतासु काचन ज्वाला प्रकाशिताऽभूत्।

अन्ततश्चैकदा द्विप्रहरवेलायां सर्वाणि द्वाराणि निरुध्य निखिले गृहकुट्टिमे महाखनित्रेणाहते पार्श्ववर्तिनः कस्माच्चन क्षुद्रप्रकोष्ठाच्छून्योदरस्येव शब्दः समुद्भूतः।

अथ समागते निशीथे सुषुप्तिसुखमनुभवति त्रिभुवने, वैद्यनाथ एकक एव जाग्रत् कुट्टिमस्य खननकर्मणि संप्रवृत्तः। प्रभातप्रायायां च निशीथिन्यां

विवरखननं सम्पूर्णतामगमत। ततश्च वैद्यनाथोऽपश्यत्, अधस्तात् प्रकोष्ठ इव किञ्चन विद्यत इति, परं नोदसहतासौ नैशे तमसि निर्विचारेण तत्र पदमवतारयितुम्। स तस्य विवरस्योपरि शय्यामास्तीर्याशयिष्ट। परं शब्दोऽसौ तथा परिस्फुटतामगच्छद् यथा भयेनासौ तत उत्थायाचलत्, अथ च गृहमरक्षितं विधाय द्वारं परित्यज्य दूरगमने तस्य प्रवृत्तिर्नासीत। लोभश्च भयं च द्वाभ्यां दिग्भ्यां द्वयोर्हस्तयोर्धृत्वा तं समाकर्षताम्। एवञ्च निशा व्यतिचक्राम।

अद्य दिवसभागेऽपि शब्दोऽश्रूयत। गृहाभ्यन्तरे भृत्यस्यागमनमनुमन्य बहिरेवासौ निरवर्तयद् भोजनादिकम्। परिसमाप्ताहारश्च गृहं प्रविश्य द्वारं तालकबद्धमकरोत्।

दुर्गानामोच्चारणपुरःसरं गह्वरमुखादपसारिता तेन शय्या। सलिलस्य छलत्कारो धातुद्रव्यस्य च ठनत्कारो विस्पष्टमेव श्रूयते स्म।

भीतभीतोऽसौ विवरसमीपे शनैः शनैर्वदनमण्डलमभिमुखीकृत्यापश्यद् अनुच्छ्रितस्य प्रकोष्ठस्याभ्यन्तरे सलिलस्रोतः प्रवहतीति। तमसि तत्र विशेषतोऽपरं किमपि नासौ प्रबभूव द्रष्टुम्।

बृहतीमेकां यष्टिमवतार्यापश्यत् जानुदघ्नमेव जलमिति। दीपशलाकाधानीं वर्तिकां च गृहीत्वानायासेनैवासौ तस्मिन्नगभीरे प्रकोष्ठे न्यपतत। कदाचिन्मुहूर्तमात्रेण सर्वैवाशाप्रभा निर्वायादिति वर्तिकां प्रज्वलयतस्तस्य पाणिश्चकम्पे। बहुदीपशलाकापायानन्तरमन्ततो ज्वलिता वर्तिका।

सोऽपश्यत्---स्थूले लोहशृङ्खले सुबृहत् ताम्रफलकं बद्धं तिष्ठति। अन्तरान्तरा सलिलस्रोतश्च प्राबल्यमधिगच्छति, शृङ्खलं च सलिले निपत्य शब्दायत इति।

वैद्यनाथः सलिलोपरि शपशपाशब्दमुत्थापयन् सत्वरं तं कलशमुपागच्छत् गत्वा चापश्यद् रिक्तः स कलश इति।

तथापि न प्राभवदसौ स्वे चक्षुषी श्रद्धातुम्। उभाभ्यां पाणिभ्यां कलशमुत्तोल्य सुभृशमान्दोलितवान्। अभ्यन्तरे किमपि नासीत्। कलशं पर्यावर्तितवान्—किमपि नापतत्। अपश्यच्च कलशस्य ग्रीवा भग्नेति। एकदा कलशस्यास्य मुखं सर्वथा बद्धमेवासीत्, अनन्तरं च केनापि भग्नमिति प्रतीयते स्म।

ततश्च वैद्यनाथो मत्त इव पाणिभ्यां सलिलाभ्यन्तरं परामृष्टुं प्रवृत्तः। कर्दमस्तरेषु किमपि हस्ते स्पृष्टम्, उत्तोल्यापश्यन्मृतस्य मस्तकमिति। तदपि सकृत् स कर्णयोः समीपं नीत्वान्दोलितवान्, अभ्यन्तरे किमपि नासीत्। स तद्दूरं न्यक्षिपत्। बहुधान्विष्य नरकङ्कालगतान्यस्थीन्यन्तरेण किमपि न लेभे।

स चापश्यत्—नद्यभिमुखीनाया भित्तेः स्थानविशेषो भग्नः, तेनैव द्वारेण जलं प्रविशतीति। तस्य च पूर्ववर्तिनो यस्य तपस्विनो जन्मकुण्डल्यां देवधनलाभो लिखित आसीत् सोऽप्यनेनैव छिद्रेण प्राविशदिति सम्भाव्यते स्म।

अन्ततश्च सर्वथा नैराश्याक्रान्तहृदयो "हन्त मातः" इति मर्मभेदिनं निःश्वासं मुमोच। प्रतिध्वनिः समतीतकालस्येतरेषामपि बहूनां हताश्वासानां जनानां निःश्वासान् समाहृत्य भीषणगम्भीरारावेण रसातलतलात् स्तनित इवाभवत्।

कर्दमविलिप्ताखिलावयवो वैद्यनाथ उपर्यागच्छत्।

जनपूर्णा कोलाहलमयी मेदिनी तस्मा आपादचूडं मिथ्या शृङ्खलिता भग्नघटीव च शून्या प्रत्यभात्।

यत् पुनरपि द्रव्यादिकं बन्धनीयं, शुल्कपत्रं क्रयणीयं, शकटमारोहणीयं, गृहं प्रत्यावर्तनीयं, पत्न्या सह वाग्वितण्डादिकं करणीयं, जीवनं च प्रतिदिनं वहनीयं, तत्तस्यासह्यमेव प्रत्यभात्। मनसि च तस्य समुदितेच्छा सरितो जीर्णस्तट इव विभज्य क्षुपिति सलिले निपतेयमिति।

परं तथापि तथैव द्रव्यादिकमबध्नात्, शुल्कपत्रमक्रीणात्, शकट-मप्यारोहत्। एकदा च शीततौँ सायाह्ने गृहद्वारं सम्प्राप्तः। पूर्वमाश्विने मासि शारदप्रभाते द्वारोपान्ते निषण्णो वैद्यनाथो बहून् प्रवासिनो गृहं प्रत्यावर्तमानानपश्यत्, सदीर्घश्वासं च विदेशतः स्वदेशप्रत्यावर्तनसुखाय स्पृहयमाणोऽभवत्, तदानीं चाद्यतनी सन्ध्या स्वप्नस्याप्यगम्यासीत्।

प्रविश्यैव भवनाभ्यन्तरं प्राङ्गनस्थे काष्ठासने निर्बोध इव निषण्णोऽतिष्ठत्। न खलु प्राविशदसौ शुद्धान्तःपुरम्। सर्वप्रथमतः परिचारिका तं दृष्ट्वानन्द-कोलाहलं प्रावर्तयत्, पुत्रावपि द्रुतं समापतताम्, गृहिणी च परमुखेन तमाह्वयत्।

भग्नमिव वैद्यनाथस्य तिमिरावरणम्। पुनरप्यसौ प्रबुद्ध इव पूर्वेषु गार्हस्थ्यव्यापारेषु।

विशुष्कवदने म्लानहास्यमास्थाय पुत्रमेकमङ्कीकृत्य द्वितीयं च हस्ते धृत्वा प्राविशदसावन्तःपुरम्।

तदानीं च प्रज्वलितो भवनप्रदीपः, यद्यपि रात्रिर्न समागता तथापि शीततौः सन्ध्या रात्रिरिव क्रमेण निस्तब्धा सञ्जाता।

वैद्यनाथः कियन्तञ्चिरकालं किमपि नावदत्, ततश्च मृदुस्वरेण पत्नीम-पृच्छत्, "कच्चित्कुशलिन्यसि ?" इति।

पत्नी तु प्रश्नस्योत्तरमप्रतिपद्यैवापृच्छत्, "किं वृत्तम् ?" इति।

वैद्यनाथस्तूष्णीं ललाटमाजघ्ने। मोक्षदाया मुखं भारवत् कठिनं च सञ्जातम्।

पुत्रौ च महतोऽमङ्गलस्य च्छायां सन्दृश्य शनैः शनैरुत्थाय चलितौ, गत्वा च दासीसमीपं 'नापितस्य तद् आख्यानं ब्रूहि' इत्युक्त्वा शय्या-मधिशिश्याते।

रजनी वर्धते स्म, परं द्वयोर्मुखे एकमपि वचनं नासीत्। गृहाभ्यन्तरे किमपि छमच्छमायते स्म, मोक्षदायाश्चौष्ठौ क्रमेण वज्रलेपेनेव सुदृढं संसक्तौ जातौ।

व्यतीते च बहुतिथे काले मोक्षदा किमप्यनुक्त्वैव शनैः शनैः शयन-मन्दिरं प्रविश्याभ्यन्तरतो निरुद्धवती भवनकवाटम्।

वैद्यनाथस्तूष्णीं बहिर्दण्डायमानोऽवतस्थे। यामिकः प्रहरमुद्घुष्य प्रतस्थे। श्रान्ता पृथिवी सुषुप्तिमग्ना स्थिता। आ स्वजनेभ्यो निस्सीम-गगनगतनक्षत्राणि यावत् कोऽप्यवमानितं भग्ननिद्रं वैद्यनाथं वाक्येनैकेनापि न सम्भावितवान्।

गभीरनिशीथे मन्ये स्वप्नादुत्थाय वैद्यनाथस्य ज्यायांस्तनयः शय्यां विहाय शनैः शनैरलिन्दमुपगम्याह्वयत् "तात !" इति।

तदानीं तस्य तातस्तत्र नासीत्। किञ्चिदुच्चैस्तरकण्ठेन रुद्धद्वाराद् बहिरवस्थाय पुनरप्याह्वयत् — तात इति। परं किमप्युत्तरं नोपनतम्।

स च भीतभीत इव पुनरपि शय्यां गत्वाशयिष्ट।

पूर्वां रीतिमनुसृत्य परिचारिका प्रातः तमाखुं सज्जीकृत्य तमन्विष्टवती, क्वापि च नापश्यत्। वेलायां च वर्धमानायां प्रातिवेशिका गृहप्रत्यागतस्य बान्धवस्य वार्तोपलम्भाय समागताः, परं वैद्यनाथेन साकं तेषां साक्षात्कारो नाभवत्।

---

# देयादेयम्

अनुवादकः—श्री फटिकलालदासः

पुत्रपञ्चकात् परं यदा कन्यैका समजनि, मातापितृभ्यां बह्वादरेण तस्या निरुपमेति नाम चक्रे। इतः पूर्वं वंशेऽस्मिन्नीदृशं ललितमधुरमभिधेयं न जातु कस्यापि श्रुतिगोचरं बभूव। प्रायेण तत्र 'कार्त्तिको', 'गणेशः', 'पार्वती'ति देवतानां नामत एव नामकरणमभूत्।

गच्छति हि काले निरुपमा विवाहयोग्यं वयः प्रपेदे, तत्प्रसङ्गेन गृहे कथोपकथनं च जायते स्म। पित्रा रामसुन्दरमित्रेण बहु विचित्यापि मनोऽनुकूलं पात्रं नासादितम्। अन्ते च तेन बहोरनुसन्धानात्परं प्रथितनाम्नः कस्यचिद् रायबाहादुरस्य वंशसम्भवस्तस्यैक एव पुत्र आविष्कृतः। तस्य रायबाहादुरस्य पैतृकं धनादिकं यद्यपि प्रायेण नामशेषतामधिगतं, तथापि कुलं तु प्राचीनमेव।

वरपक्षस्तु बहुलदानसामग्रीर्दशसहस्ररूप्यकाणि च यौतुकमयाचत। रामसुन्दरेण किमप्यविचार्य तदेव सद्य उररीकृतम्। करागतमीदृशं हि पात्रं त्यक्तुं साम्प्रतम्।

किन्तु चेष्टयाप्यर्थो न सुलभो जातः। बन्धकं दत्त्वा, द्रव्याणि च विक्रीय स कृत्स्नमर्थं संग्रहीतुं न शशाक। षट्सप्तसहस्रमुद्रास्तदानीमप्यनाहृतास्तस्थुः।

इतश्च विवाहदिवसः प्रत्याससाद। अन्ततस्तदेवाहः समागतमपि। प्रभूतवार्द्धुष्यपणेन केनापि जनेन शिष्टमर्थम् ऋणं दातुं स्वीचक्रे, किन्तु

कार्यकाले सोऽपि नोपतस्थे । विवाहसभायां विपुलः कलकलः समुत्थितः । रामसुन्दरो रायबाहादुरस्य हस्तौ पादौ च गृहीत्वा समुवाच, "शुभकार्यस्य व्याघातो मा भूत् । अहं निश्चितमेव ऋणशोधं करिष्ये "। तेन महाशयेन चोक्तम्, "करं नागते ह्यर्थे वरो न सभां प्राप्स्यति ।"

अस्यां दुर्घटनायां समापतितायामन्तःपुरे महान् रोदनध्वनिरुच्चचार । अस्या गुरुतरविपत्तेर्या हि प्रधानं कारणं सा तु कौशेयवासो वसाना भूषणालङ्कृता चन्दनलिप्तभाला गृहैककोणे तूष्णीं वितष्ठे । भावि श्वशुरकुलं प्रति तस्याः प्रगाढा भक्तिर्दृढोऽनुरागो वोपजायत इति वक्तुं न शक्यते ।

अत्रान्तरे सुयोगः कश्चिदुपतस्थे । वरः सहसा पितृवचःप्रतिकूलः सञ्जातः । स पितरमुवाच, "दानादानयोः क्रयविक्रययोश्च वार्ता न मया बुध्यते । विवाहं कर्तुमागतः, विवाहमेव कृत्वा गृहं प्रतियामि ।"

पिता तदा लोकदर्शी प्रोवाच, "आर्याः, दृष्टः किमर्वाचीनपुत्रस्य व्यवहारः ?" तत्रोपविष्टा द्वित्राः प्रवीणा व्याजहुः, "नास्त्यधुना स्तोकापि शास्त्रशिक्षा नीतिशिक्षा वा; अत एव भाव्यं भवत्येव"।

वर्तमानशिक्षाया विषमयं फलं स्वपुत्रे प्रत्यक्षीकृत्य रायबाहादुरो निर्वाग् वितष्ठे । विवाहकृत्यं तु सर्वथा विषादपूर्णं निरानन्दमपि कथमपि समपद्यत ।

श्वशुरालयं प्रस्थितां सुतां बाहुभ्यामुरसि निपीड्य पिता नयनजलं निवारयितुं न शशाक । तया पप्रच्छे, "पितः, किं ते मम पुनरागमनमत्र निरोत्स्यन्ति ?" पितोवाच, "वत्से, मा भैषीः । स्वयमहं गत्वा त्वां प्रत्यानेष्यामि ।"

रामसुन्दरः प्रायशः कन्यां दर्शकस्तस्याः श्वशुरालयं गच्छति स्म, किन्तु वैवाहिकगृहे तस्य कापि प्रतिष्ठा नासीत् । भृत्या अपि तं सावज्ञं निरीक्षन्ते । बहिरन्तःपुरं स कस्मिंश्चित् स्वतन्त्रे प्रकोष्ठे कदाचिद् दण्डपाद-

मात्रं कन्यादर्शनं लभते, कदाचिद्वा न । असह्यः खलु बन्धुगृहे पुनरीदृशोऽवमानः । येन केन प्रकारेण परिशोध्य एव शिष्टोऽर्थ इति स निश्चयं कृतवान् ।

किन्तु पूर्वकृतो य एव ऋणभारः स्कन्धारूढस्तिष्ठति दुष्करं हि तस्यैव वहनम् । गृहे च नित्यमर्थाभावः । नानाहीनजनोचितकौशलाश्रयेणैव स प्रत्यहमुत्तमर्णानां दृष्टिपथं परिहरति ।

इतश्च श्वशुरालये कन्या दिवानिशं दुर्वाक्यविषजर्जरा तस्थौ । श्रावं श्रावं पितृगृहनिन्दां कोष्ठद्वारं निरुध्य साश्रुनयना सा कालं गमयति स्म । एतदेव तस्या नित्यकृत्यं जातम् ।

विशेषेण श्वश्र्वा आक्रोशः केनाप्युपायेन न शमं प्रयाति । यदि काचिद्वदति, "अहो वध्वास्ते कीदृशी श्रीः । मुखदर्शनेन दृष्टिः परां निर्वृतिं याति" इति, तदा श्वश्रूर्वीणाझङ्कृतिमुत्थाप्य प्रतिवक्ति, "अहो नाम श्रीः ! यादृशस्य गृहस्य कन्या, तादृश्येव श्रीः" ।

किमधिकम्, वध्वा वसनाशनविषयेऽपि कस्यापि यत्नो नासीत् । यदि कापि प्रतिवेशिनी तत्र कामपि न्यूनतां प्रदर्शयति, श्वश्रूः कथयति "अद एव पर्याप्तम् !"—अर्थात् पिता चेत् पूर्णशुल्कमदास्यत्, कन्यापि पूर्णयत्नमवाप्स्यत् । गृहस्थिताः सर्व एव जनास्तथाविधं भावं सन्दर्शयन्ति यथा वध्वास्तद्गेहवासे कोऽप्यधिकारो नास्ति । तया वञ्चनयैव तत्रात्मा प्रवेशितः ।

मन्ये, दुहितुरेताः सर्वा दुःखावमानवार्ताः पितुः श्रुतिपथं गताः । अतो रामसुन्दरः स्ववासभवनं विक्रेतुं रहो व्यचेष्टत ।

किन्तु पुत्रान् गृहहीनान् कर्तुं व्यवसितः स इति वार्ता तेषां सकाशादगूहत । तस्यायमेवाशय आसीद् यद् गृहं विक्रीय भृतिग्रहणेन पुनस्तत्रैव स्थातव्यम् । तथाविधकौशलेन च वर्तितव्यं यथा तस्य मरणात्पूर्वं न केनापि याथार्थ्यं ज्ञास्यते ।

किन्तु पुत्रा अचिरादेव सर्वं जज्ञुः। रुदन्त एव सर्वे पितृसकाशमागताः। विशेषेण ज्येष्ठास्त्रयः पुत्राः कृतदारा आसन्। तेषां कस्य कस्यापि पुत्रादयोऽप्यभूवन्। पुत्राणां प्रतिकूलता पित्रा दुरतिक्रमाभूत्। अतो गृहविक्रयस्य प्रसङ्गस्तेन परित्यक्तः।

ततो रामसुन्दरो नानास्थानेभ्यो भूरि वार्द्धुष्यं स्वीकृत्य स्वल्पं स्वल्पमर्थम् ऋणं ग्रहीतुमारेभे। एतादृशी दशा समुपस्थिता यत्संसारयात्राया व्ययनिर्वाहोऽपि दुःसाध्य आसीत्।

निरुपमा पितृमुखं दृष्ट्वा सर्वमवगतवती। वृद्धस्य पक्वेषु केशेषु, शुष्के वदने, नित्यसाशङ्कभावे च दैन्यं दुश्चिन्ता च प्रकटतां गता। दुहितरमन्तरेण यदा पिता सापराधस्तिष्ठति, तदा तदपराधस्यानुतापं जनकेन गूहितुं न शक्यते। रामसुन्दरो यदा वैवाहिकगृहे तदनुमतिक्रमेण क्षणार्थमपि कन्यादर्शनं लभते तदा पितृवक्षः कथं भिद्यते तत्तस्य तदानीन्तनहास्यदर्शनाद् गम्यत एव।

पितुस्तद्व्यथितं हृदयं सान्त्वयितुं निरुपमा कियन्तिचिद्दिनानि पितृगृहं यातुं नितरामधीराभवत्। पितुर्म्लानमुखं निरीक्ष्य सा पुनर्दूरे स्थातुं नाशक्नोत्। सैकदा पितरमवोचत्, "तात, मां गृहमुपनय"। रामसुन्दरोऽप्यवदत्, "तथास्तु।" किन्तु तस्य कियती वा शक्तिः! स्वकन्यामन्तरेण पितुर्यो नैसर्गिकोऽधिकारो वर्तते सोऽद्य विवाहशुल्कविनिमयेन बन्धक इवान्यत्र स्थितः। किमधिकम्, कन्यादर्शनमपि सशङ्कभिक्षासापेक्षं जातम्। कदाचिच्च तदपि दुर्लभम्। तत्र निराशस्यापि तस्य द्वितीयवचनोक्तौ नास्त्यधिकारः।

किन्तु कन्यायां गृहागमने स्वयमुद्यतायां, कथं पिता निश्चेष्टः स्थातुमलम्? तद् वैवाहिकस्य पुरतस्तत्प्रस्तावोत्थापनात् पूर्वं कियतीं हीनतां, कियन्तमपमानं, कियतीं च क्षतिमुरसिकृत्य तेन रूप्यकाणां सहस्रत्रयं संगृहीतं तस्येतिहासो वरमेव गोप्यः।

अर्थपत्राणि त्रीणि वरकेन प्रच्छाद्य स्वोत्तरीये च बद्ध्वा रामसुन्दरो वैवाहिकस्य सकाशमागम्य निषसाद। सुस्मेरमुखः प्राक् स्वप्रतिवासिनां वार्तानिचयमाचचक्षे। हरकृष्णस्य गृहे सम्प्रति चौरः प्रविश्य केनोपायेन सर्वस्वमपहृतवान् आद्योपान्तं तस्य विवरणमुवाच। भ्रातृद्वयस्य नवीनमाधवस्य राधामाधवस्य च तुलनां विधाय विद्याबुद्धिस्वभावमन्तरेण प्रथमस्य सुख्यातिं द्वितीयस्य च निन्दां चकार। नगरे नूतनस्य कस्यचिद् व्याधेरवतारं विघोष्य तमन्तरेण प्रत्ययायोग्यमपि बहु वाग्विन्यासमकार्षीत्। अन्ते च तमाखुपात्रं मुखादपसार्य वचनाद्वचनान्तरमागत्यैव सहसा प्रोवाच, "आं वैवाहिक-महाशय, स एवार्थोऽपरिशुद्धो वर्तते। प्रत्यहममन्ये, यदा गच्छामि स्तोकमर्थं नयामि, किन्तु काल आगते मनसि नोपतिष्ठते तद्वचः। अहो भ्रातः, समुपस्थिता मे जरा।" एवंविधां दीर्घभूमिकां कृत्वा पञ्चराशित्रयकल्पं तत्पत्रिकात्रयं सावहेलमनायासेनैव निरक्रामयत्। सहस्रत्रयमात्रं विलोक्य रायबाहादुर उच्चैर्जहास, प्रोवाच च, "तवैवास्तु, नैतेन मे कार्यम्।" वङ्गदेशे प्रचलितमाभाणकविशेषं समुच्चार्य च भूयो निजगाद, "असाम्प्रतमेव तुच्छकारणेन हस्तस्य दुर्गन्धीकरणम्।" *

एवंविधघटनानन्तरं कन्या-नयन-प्रस्तावस्तस्य मुखे न स्फुरति। किन्तु रामसुन्दरोऽचिन्तयत्, "सम्बन्धहेतोर्यो मे सङ्कोचो जायते स न सङ्गच्छते।" मर्माहत इव कियन्तं कालं तूष्णीं स्थित्वा सोऽन्ते मृदुभाषितेन प्रस्तावमुपस्थापितवान्। रायबाहादुरः किमपि कारणमनिवेद्य केवलं प्रोवाच, "तन्नाधुना भवितुमर्हति"। एवमुक्त्वा कार्यव्यपदेशेन स स्थानान्तरं प्रस्थितः।

रामसुन्दरः कन्यासकाशे मुखमप्रदर्श्य कम्प्रहस्तेनार्थपत्राणि पुन-रुत्तरीयप्रान्ते बद्ध्वा गृहं प्रत्यावृत्तः। स मनस्येवं निश्चितवान् यद् यावन्न सर्वमर्थं परिशोध्य कन्योपरि निर्बाधमधिकारं लप्स्ये तावद् वैवाहिकस्य गृहं न मया गन्तव्यम् इति।

---

* "छुछुन्दरीं हत्वा को हस्तौ दुर्गन्धयेत्?"

बहुतिथे काले गते निरुपमा तमाह्वातुं वारं वारं प्रेष्यान् प्रेषयामास, किन्तु तैस्तद्दर्शनमपि न लब्धम्। ततोऽभिमानात् सापि लोकप्रेषणाद्विरताभूत्। एतेन रामसुन्दरो मनसि भृशमाघातं प्राप, किन्तु तथापि कन्यासकाशं न गतः।

आश्विनो मासः समागतोऽभूत्। रामसुन्दरो निजगाद, "अस्मिन्नेव पूजासमये मयावश्यं माता (स्वकन्या) गृहमानेतव्या, नोचेदहं—।" इत्युक्त्वा नितान्तकठिनं शपथमेकं चकार।

पञ्चम्यामथवा षष्ठयां तिथौ तेन पुनरुत्तरीयप्रान्तेऽर्थपत्राणि ग्रन्थिबद्धानि कृत्वा यात्रोद्योगः कृतः। पञ्चवर्षीयः कश्चित्पौत्रः समीपमागत्य निजगाद, "भोः पितामह, मदर्थे किं शकटं क्रेतुं गच्छसि?" बहुदिनं यावत्तस्य लोकचालिते शिशुशकटे समासीनस्य वायुसेवनेच्छा प्रबलाभूत्, किन्तु कथमपि तच्छन्दःपूरणोपायो न जातः। षड्वर्षीया काचित्पौत्री समेत्य सरोदनं तमवोचत्, "पूजाङ्गने गमनयोग्यमेकमपि शोभनं मे वासो न विद्यते।"

रामसुन्दरस्य तन्नाविदितमासीत्, तदन्तरेण च तमाखुसेवनकाले तेन बह्वयश्चिन्ता अपि कृताः। रायबाहादुरस्य गृहे यदामन्त्रणं भविष्यति तदा स्ववधूभिस्तुच्छाल्पमूल्यभूषणालङ्कृताभिरनुग्रहार्थिदरिद्ररमणीभिरिव तत्र गन्तव्यमिति चिन्तयन् स दीर्घश्वासमसकृन्मुमोच। किन्तु तेन श्वसनेन ललाटे वार्धकरेखा एव गभीरतरमङ्किता जाता; तदन्यत् किमपि फलं न नयनगोचरमभूत्।

दैन्यार्दितसद्मनः क्रन्दनध्वनिं कर्णे गृहीत्वा वृद्धो वैवाहिकस्य वासभूमिं प्रविवेश। तस्याद्य पूर्वदिनानां स दन्यभावो नासीत्। दौवारिकानां भृत्यानां च मुखं प्रति भीतसलज्जो दृष्टिपातोऽपि लयं गतः। स्वभवन इव तत्र प्रवेशः कृतः। किन्तु प्रविष्टेन श्रुतं हि तेन, "रायबाहादुरो गृहे नास्ति। अतः कियत्कालापेक्षणं च कर्तव्यम्।" चित्तावेगं संवरितुमशक्तेन तेन

कन्यया सह साक्षात्कारः कृतः। नयनाभ्यामानन्दाश्रूणि विगलितानि बभूवुः। पिता क्रन्दति, कन्यापि क्रन्दति। द्वयोः कोऽपि वाचं वक्तुं न शशाक। एवं गतः क्षणश्च कियान्!

ततो रामसुन्दरेणाभिहितम्, "मातः, वारेऽस्मिंस्त्वां गृहं नेष्यामि। शान्तो हि सर्वो दुर्योगः।"

अत्रान्तरे तस्य ज्येष्ठपुत्रो हरमोहनः सहशिशुपुत्रद्वयः सहसा तत्प्रकोष्ठं प्रविष्टः। जनकं चोवाच, "पितस्तर्हि वयमधुना पथि विसृष्टा भवता?"

रामसुन्दरस्तदा वह्निरिव सहसा प्रज्वलितः सन्नुवाच, "अपि युष्मदर्थे मया नरकगामिना भाव्यम्? पित्रा सत्यस्य पालनं किं युष्माकमनभिमतम्?"

रामसुन्दरेण वासभवनं विक्रीय शुल्कसंग्रहः कृतः। पुत्रैर्यथा न ज्ञायते तस्याप्युपायो हि विहितः। किन्तु तथापि पुत्रैस्तद्विदितमिति बुद्ध्वा तेष्वतीव रुष्टो विरक्तश्च समजनि।

तस्य स पौत्रश्च तज्जानुनी हस्ताभ्यां सबलमावेष्ट्य मुखमुन्नीय च प्रोवाच, "पितृतात, कथं न क्रीतं मे शकटम्?"

नताननाद् रामसुन्दरात् किमपि प्रतिवचनं नाप्त्वा स निरुपमायाः सकाशमागत्य निजगाद, "पितुःष्वसः, अपि त्वं मे शकटमेकं दास्यसि?"

निरुपमा विदितसर्ववृत्तान्ता पितरमुवाच, "तात, त्वं चेदेकमपि ताम्रकं श्वशुराय यच्छसि न मां पुनर्जीवितां द्रक्ष्यसीति त्वद्गात्रं स्पृष्ट्वा कथयामि।"

रामसुन्दरः प्रोवाच, "शान्तं पापम्, एतादृशं वचो न वाच्यम्। इमनर्थं चेन्न यच्छामि, पितुस्तेऽवमानः स्यात्, तवापि।"

निरुपमा प्रत्यवदत्, "दत्ते हि धने सोऽवमानो, नान्यथा। किमहं मुद्रायाः प्रसेवमात्रं यद् यावदर्थस्तावन्मे मूल्यम्? किं नास्ति ते

सुतायाः कोऽपि स्वकीयो मानः ? नहि नहि, पितः, निष्कं दत्वा न मामवमानय। अपरं च, न मे भर्ता धनमिदं प्रार्थयते।"

रामसुन्दरस्तदाभ्यधात्, "एवं सति, न ते श्वशुरस्त्वद्गमनमनुमंस्यते।"

निरुपमा चख्यौ, "यदि तदेव स्यात, किं वा त्वया कार्यमस्ति ? मन्नयनाय भूयस्त्वया नानुनेयः सः।"

रामसुन्दरस्तदाकर्ण्य कम्पमानकरेणार्थपत्रसमन्वितमुत्तरीयं भूयः स्कन्धमारोप्य तस्कर इव सर्वेषां दृष्टिपथं विहाय गृहं प्रत्यावृत्तः।

इतश्च, रामसुन्दरेणार्थ आनीतः, कन्याया एव निषेधात् तमदत्त्वा स्वगृहं प्रतिगत इति वार्ता सर्वेषां विदिताभूत्। कयापि स्वभावकौतूहलिन्या दास्या द्वारलग्नकर्णया पितृकन्यासंवादं श्रुत्वा निरुपमायाः श्वश्र्वै सर्वं निवेदितम्। श्रुतवत्यास्तस्या वधूं प्रति कोपस्य नावधिरासीत्।

निरुपमायाः सविधे तदनन्तरं श्वशुरवेश्म शरशय्या जातम्। इतश्च तस्याः स्वामी डेपुटी माजिष्ट्रेट्-[उपदण्डनायक-] पदं प्राप्य देशान्तरं गतः। दिष्ट्या संसर्गदोषेण वध्वा हीनताशिक्षा भवेदिति कृतककारणाश्रयेण तस्य पितृगृहवासिभिः स्वजनैः सह साक्षात्कारोऽपि सम्प्रति सम्पूर्णं प्रतिषिद्धोऽभवत्।

अस्मिन्नेव समये निरुपमा केनापि गुरुतरव्याधिनाक्रान्ताभूत्। किन्तु श्वश्रूरेव तदेककारणमिति तस्यां पूर्णदोषारोपो न स्थाने। शरीरं प्रति निरुपमायाः कोऽपि यत्नो नासीत्। कार्तिके मासि हिममध्येऽपि सा सर्वरात्रं शिरःस्थितं गवाक्षकवाटमुन्मुच्य शेते स्म। शिशिरकालेऽपि गात्रं वस्त्रेण सम्यङ् नाच्छादयामास। आहारस्यापि नियमो नासीत्। दास्यो यदान्तरान्तरा खाद्यद्रव्यानयनं विस्मरन्ति तदा मुखद्वारमुन्मुच्य ताः सकृदपि न स्मारयति स्म। सा गृहपतेर्गृहिण्याश्च, तथा दासीनामनुग्रहेणैव जीवतीति

संस्कारस्तस्या मनसि बद्धमूलः सञ्जातः। किन्त्वेवंविधं भावमपि श्वश्रूः सोढुं न पारयामास। यदि कदाचिद्वध्वा भोजनं प्रत्यनादरं पश्यति तदा निगदति स, "अहो नवाबगृहस्य कन्या! कथं तस्यै दरिद्रकुटीरस्यान्नं रोचिष्यते?" कदाचिद्वा कथयति, पश्यतास्याः श्रियम्। अहन्यहनि सा दग्धकाष्ठमिव वितनोति शोभाम्।

रोगस्तु यदा गुरुतरः सञ्जातः श्वश्रूः प्रोवाच, "अत्र भवत्याः कृत-कोऽयं रोगः।" अन्ते निरुपमा सविनयं श्वश्रूमूचे, "पितरं भ्रातॄंश्च सकृद् द्रष्टुमिच्छामि।"

श्वश्रूः प्रोवाच, "पितृगृहगमनार्थो व्याजोऽयमन्यः।"

वदामि चेत् कोऽपि न विश्वस्यात्—यदा सन्ध्यासमये निरुपमाया अन्तिमः श्वासः समुत्थितस्तदैव चिकित्सकः कश्चित् समाहूतः। सैव प्रथमा, सैव चान्तिमा रोगिण्याश्चिकित्सा तेन कृता।

गृहस्य ज्येष्ठा वधूरुपरता। अत एव बह्वाडम्बरेण तस्या अन्त्येष्टि-क्रिया समपद्यत। प्रतिमाविसर्जनाटोपमन्तरेण रायचतुर्धुरीणवंशस्य यथा जनमध्ये प्रसिद्धिरासीत् तथा ज्येष्ठवध्वा अन्तिमक्रियामन्तरेणापि रायबाहा-दुरस्य ख्यातिः सर्वतः प्रसृताभूत्। एतादृशी चन्दनकाष्ठमयी चितास्मिन्नेव प्रदेशे न जातु केनापि दृष्टा। ईदृशडम्बरपूर्णं श्राद्धकृत्यमपि रायबाहादुरस्य सद्मन्येव सम्भवति। इयं जनश्रुतिरस्ति यदेतत्कार्यविषये रायबाहादुरस्य किञ्चिदृणमपि जातम्।

रामसुन्दरं सान्त्वयितुं सर्वे तस्याः कन्याया महाडम्बरनिष्पन्नश्राद्ध-कर्मैतद्बहुलं वर्णयामासुः।

इतश्च पुत्रादुपदण्डनायकात् पत्रमागतम्। तत्र च लिखितमासीत्—अत्र सर्वाण्यायोजनानि कृतानि। अचिराद् वधूः प्रेषणीयेति।

तदुत्तरे रायबाहादुरस्य महिष्या लिखितम्, "वत्स, त्वदर्थमन्यया कयाचन कन्यया सम्बन्धः स्थिरीकृतः। अतः कालहरणमन्तरेण गृहीतावकाशेन त्वया गृहमागन्तव्यम्" इति।

अस्मिंस्तु वारे यौतुकं विंशतिसहस्ररूप्यकाः। ते चापि सद्य एव करतलगता भविष्यन्ति।

---

## पुत्रयज्ञः

अनुवादकः—श्रीसिद्धेश्वरचट्टोपाध्यायः

विज्ञतमो हि ग्रामीणेषु वैद्यनाथः। आयतिमपेक्ष्यैवासौ सर्वं वर्त्तमानविहितं सम्पादितवान्। विवाहावसरे वर्त्तमानादपि नववधूमुखादसौ भाविनवकुमारमुखमेव स्फुटतरमपश्यत्। एतावती दूरदृष्टिः शुभदृष्टिकाले प्रायो न दृश्यते। परिणतबुद्धिरसौ, अतः प्रणयात् पिण्डमेवास्य सुष्ठु बुद्धिविषयतामागतम्। 'पुत्रार्थे क्रियते भार्या'—अत एव स विनोदिनीं परिणीतवान्।

विज्ञतमोऽपि संसारेऽस्मिन् कदापि प्रतारितो भवति। यौवने वयसि वर्त्तमानापि विनोदिनी यदा स्वकीयं परमं कर्त्तव्यं नापालयत्तदा तु समुद्घाटितं पुन्नामनरकद्वारं दृष्ट्वा स परं चिन्ताक्लिष्टोऽभवत्। कस्तावन्मम मरणात् परं विपुलमैश्वर्यं मे भोक्ष्यत इति विचिन्तयन् स मरणात् प्रागेव जात ऐश्वर्य्योपभोगविमुखः। प्रागेवोक्तं वर्त्तमानादपि भाविनमेव स सत्यतया जानाति स्मेति।

परमेतावती प्राज्ञता तु युवत्यां विनोदिन्यां न वाञ्छनीयासीत्। विना प्रेमैव विफलतां याति वर्त्तमानमपि च दुर्मूल्यं नवविकसितं स्वयौवनमिति हि वराक्यास्तस्याः शोचनीयतममासीत्। ऐहिकेनैव चित्तक्षुधादाहेन सा सर्वथा विस्मृतवती पारलौकिकीं पिण्डक्षुधाम्। न किञ्चिन्मात्रमपि बुभुक्षितस्य हृदयस्य तस्यास्तृप्तिरजनि मनुप्रोक्तेन पवित्रविधानेन वैद्यनाथकृतया वाध्यात्मिकव्याख्यया।

येन यदेवोक्तं भवतु नाम, प्रेमादानप्रदानकर्मैवास्मिन् वयसि सर्वसुखात् सर्वकर्त्तव्यादप्यधिकमिति स्वत एव विचिन्तयन्ति रमण्य इति तु सत्यमेव।

भाग्येन तु विनोदिन्याः कृते नवप्रणयवर्षावारिसेचनस्य विनिमयेन पत्युस्तत्पितृष्वसुस्तथा गुरूणां गुरुतराणां वान्येषां समुच्चाकाशात्तर्जनगर्जन-रूपकरकावर्षणस्य व्यवस्था विरचिता । वन्ध्येति सर्वे तामेवापराधिनीं मन्यमाना आसन् । या खलु दशा भवति पवनालोकवञ्चितस्य रुद्धकक्षस्थापितस्य पुष्पवृक्षकस्य वञ्चितयौवनस्यापि विनोदिन्यास्तादृशी दशा समुपस्थिता ।

सदैवेवं गम्भीरपरिवेशं भर्त्सनादिकञ्चासहमाना पत्रक्रीडार्थं कुसुमेति सख्याः गृहे समागता सा तत्कालमेवातिप्रियममन्यत । पुन्नामनरकस्य भीषणा छाया नासीत्तत्र सदा वर्त्तमाना, अतस्तत्र हास्यालापपरिहासादीनां नासीत् कापि बाधा ।

यदा यदा सा कुसुमानाम्नी तत्सखी पत्रक्रीडायां सहयोगिनमन्यं कमपि नालभत तदा तदैव तरुणं स्वदेवरं नगेन्द्रं धृत्वानीतवती । सहासं च विनोदिनीनगेन्द्रयोर्वैमत्यं दूरीकृतवती । संसारेऽस्मिन्नेकतोऽन्यज्जायते, क्रीडा वा काले संकटरूपेण परिणमते,—इत्यादिकं गुरुवचनं तरुणे वयसि न कस्मैचिद्रोचतेतराम् ।

गच्छति च काले परिक्षीणाभवन्नगेन्द्रस्य वैमत्यदृढता, क्रमेणाक्षमश्चाभवत् स पत्रक्रीडार्थं समधिकं प्रार्थनमपेक्षितुम् ।

एवमघटत प्रायशो नगेन्द्रेण सह विनोदिन्याः साक्षात्कारः ।

क्रीडावसरे पत्रापेक्षया सजीवतरपदार्थं प्रति समधिकाकर्षणवशादेव क्रीडायां बहुशः पराजितोऽभवन्नगेन्द्रः । द्वयोरेव कुसुमाविनोदिन्योर्नाज्ञातमासीत् पराजयस्य प्रकृतं कारणम् । कर्मफलस्य गुरुत्वप्रणिधानं न तावत्तरुणवयसः कर्म । कौतुककरमेवेदमित्यासीत् कुसुमामनसि, अपि च प्राप्नोतु कौतुकमेतत् क्रमेण षोडशकलत्वमित्यत्र तस्या आग्रहोऽप्यासीत् । कौतुककरं तावत्तरुणीनां रहसि प्रेम्णो नवाङ्कुरे सलिलसेचनम् । नैतदसुखकरममन्यत विनोदिन्यपि ।

हृदयजयस्य सुतीक्ष्णक्षमतायाः कस्मिन्नपि पुरुषे शाणितकरणवासना यद्यपि न न्याय्या तथापि नास्वाभाविकी ।

एवं पत्रक्रीडावसरे जयपराजययोस्तथा षट्कपञ्चकानां पुनःपुनरावर्त्तन-स्यान्तराले क्रीडारसिकद्वयस्य मानसिकमेलनं सञ्जातं, तत्तु वर्जयित्वान्तर्यामिन-मपरापि क्रीडारसिका विदित्वानन्दमलभत स्वमनसि ।

अथैकदा मध्याह्ने कुसुमाविनोदिनीनगेन्द्राः पत्रक्रीडारता आसन् । व्यतीते तु कस्मिंश्चित् काले सा कुसुमानाम्नी रुग्णस्य स्वशिशोः क्रन्दनमाक-र्ण्योत्थाय गतवती । नगेन्द्रश्चासीद्विनोदिन्या सहालपनरतः । परं किं नामालपनं तेन प्रवर्तितमिति स्वबोधविषयतां नागतम् । हृत्पिण्डमुद्वेलितं कृत्वा शोणित-प्रवाहस्तस्य सर्वशरीरशिराभ्यन्तरे तरङ्गितोऽभवत् । क्षणेन च चूर्णयामासोद्-दामयौवनं तस्य सर्वं विनयबन्धनम् । धृत्वा सहसा विनोदिन्याः करद्वयं सबलं तामाकृष्य चुम्बितवान् । नगेन्द्रकृतावमाननावशात् क्रोधेन लज्जया क्षोभेन चाधीरा विनोदिनी स्वपाणिं मोचयितुं यदासीदाकर्षणपरा तस्मिन्नेव क्षणे गृहे तृतीयजनागमनं तयोर्दृष्टिगोचरमभवत् । गृहाद्बहिर्गमनाय मार्गान्वेषणत-त्परोऽभवन्नताननो नगेन्द्रः ।

भर्तृजाये ! पितृष्वसा त्वामाह्वयतीति गम्भीरस्वरेणावदत् परिचारिका । साश्रुनयना विनोदिनी नगेन्द्रं प्रति विद्युत्कटाक्षं निक्षिप्य दास्या सह प्रचलिता ।

परिचारिका तु यत्किञ्चिद्दृष्टवती तदेव ह्रस्वं विधाय, यच्च सा नापश्यत् सर्वं तद्बहुलीकृत्य वैद्यनाथस्यान्तः पुरे तुमुलं कृतवती । कल्पनयैव सुबोधा विनोदिन्या दशा, अलं वर्णनेन । कियता परिमाणेनाहं निरपराधेति कमपि सा बोधयितुं नाचेष्टत । नतानना सा सर्वमसहत ।

भाविनः स्वपिण्डदातुराविर्भावसम्भावनामत्यन्तं संशयाच्छन्नां मत्वा वैद्यनाथो विनोदिनीमवदत्—कलङ्किनि ! दूरमपसर मे गृहादिति ।

पिधाय शयनकक्षाद्वारं विनोदिनी शय्यामाश्रितवती, मध्यदिवसे मरुस्थलीव ज्वलदिवासीत्तस्या अश्रुलेशशून्यं नयनयुगलम् । सन्ध्यायां च घनीभूतेऽन्धकारे स्तब्धोऽभवद्यदा वायसानामारवस्तदा नक्षत्रखचितं शान्तमाकाशं प्रति दृष्टिं पातयन्त्यास्तस्याः स्मृतिपथमागता मातापित्रोः सम्बन्धिनी कथा । गण्डद्वयं च तस्या अभिषिच्य धारयापतन्नश्रूणि ।

तस्यामेव निशायां विनोदिनी पतिगृहं परित्यज्यागच्छत्, न च केनापि कृतं तस्या अन्वेषणम् ।

प्रजनार्थं महाभागेति नारीजन्मनो महाभाग्यं मया लब्धमिति, गर्भं वा मे समाश्रिता पत्युः पारलौकिकी सद्‌गतिरिति सर्वं तस्या अज्ञातमासीत् ।

अतः परं विगतानि दशवर्षाणि ।

अत्रान्तरे वैद्यनाथस्य वैषयिकोन्नतिः परां कोटिमारूढा । हित्वा च पल्लीग्रामं स कलिकातायामट्टालिकां क्रीत्वा तत्रावसत् । विषयश्च तस्य यथैव वृद्धिमागतस्तथैव विषयोत्तराधिकारिणे व्याकुलतामभजत चित्तम् ।

बारद्वयमतः परं स पाणिग्रहणकर्म सम्पादितवान्, पुत्रस्तु न जातो, जाता कलहवृद्धिः । दैवज्ञपण्डितैः सन्न्यासिभिरवधूतैश्च परिपूर्णमभवदस्य गृहम् । भृशं च जातं मूलानां कवचानां मन्त्रपूतसलिलस्य 'पेटेण्टा'ख्यभेषजानां च वर्षणम् । कालीघट्टे ये तावच्छागशिशवो निहतास्तेषामस्थिस्तूपेन तैमुरलङ्गस्य कङ्कालरचितजयस्तम्भोऽपि पराजयभाजनतां गन्तुमर्हति स्म । केवलं कतिपयास्थिग्रथितः स्वल्पमांसविनिर्मितकायः क्षुद्रतमोऽपि शिशुः कश्चिद् वैद्यनाथस्य विशालप्रासादप्रान्तमेकमधिकृत्य नाविर्भूतः । अवर्त्तमाने च मयि परस्य कस्यापि पुत्रो भोक्ष्यते ममान्नमिति विचिन्तयतस्तस्य भोजनव्यापारेऽरुचिर्जाता ।

ततः परमपि पुनरेकं परिणयकर्म संसाधितवान् वैद्यनाथः । नास्त्यस्मिन् संसारे आशाया अवधिः, कन्यादायग्रस्तानां वा कन्यापरिसमाप्तिः ।

कन्यायास्तस्याः सुतगृहे यादृशः शुभग्रहयोगो दृश्यते तेन तु वैद्यनाथस्य गृहे प्रजावृद्धिविलम्बं नास्तीति दैवज्ञा जन्मपत्रिकां विचार्योक्तवन्तः । ततः परमपि वर्षषट्कमतीतम्, - पुत्रस्थानस्थितशुभग्रहयोगस्तु नालस्यं त्यक्तवान् ।

नैराश्यभारावनतोऽभवद्वैद्यनाथः । अन्ते च शास्त्रज्ञानां पण्डितानां मन्त्रणामनुसृत्य स प्रभूतव्ययसाध्यस्य कस्यापि यागस्यायोजनं कृतवान् । प्रचलिता तत्र दीर्घकालं यावद्बहूनां ब्राह्मणानां सेवा ।

अत्रान्तरे देशव्यापिदुर्भिक्षकवलिता वङ्गविहारोत्कलप्रदेशा अस्थिचर्मसम्बलाः समजायन्त । को नु मेऽन्नं भोक्ष्यते इति विचिन्तयन्नासीद्यदान्नस्तूपासीनो वैद्यनाथो देशस्तदासीत् साकल्येन स्वरिक्तस्थालीं प्रति दृष्टिं निबध्य किं भोक्ष्ये इति चिन्तातुरः ।

तदैव मासचतुष्टयं यावद्वैद्यनाथस्य चतुर्थी सहधर्म्मिणी शतब्राह्मणपादोदकपानपरायणासीत् । शतं तु ब्राह्मणाः प्रातः प्रभूतमन्नं सायं चापरिमितं मिष्टान्नादिकमुदरसात्कृत्वा मृत्तिकाभाण्डशरावैर्दधिघृतलिप्तैश्च कदलीदलैः पौरपालानामवस्करपरिवाहिशकटं परिपूरयितुं सचेष्टा आसन् । शतशश्च द्वारि समागता अन्नगन्धेन समाकृष्टा दुर्भिक्षपीडिता बुभुक्षवः, विताडनाय तेषां नियुक्तोऽपरो द्वारपालः ।

एकदा तु प्रभातकाले शुभ्रपाषाणरचिताट्टालिकायां सेटकद्वय-मोहनभोगेन सह सार्द्धसेटकपरिमितदुग्धस्य सेवायां निरते कस्मिन्नपि स्थूलोदरे सन्न्यासिवरे, एकान्तविनीतभावेन चोत्तरीयावृतदेहे युक्तकरे भूतलासीने भक्त्या च तद्भोजनव्यापारनिरीक्षमाणे वैद्यनाथे, कथमपि द्वारपालदृष्टिं परिहाय जीर्णदेहेन च केनापि बालकेन सहातिशोणा काचिद्रमणी गृहं प्रविश्य क्षीणकण्ठेनोक्तवती महाभाग ! देहि किञ्चिदाहार्यमिति ।

अतिसन्त्रस्तो वैद्यनाथस्तु गुरुदयाल गुरुदयालेत्युच्चैराहूतवान् । अवस्थावैपरीत्यं वीक्ष्य सकरुणमवदत् सा रमणी—भो ! पुत्रकायास्मै देहि किञ्चित् खाद्यं नाहं किमपि याचे इति ।

गुरुदयालश्चागत्य बालकं जननीं च तस्य विताडितवान् । स एव क्षुधातुरो निरन्नो बालको वैद्यनाथस्यैक एव पुत्रः । शतं पीना ब्राह्मणास्त्रयश्च बलीयांसः सन्न्यासिनो वैद्यनाथं पुत्रप्राप्त्याशया प्रलोभ्य तस्यैवान्नस्य भोजने तत्परा आसन् ।

---

# आरण्यकं दर्शनम्*

अनुवादकः—**को. ल. व्यासरायशास्त्री**

वयमस्य विशालस्य भुवनस्य पुरस्तात् तिष्ठामः। अस्माकं जीवितस्य तत्त्वं लोकविषयिणीमस्माकं चित्तवृत्तिमवलम्बते। या खलु अस्माकं परिसर-भूमेः मनोगतेश्च स्थितिविशेषमनुसृत्योत्पद्यते। सैषा चित्तवृत्तिः परैः सह द्वैधी-भावेन एकीभावेन वा, पराक्रमेण अनुकम्पया वा अस्माकं लोकेन सह सम्बन्धसम्पादने मार्गदर्शिनी भवति। इत्थमस्माकं जीविततत्त्वसरणौ द्वित्व-भावनामेकत्वभावनां वा वयं सविशेषमाद्रियामहे।

अस्माकं भारतीया महर्षयः अन्ततः एकत्वभावनयैव जीवस्य निश्श्रेयस-सिद्धिरिति उपनिषत्सु घोषयन्ति स्म। तथा हि—'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।' जङ्गमस्वभावायामस्यां जगत्यां सर्वं वस्तुजातमीशेनानुप्रविष्टम्। तस्मात् बाह्यवस्तुपरित्यागद्वारा सुखमुपभोक्तव्यं, न तु वस्तूनां गर्धनेन इति खलु तस्यार्थः।

अस्य चायं भावः—यदा वयं विचित्रं वस्तुजातमेव परतत्त्वं विद्मः तदा तेषां वस्तूनां बाह्यसम्बन्धमभिलषामः, यदा तु अनादिनिधनं वस्तु परतत्त्वं जानीमः, तदा तदन्तर्गतेन वस्तुना सहैक्यभावनया वयमात्मानन्द-मनुभवामः। अत एव एवंविधान् पूर्णकामानधिकृत्य 'सर्वमेव विशन्ति' इत्युक्तम्। तादृशानां लोकेन सह सन्बन्धो नाम परावरवस्तुना सह ऐक्य-सम्बन्ध एव।

* The Religion of the Forest in the collection Creative Unity.

अयं पूर्णताया आदर्शभूतः वनवासिनामृषीणामुपदेशः लौकिक-संस्कृतसाहित्ये सर्वत्र लब्धानुवृत्तिः विशेषतोऽस्माकं हृदयेऽद्यापि लब्धपदो दृश्यते ।

पुराणेषु कथिताः पुरावृत्तकथाः आरण्यकच्छायानुकारिण्यः वनवासिनामृषीणां सन्देशं सर्वात्मना अनुपालयन्ति । अस्माकं महत्तमं नाटकद्वयमीदृशैः ऋषिभिः सङ्कुलेन वनाश्रमसम्बन्धिना कथावस्तुना सङ्घटितं वरीवर्ति ।

उत्तरयूरोपखण्डस्य औत्तराहाणां चरितं समुद्रगानेन मुखरितं दृश्यते । न केवलं समुद्रस्तत्र प्राधान्येन विवर्णयिषितं स्थानं किन्तु जीवित-मार्गोपयुक्ताः केचिदादर्शविशेषास्तत्रोपनिबद्धाः, ये खलु तत्रत्ये चरित्रे तद्गतानां जनानामुत्कृष्टायां सृष्टौ च मार्गदर्शका भवन्ति । प्रकृतिः खल्वात्मनो भयङ्करं रूपं तेषां जनानामग्रे दर्शयामास । यः खलु तेन देशेन तत्रत्यैः बालकैश्च सह युद्ध्यमानः प्रतिरोधक इवादृश्यत । समुद्रः उद्वृत्तस्व-भावः अप्रतिभटस्य मानवजीवितस्य सङ्ग्रामाह्वानमभूत् । मानवस्ततः कान्दिशीको न बभूव । तेन सहायुध्यत विजयी च बभूव । तादृशो युद्धोत्साहस्त-मन्ववर्तत । तदिदं युद्धमद्यापि प्रवर्त्यते तत्रत्यैः जनैः । तत्र युद्धं रोगदारिद्र्ययोः निवारणे प्रकृतेः मानवस्य च पीडायाः प्रतिभटने च कारणतामगात् ।

अयं चार्थः समुद्रवेलावासिनो जनान् विषयीकरोति । ये खलु दंशन-शीलं वन्यमश्वं गृहीतकेसरमारूढा इव समुद्रोपरि तीरात् तीरं सञ्चरन्तः तं जनानां वशवर्तिनमकार्षुः । प्राकृतिकस्य प्रतिरोधकस्य अनुरोधकत्वसम्पादने तेषां महानुत्साहः । द्वैधीभावमेव ते तत्त्वं मन्यन्ते यत्र हि शुभाशुभयोः विरोधः विजयपराजयान्यतरपर्यवसायी शाश्वतिकः समुपलभ्यते ।

उत्तरभारतवर्षस्य समभूमौ स्थिता जनास्तु स्वात्मनः विश्वव्यापिनः पर-मात्मनश्चान्तरमेव नापश्यन् । तेषां कर्मविश्रमयोः दैनन्दिनवृत्तिध्यानयोश्च आर-

व्यकदर्शनसम्बन्धः बलवानासीत् । ते विभिन्नं परिपन्थिनं परिसरं वा नाद्राक्षुः । अतस्तैर्दृष्टं सत्यस्य स्वरूपं न भेदरूपं किन्तु सर्वेषां वस्तूनामेकत्वमेव । तेषां भावनामेतैः शब्दैः ते प्रकटयन्ति स्म—'यदिदं किञ्च सर्वं प्राण एजति निःसृतम् ।' सर्वो जीवराशिः परमात्मन एव सकाशात् सम्भूतमिति हि तस्यार्थः । यदा वयं जगदिदं भिन्नत्वेन पश्यामः तदा अस्माकं चेतसि यान्त्रिकज्ञानस्य रूपं परभागमवाप्नोति । यन्त्राणि उपायांश्च प्रयुञ्जाना वयं यावच्छक्यं यन्त्रैः लाभं सम्पादयितुं यतामहे । एषापि वस्तूनां समीक्षा न वन्ध्या, यतो ह्यस्मिन् जगति यन्त्रस्याप्यस्त्येव स्थानम् । न केवलं भौतिकः प्रपञ्च एव किन्तु मानववर्गोऽपि शिल्पोपकरणत्वेनोपयुज्यमानः महाफल-सम्पादकः कर्तुं शक्यते। इदमपि तत्त्वस्य रूपान्तरं नावज्ञेयं किन्तु ज्ञेयं शिक्षणीयं च । यूरोपखण्डस्तथा कृत्वा समृद्धं फलमचैषीत् ।

भारतीयैः कृतं एतज्जगद्विषयकं दर्शनं 'सच्चिदानन्द' इत्येकेन समस्त-पदेन क्रोडीकृतम् । तस्य चायमर्थः—प्राधान्येन तत्त्वं तावदेकमेव । तस्य रूपत्रयमस्ति—तत्र प्रथमं रूपं 'सत्' इति । तत् वस्तूनां सत्तामात्रं बोधयति । यत् खलु सामान्यतः अस्माकं सत्तामात्रेण जगता सह सम्बन्धं सम्पादयति । द्वितीयं रूपं 'चित्' इति । अस्माकं विदितमेवेदं तत्त्वम् । यत् खलु ज्ञानसम्बन्धेनास्माकं जगत्सम्बन्धं बोधयति । तृतीयं च रूपं 'आनन्द' इति । इदं तत्त्वमानन्दानुभवात्मकम् । यत् खलु स्नेहसम्बन्ध-द्वारा अस्माकं सर्वैः वस्तुभिः सह सम्बन्धं सम्पादयति ।

भारतीयदर्शनानुसारेण अस्माकं जगद्विषयको बोधः केवलं पदार्थ-परिगणनरूप एव । नियतिकृतनियमानुसारित्वबोधस्तु अपूर्ण एव । किन्तु पूर्णरूपः स भवति यदाऽस्माकं बोधः सर्वाणि वस्तूनि परमार्थतः एकत्वेन पश्यति, तेन स आनन्दजननक्षमो भवति । अस्माकमस्य जगतः परमं प्रयोजनं तु न केवलं तस्मिन् वासः नापि केवलं तज्ज्ञानम्, न चापि तद्वस्तूनामुपभोगः किन्तु अनुकम्पाविकासेन तस्मिन्नात्मनः ऐक्यदर्शनमेव प्राधान्येनोद्दिष्टम् ।

न स्वात्मनस्तस्मात् भिन्नत्वेन परिगणनम् । नापि तन्नायकत्वसम्पादनम्, किन्तु तेन सह सर्वात्मना ऐक्यसम्पादनमेव मुख्यतयोद्दिष्टम् ।

२

यदा विक्रमार्को राजा बभूव, उज्जयिनी प्रधाननगरम्, कालिदासश्च तस्य कविः, तदा आरण्यकदर्शनानुवृत्तेः कालः पर्यवसन्नः आसीत् । तदा वयं महतो जनौघस्य मध्ये कृतपदाः स्मः । चीनदेशीयाः, हूणाः, सिथियनाख्या जनाः, पारसीकाः, ग्रेकदेशीयाः रोमकदेशीयाश्च अस्मान् पर्यवारयन् । किन्तु तस्मिन् आडम्बरस्य सम्पत्तेश्च कालेऽपि महतादरेण प्रश्रयेण च कालिदासकृतं ऋष्याश्रमवर्णनं भारतदेशस्य हृदये कीदृश आदर्शः पदं चकारेति, कथं पूर्वसंस्कारस्य अविच्छिन्नः प्रवाहः तस्य जीवितेऽनुस्यूततया प्रावर्ततेति च द्योतयति ।

शाकुन्तलाख्ये कालिदासीये नाटके राजहर्म्यातिशायितया प्राधान्येन वर्ण्यमानः ऋष्याश्रमः मानवस्य चेतनाचेतनसृष्ट्या सह समानरूपां बन्धुतां व्यनक्ति ।

पश्चात्कालिकः कश्चित् कविः आत्मनः कादम्बर्यामाश्रमं वर्णयन्—अनिलावनमितशिखराभिः पुष्पिताभिः वनलताभिः क्रियमाणं प्रणामविधिम्, अनवरतमुक्तकुसुमैः पादपैः क्रियमाणमभ्यर्चनम्, नवागतानां वटूनामध्ययनघोषैः अनवरतश्रवणगृहीतानां शुकैः पुनः पुनरुच्चार्यमाणानां मन्त्राणां नादैश्च मुखरितं तपोवनम्, वैश्वदेवबलिमुपभुञ्जानान् अरण्यकुक्कुटान्, आतपे शोषणायाश्रमाङ्गणे व्याकीर्णानां नीवारकणानां भक्षणाय वापीतः उत्तीर्णान् कलहंसान्, मुनिकुमारान् जिह्वाभिरुपलिहतः हरिणांश्च वर्णयति । इयमपि पूर्वोक्तैव कथा । इत्थमस्माकं चिरन्तने साहित्ये ऋषीणामाश्रमः मानवस्य इतरेषां च सेतुबन्धं प्रकल्पयन् विराजते ।

पाश्चात्यदेशीयेषु नाटकेषु मानवीयाः स्वभावाः तेषां मनो विकृते-रावर्तेऽस्माकमवधानं मज्जयन्ति । प्रकृतिस्तत्र वैरल्येनात्मानं दर्शयति । किन्तु सा विमार्गगा क्षमां याचमानेव सापदेशं प्रणमन्ती निर्गच्छति । अस्माकं मृच्छकटिक - शाकुन्तल - उत्तररामचरितादिषु अद्यापि विश्रुतयशस्सु नाटकेषु प्रकृतिः मनुष्यस्य चेतोवृत्तौ सनातनशान्तेरुत्पादनमात्मनः कृत्यं मन्यमानेव यथावत् कृतपदा दृश्यते ।

षेक्स्पियर कवेरभिनवे काव्यद्वये मानवमनोविकारस्योत्कटता प्रकट-मेव पृथग्भूताऽनुभूयते । स खलु विश्वस्मात् विश्लेष्य निवेशितस्तत्र । सस्य-श्यामा वसुमती वा नीलं नभो वा न तं परिवृणीते । मानवस्य मनोरथगतं उत्कटं ज्वरं परमस्माकं पुरस्तादुपहरति न तु प्रपञ्चगतमारोग्यं विश्रान्तिं वा ।

ऋतुसंहारः स्फुटमेव अप्रबुद्धवयसः कालिदासस्य कृतिः । अपक्वं तस्य शृङ्गारगीतं शाकुन्तलकुमारसम्भवयोरिव महत्तरमर्थगौरवं न भजते । किन्तु अत्रत्यो विषयपरः शृङ्गारोद्गारः विविधं प्रकृतेः स्वभावमनुसरति । ग्रीष्मसमयस्य सन्ध्यायाः चन्द्रपादाः निर्झरशब्दानुनादिताः तं तदीयगीतत्वेनाभि-जानन्ति । गीतकाव्येऽस्मिन् वर्षर्तोः शिशिरया प्रथमवृष्ट्या कदम्बवनं कम्पते, चूताङ्कुरपरिमलवाही दक्षिणानिलः स्वकीयैः कलरवैः तच्छमयति ।

कुमारसम्भवस्य तृतीये सर्गे ऋषीणां ध्यानेन निश्चलं तपोवनमाकस्मि-केनानुरागप्रवाहेण आप्लावयितुकामः कामः पावनं प्राविक्षत् । परन्तु तथाविर्भूतः प्रचण्डोऽनुरागः विश्वमेव वनप्रदेशं व्याकुलयामास । उमायाः शिवस्य च चेतस्याविर्भूतो विकारः विश्वस्मिन्नपि जीवजाले प्रसृतः—वृक्षाणां प्राणिनां च जीवितस्पन्दो जातः ।

न केवलं तृतीयः सर्ग एव, किन्तु समग्रमेव कुमारसम्भवं काव्यं निरवधिके पटे चित्रितम् । तच्च नित्यवस्तुनोः विवाहं तदर्थं प्रार्थनां तपश्चरण-मन्ततः दोलायमानमानसैः सुरैः चिरात् प्रतिपालितां समीहितसिद्धिं चास्मान्

बोधयति। अस्यान्तरोऽर्थः गभीरः सार्वकालिकश्च। मानवैः पृच्छ्यमानः कश्चित् प्रश्नः—स्वर्गपदवीं प्रतिरुन्धतः दोषासुरस्य संहारे क्षमः सुतः कथं प्राप्तव्यः—इत्येवंरूपः अनेन समाधीयते।

एषा समस्या कालिदासस्य काले निराडम्बरस्य मानवजीवनस्य नष्टत्वात् अतीव तीव्रतां प्रत्यपद्यतेति व्यक्तमेव ज्ञायते। हैन्दवा राजानः स्वेषां कर्तव्यं विस्मृत्य स्वार्थं कामयमानाः विषयासक्तचेतसः अभूवन्। भारतदेशश्च सिथियन्-जनैः शश्वत् पीड्यमान आसीत्। तर्हि पूर्वोक्तस्य प्रश्नस्य किमुत्तरं दीयतेऽनेन काव्येन? इदं तस्य वाचिकम्, यथा दौर्बल्यस्य कारणमात्मनोऽन्तर्जीविते वर्तते। तच्च साधुना सह सामरस्याभावः सत्यानुषङ्गाभावश्च। अस्य काव्यस्योपक्रमे शिवः—साधुः—आत्मन्यात्मानमवलोकयन् सत्यात्मकात् बाह्यव्यापारादुपरतः चिरं ध्यानग्रस्तः तस्थौ। तदा तस्यानन्दलोको नष्टः। किन्तु कुमारसम्भवं काव्यं तत् प्रत्यानयति। कथं स प्रत्यानीतः? यदा सत्यरूपिणी उमा विनयेन क्लेशानुभवेन तपसा च 'साधु' स्वरूपस्य शिवस्य हृदयमजयत्। इत्थं स्वतन्त्रेण सत्येन साधोः निग्रहणात् अधर्माभिधानात् राक्षसात् आनन्दलोकं प्रत्यानयन् पराक्रमाख्यः सुतः समजनि।

बाह्यदृष्ट्या विमृश्यमाने वस्तुनि कालिदासस्य काले भारतदेशः विनोदवस्तुनि, साहित्ये, कलासु च नागरिकपरिष्कारस्य परां काष्ठां प्रत्यपद्यत। परन्त्वेष धनोपचयः सुखोपभोगश्च अरण्यैकान्तादुद्भूय सर्वतः सम्प्लुतस्य आदर्शस्य परिपन्थीति कालिदासस्य काव्यात् सुस्पष्टमवगम्यते। इमानि काव्यानि अचिरप्रभस्य तस्मिन् काले प्रचयं गतस्य सुखोपभोगस्य विषये जाग्रतामुपदिशन्ति। तस्मिन् खलु काले विषयासक्तिः हिमालयात् तुषारधारेव विपद्दरीमभिसुस्राव। निखिलशोभानिधानस्य विक्रमादित्यसिंहासनस्यान्तिके स्थितोऽयं कविः पुराकल्पीये विशुद्धे निराडम्बरे च ज्ञानमार्गे उत्कण्ठामात्मनः प्रकाशयति। इयमेव उत्कण्ठा रघूणां वंशस्य वर्णने कविं प्राचोदयत्। यत्र हि राज्ञामभ्युदयो विनिपातश्च वर्ण्यमानः नृपतीनां मार्गदर्शी भवति।

राजा दिलीपः राज्ञ्या सुदक्षिणया सह वन्यां वृत्तिं निषेवते । तत्र महाराजः आश्रमस्थः गोः पालने व्यग्रो भवति । एवं काव्यमिदं निराडम्बर-जीवितस्य आत्मसंयमनस्य च दृश्यैः सहारभ्यते । परन्तु विभवोपशोभितस्य राजभवनस्य सुखोपभोगार्थकस्य दुर्व्ययस्य दृश्यैः सहावसीयते । राज्ञां तेजः परिशुद्धया जेजीयमानं बोधयति मृदुलया परिमितया च वाचा कविः । स दिवसस्यारम्भमिव काव्यमारभते निरस्तभासं सन्ध्यासमयमिवावसाययति च । सन्ध्याकालो हि मुहूर्तं रमणीयोऽपि पश्चात् तस्य रामणीयकं शमयता गाढेन तमसा ग्रस्यते ।

एतादृशेनोपक्रमणोपसंहारेण च वन्यः सन्देशः कवेर्वचनेष्वन्तर्लीनः प्रतीयते । यत्र इन्द्रियनिग्रहेण विशुद्धया त्यागेन च शान्तता विलसति तत्रैवायतिः उज्ज्वला भवति इत्ययमभिप्रायः काव्येऽस्मिन् सर्वाङ्गीणतया प्रकाशते । यदा विनिपातः सन्निहितः तदा रागानलः शतमुखतया प्रज्वलन् पश्यतां जनानां नयनान्युपहन्ति ।

कालिदासः प्रायेण सर्वेष्वप्यात्मनः काव्येषु - एकतः राजतेजसः अनभिभवनीयताम्, अपरतश्च विशुद्धायाः निःस्पृहतायाः शक्तिं च प्रतिपादयति । मालविकाग्निमित्राख्ये उपनाटकेऽपि अमुमेवार्थं रूपान्तरेण पश्यामः । नाटकेऽस्मिन् कालिदासः आत्मनः पोषकं राजानं कामविकारस्य पात्रतां नयन् विटत्वेन वर्णयितुमेव प्राधान्येनोद्दिशतीति न भ्रमितव्यम् । तद्गतो नान्दीश्लोक एव नाटकप्रवृत्तेरुद्देशं स्पष्टमवगमयति । 'सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः' इत्यनेन वचनेन काव्यमारभते कविः । अत्र प्रतिपाद्यं वस्तु शिवः, यस्य देहः सर्वदा विशुद्धानुरागया पार्वत्या सम्मिश्रितो वर्तते । पार्वतीशिवयोः सम्मिश्रणेन स्थितिः परिणीतयोः स्त्रीपुंसयोः सनातनानुरागस्य स्वरूपं लक्षयति । अनेन भावेन दिव्यं समागमं वर्णयन् नाटकमारभमाणः कविः तादृशमेव राजानं सभ्यत्वेनाभिप्रैतीति सुस्पष्टमवगम्यते । तस्मादिदं नाटकमनिगृहीतेन्द्रियाणां वञ्चनायाः धूर्तता-

याश्च वैरूप्यं प्रदर्शयति । नाटकेऽस्मिन् राज्ञोऽग्निमित्रस्य राज्ञ्या धारिण्याश्च मिथो भावभेदः समस्ति, स च भेदः राज्ञः राज्ञ्याश्च नाम्नोरन्तर्लीनः संदृश्यते । यद्यपि अग्निमित्र इति चरित्रप्रसिद्धं नाम तथापि अयं शब्दः रघुवंशे अग्निवर्ण-शब्द इव अनिगृहीतेन्द्रियस्य जनस्य नाशोन्मुखतां प्रतिपादयतीति कालिदासस्य मनोगतं व्यञ्जयति । अग्निमित्रशब्दो हि अग्नेर्मित्रमित्यर्थं बोधयन् अविमृश्यकारिणं परामृशति, यः अनुरागविषये अग्निना सह क्रीडति न च जानाति स आत्मानं दहतीति । महदिदं नामधेयं धारिणीति, यत् खलु उदारहृदयगतां स्थिरतां सहनशीलतां च द्योतयति । तच्च रहस्यभेदमपराधं च निह्नुय विशुद्धरूपस्य स्नेहस्य गौरवं परिपालयति ।

शाकुन्तले आदर्शयोः विरोधः आमूलाग्रं दृश्यते । यत्र राजभवनस्य कृत्रिमा निष्करुणता तत्प्रतिद्वन्द्वितया तपोवनस्य स्वाभाविकी पावनता च प्रतिपाद्यते । नाटकमिदं हरिणमनुधावतः मृगयाप्रसक्तस्य राज्ञो दृश्येन सहारभ्यते । राज्ञो लक्षणभूतं मृगयाक्रौर्यं विविक्तस्थानगतस्य तपोवनस्य भर्त्सनत्वेन प्रतिभाति । तपोवनं हि शरण्यं सर्वभूतानाम् । यत्र सर्वाणि सत्त्वानि स्नेहेन परिपाल्यन्ते । अनन्यशरणस्य निरपराधस्य मनोहारिणः हरिणस्य जीवितरक्षणार्थं मुनिकुमारकैः क्रियमाणा प्रार्थना कृत्स्नस्य नाटकस्य हृदयादुत्पद्यते । 'न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे पुष्पराशाविवाग्निः' इति हि मुनिकुमारकाणां प्रार्थना ।

रामायणे रामस्तत्सहचरौ च वनावासकाले वनाद्वनं विचरन्ति, पर्णशालासु निवसन्ति, अनावृतायां च भूमौ शेरते । परन्तु तेषां हृदयं वनप्रदेशान् गिरीन् निर्झरांश्च स्वबन्धूनमन्यत । एतेषां मध्ये निवसन्तस्ते न विप्रवासमगणयन् । विभिन्नेषु वातावरणेषु प्रवृद्धाः कवयः वनवासस्य विविधान् दारुणान् क्लेशान् सविशेषं प्रतिकूलतया वर्णयन्तः रामचन्द्रस्य प्राणहानिमवर्णयिष्यन् । रामायणे तु न प्रकृत्या सह तीव्रविरोधेन किन्तु तत्सामरस्येन

महावीरस्य रामस्य महत्त्वावगतौ प्रेरिताः स्मः । महतो राजगृहस्य स्नुषा सीतापि वनमार्गे सञ्चरति । तत्रेदं पठामः—

एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ।
अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साऽबला ॥

सीतावचनसंरब्ध आनयामास लक्ष्मणः ।
विचित्रवालुकां नीलां हंससारसनादिताम् ॥

रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ।

यदा रामः प्रथमं चित्रकूटे न्यवसत् तदा—

सुरम्यमासाद्य तु चित्रकूटं
नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द रामो मृगपक्षिजुष्टां
जहौ च शोकं पुरविप्रवासात् ॥

गिरिवनप्रियो रामः चित्रकूटे चिरं निवसन् एकस्मिन् दिने सीतामाह—

न राज्याद्भ्रंशनं भद्रे न सुहृद्भिर्विनाभवः ।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥

इत्थं रामस्य विप्रवासः कदाचित् वनप्रदेशेषु कदाचिदाश्रमेषु च वासेन समाप्तः । सीताया रामस्य च यो मिथः स्नेहः स न केवलं तयोः किन्तु निखिलस्यैव जीवलोकस्य आवर्जक आसीत । अत एव यदा सीताऽपहृता तदा तस्या नाशेन समग्रैव वनभूमिः शोकाकुला समभवत् ।

३

इदं तु चित्रं यत् कालिदासस्येव शेक्स्पियर्-कवेः नाटकेष्वपि राजसद्मनां कृत्रिमजीवितस्य निन्दनं निगूढं दृश्यते, यच्च जीवनं कृतघ्नतामूलक-वञ्चनारूपं असत्यतारूपं चासीत् । तदीयेषु नाटकेषु प्रायेण सर्वत्र अर्थतृष्णया स्वैरं प्रवर्तमानानां गतिं निरूपयितुं वन्यानि दृश्यानि संयोजितानि । अयं चार्थः Timon of Athens-नाम्नि नाटके प्रत्यक्षमनुभूयते, परन्तु तत्र प्रकृतिः खिन्नचेतसो मानवान् प्रति न कञ्चित् सन्देशं वा मनःशान्तिं वा प्रयच्छति । Cymbeline-नाटके गिरिवनानि कन्दराणि च मानवजीवितप्रसङ्गेऽन्तरायत्वेन वर्ण्यन्ते । इमानि च कृत्रिमे राजभवनजीविते यच्चञ्चलं भाग्यं तदपेक्षयैव सह्यानि भवन्ति । As You Like It-नामके नाटके Arden-देशीयं वनं सदुपदेशशिक्षकं दृश्यते, किन्तु तन्न शान्तिं प्रयच्छति । अपि तु तत्—

अपि न मनुजजीवं प्राक्तनः सम्प्रदायः
मधुरतरमकार्षीत् कृत्रिमाज्जीवितान्नः ।
वनमिदमतिमात्रं किं न भीत्या विहीनं
खलजनपरिवारादीर्ष्यकाद्राजहर्म्यात् ॥

एवं वर्णयन् धर्मघोषणां करोति । Tempest-नामके नाटके एयरियल्, केलिबन् इत्यनयोर्विषये प्रोस्पेरो-नामकस्य यदनुविधानं तेन मानवस्य प्रकृत्या सह महान् संमर्दः, तेन तस्याः परित्यागेच्छा च ज्ञायतेऽस्माभिः । Macbeth-नाटके रक्तधारापर्यवसाय्यपराधरूपाया वञ्चनायाः राजद्रोहस्य च पूर्वरङ्गायमाणं किमपि दृश्यं प्रापिताः सः, यत्र हि वन्ध्यायां जङ्गलभूमौ ओषधीनां मध्ये घोरायाः प्रकृतिशक्तेर्मूर्तय इव तिस्र आभिचारिक्यः स्त्रियः प्रवेशिताः । एवं King Lear-नाटके पितुः स्वपुत्रे आतिमात्रस्नेहोद्भूतः अस्वाभाविकराजगृहजीवितप्रयुक्तः कोप एव जङ्गलप्रदेशगतझंझावातलक्षणेन

शापतया परिणतः। Hamlet, Othello-नाम्नोर्नायकयोर्दुःखपर्यवसायिनी कठोरता नित्यायाः प्रकृतेः स्पर्शेन अनुपशमिता दृश्यते। Merchant of Venice-नाटके अनुरागद्योतके कस्मिंश्चित् दृश्ये चन्द्रिकाधवला निशा क्षण-प्रभायमाणा संयोजिता। नान्यत्र कुत्राप्येतद्वर्गीयेषु नाटकेषु Romeo and Juliet, Antony and Cleopatra - प्रभृतिषु स्वगीतं मानवीय-शृङ्गारगीतेन योजयितुं प्रकृत्या अवकाशो न दत्तः। Winter's Tale-नामके नाटके राज्ञः शङ्काजनितं क्रौर्यं तीव्रं स्फुटं च तिष्ठति, यत्पुरतः प्रकृतिः आश्वासमप्रयच्छन्ती अवनता तिष्ठति।

मन्ये नैतद्वचनमावश्यकं यत् नैतानि निरूपणानि षेक्स्पियर्-कवेः नाटकप्रणयने या शक्तिः न तां निह्नोतुं प्रवृत्तानि। किन्तु प्रकृतेः मानव-स्वभावस्य च विच्छिन्नत्वं दर्शयितुं प्रवृत्तानि। यत्सत्यमयं विच्छेदः तज्जातेः तत्कालस्य च अवस्थाविशेषमनुरुध्य प्रवृत्तः। तस्य कृतिषु प्रकृतेः सौन्दर्यं सर्वात्मना दूरीकृतमिति न वक्तुं शक्यते। परन्तु मानवजीवितस्य कथं प्रकृत्या सह सम्बन्धः सम्पादनीय इत्येतत् तत्त्वं ज्ञातुं न स प्रबभूव। Wordsworth, Shelley-प्रभृतिषु अनन्तरभवेषु कविषु अन्यादृशमेव मनोऽभिनिवेशं पश्यामः। अयं च विपर्यासः भारतवर्षीयस्य वेदान्तशास्त्रस्य नूत्नतयोपलम्भेन सञ्जातः। भारतीयं खलु वेदान्तशास्त्रं शर्मण्यदेशीयानां हृदयमनुप्रविश्य अखण्डमेव यूरोपखण्डमुद्बोध्य तत्रत्यानां चेतोवृत्ति-मन्यथयामास।

Milton-कवेः Paradise Lost - इत्यस्मिन् काव्ये मानवस्या-नन्दलोकोद्यानवासः वर्ण्यते। तस्योद्देशस्तावत् मानवजीवितस्य प्रकृत्या सह सम्बन्धेन पारमार्थिकस्य महत्त्वस्य प्रतिपादनाय अवकाशदानमेव प्रतिभाति। कविर्यद्यपि तस्योद्यानस्य शोभां वर्णयति, यद्यपि तत्र प्राणिनां परस्परं स्नेहेन शान्त्या च वर्तनं प्रदर्शयति तथापि तेषां मानवस्य च मिथः पारमार्थिकं सम्बन्धं न प्रतिपादयति। मानवस्य सुखोपभोगाय ते सृष्टाः। तस्मान्मानवस्तेषां

स्वामी नियन्ता च। अत्र सनातनयोः स्त्रीपुंसयोः सातिशयः परस्परानुरागः तस्येतरस्यां सृष्टौ सम्प्लवो वा यथा कुमारसम्भवशाकुन्तलयोर्दृश्यते तथा न कुत्राप्यनुवर्ण्यते। स्वर्गायमाणे वनैकान्ते प्राथमिकौ स्त्रीपुंसौ न्यवसताम्—

मृगाः पतत्रिणो वापि कीटा वा कृमयोऽपि वा।
न जातु प्राविशंस्तत्र तादृक् तेषां जनाद्भयम्॥

भारतदेशः मानवस्य सर्वोत्कृष्टतां निराकरोतीति न मन्तव्यम्। भारतदेशानुसारेणोत्कर्षो नाम अनुकम्पायाः प्रदर्शनेन सम्भवति न तु विभिन्नतया दूरावस्थानेन।

४

यत्र यत्र शोभातिशयः प्रकृतेः सौन्दर्यं च प्रतिभासते स सर्वोऽपि देशः पावनत्वेन यात्राक्षेत्रत्वेन च परिगण्यते भारतदेशेन। एते प्रदेशाः कृषियोग्यत्वेन वासयोग्यत्वेन वा न जनानां चित्तमाचकर्षुः। अत्र मानवः प्रकृतिं न स्वापेक्षितवस्तुप्रदानक्षमत्वेन किन्तु स्वस्मात् विशिष्टस्यात्मनः तत्त्वज्ञानसम्पादनक्षमत्वेन समीक्षते। हिमालयो विन्ध्यश्च भारतवर्षस्य पावनौ पर्वतौ। तस्य महत्यो नद्यः पवित्राः। मानसं सरः गङ्गायमुनयोः सम्भेदश्च पावनौ। भारतदेशः महाप्रकृतेः अनुरागेण पूजया च प्रसिता बभूव, यया खलु स्वात्मजाः परिवृताः, यस्याः प्रकाशस्तेषां नयनान्यानन्देन पूरयति, यस्याः सलिलं तान् पावयति, यस्याः भोज्यवस्तु तेषां प्राणान् धारयति, यस्याः महती माया गीतरूपेण भगवतस्तत्त्वं प्रकटयति, यस्याः गन्धो वर्णश्च जनानां प्रबोधं जनयति। भारतदेशः पूजया ज्ञानयोगेन च निखिलं जगदजैषीत् तेनाकाङ्क्षिता स्वातन्त्र्यबुद्धिरपि तदीयज्ञानयोगनिबन्धनैव।

अचिरेण प्रवृत्तायां मम यूरोपखण्डयात्रायां अस्माकं महानौका एडन्देशात् प्रस्थाय द्वयोः खण्डयोरन्तराले समुद्रे व्यचालीत्। अस्माकं दक्षिणपार्श्वे

आरबदेशस्य रक्तवर्णा वन्ध्याश्च शिलाः, वामपार्श्वे ईजिप्तदेशस्य उज्ज्वलाः सिकताश्च व्यलोवयन्त। तौ द्वौ तीरप्रदेशौ परस्परस्मै द्रुह्यन्तौ क्रूरैः दृष्टिशतैः परस्परं पश्यन्तौ, समुद्रेण स्वोदरादुत्पन्नौ सास्रेणानुनयेन पृथक्कृत्य स्थापितौ भ्रातराविव मया अदर्शिषाताम्।

महती शान्ततायाः प्रसृतिः वामदक्षिणयोः उभयोरपि पार्श्वयोरदृश्यत। परन्तु तावुभावपि चरित्रसम्बन्धिनो नाटकद्वयस्य अभिनयनं मामबोधयताम्। ईजिप्तदेशेऽभिवृद्धः रसभावैः, जीवितप्रकाशैः, चित्रैः सालभञ्जिकाभिः, देवागारैः, उत्सवैश्च सुषमितो नागरिकः परिष्कारः तस्मिन् देशे बह्वीः शताब्दीरन्ववर्तत। तस्य देशस्य अधिदेवता काचन नदी। सा च तस्य देशस्य मध्यभागमलङ्कुर्वाणा तीरद्वयेऽपि मानवानां जीवितस्योत्सवं सम्पादयति। अत्रत्यो जनः स्वस्य इतरेषां च मध्ये न सीमानं कल्पयति।

रक्तसागरस्य अन्यस्मिन् पार्श्वे आरबदेशे यो नागरिकः परिष्कारः प्रवृद्धः स ईजिप्तदेशीयस्य विरुद्धस्वभावः आसीत्। तत्र मानवः प्रतिकूलैः असंस्कृतैश्च वस्तुभिः परिगतः सर्वतोऽन्यस्मात् विभिन्नमात्मानमज्ञासीत्। तस्याः जनताया ईश्वरोऽपि मात्सर्यग्रस्तत्वेन कल्पितः। अतस्तत्रत्यो जनः स्वभावतः स्वयं पृथग्भूते पथि रमते स्म। सा च भावना तस्मिन् कलहशीलतामुत्पाद्य तत्रत्यं जनं विविधान् देशानद्रावयत्। इदं परिष्कारद्वयं मानवस्वभावस्य प्रधानभूतं रूपद्वयमदर्शयत्। तत्रैकः परपरिभवरूपः, अपरः परानुसरणरूपः। तयोर्द्वयोरपि सत्यता प्रयोजनं चास्ति मनुष्यलोके।

द्वयोः प्रधानभूतयोः महर्ष्योः स्वभावभेदः अस्माकं पुराणेषु प्रतिपाद्यते। तयोरेको वसिष्ठः अपरश्च विश्वामित्रः। तौ द्वावपि महान्तौ। परन्तु तयोः प्रेक्षा भिन्नरूपा। तयोरुभयोः कलहः प्रवृत्तः। विश्वामित्रः प्रभावमैहत। तेन स हतश्चासीत्। परन्तु तेन प्रभावेण स तीव्रमुपहतोऽभूत्। अथापि तस्य पीडा नाशश्च न तस्य आत्मनः शोभामनाशयत्। यतः स तदुपरिगतः क्षमाशील आसीत्। अस्माकं महावीरो रामचन्द्रः अन्तः-

शान्तिजननीं पूर्णताकरीं च ज्ञानविद्यां वसिष्ठादध्यैत। समरविद्यां विश्वामित्रादग्रहीत्। विश्वामित्रो हि तं राक्षसवधाय न्ययुङ्क्त, अधर्षणीयानि शस्त्राणि च तस्मै ददौ।

द्वाविमौ महर्षी परिष्कारस्य रूपद्वयमात्मनि प्रकाशयतः। अपि नामैतत् सत्यं स्यात् यदेतावुभौ मिथः सन्धातुमशक्यौ? तथा चेत् अपि मनुष्यलोके कदापि शान्तिः परस्परोपकारिता च प्रभायात। आकर्षणरूपस्य प्रतिरोधनरूपस्य च परस्परविरुद्धस्वभावस्य शक्तिद्वयस्य सन्धानमेव यत्नतः कार्या सृष्टिः। यदा ते शक्ती हस्तग्राहं सख्यं कुरुतः तदा अग्निः समरश्च स्मितकुसुमत्वेन विहगगानत्वेन च परिणंस्यतः। यदा तयोरन्यतराशक्तिर्जयिनी भवति अपरा च पराजीयते तदा निःस्नेहता वा वधहेतुः स्फोटनं वा जायते।

मानुष्यकं चिरकालादारभ्य ज्ञानोद्भासितस्य जीवलोकस्य सृष्टौ व्यग्र आसीत। तस्य प्रेक्षा शिक्षणं साहित्यं कला गुरूणामुपदेशः आत्मसंयमश्च सर्वं तदेव फलमुद्दिश्य प्रावर्तिष्ट। परन्तु अद्य यावत् तयोः शक्त्योः भिन्नेन पथा प्रवर्तमानयोः समरसत्वापादनं न मानुष्यके परिष्कारमार्गे सम्पूर्णतया कर्तुं पारितम्। एतादृशस्य समरसत्वस्य सम्पादकः भग्नोद्यमः प्रतिनिवर्तते। तथापि पुनः प्रतिनिवृत्य स्वकर्मारभते। उच्छेदस्य क्षतेश्च मध्ये स्वयं लोकसृष्टौ व्यग्रो भवति। तस्योत्साहस्य गतिर्मध्ये भग्ना पुनर्नवीकृता च भवति। किन्तु तत्त्वमेकं तस्य स्मरणपथं नेतव्यमस्ति, यथा विरुद्धस्वभावस्य शक्तिद्वयस्य एकीकरणेन विचित्रां सृष्टिं कुर्वाणा शक्तिः, न द्वेषः किन्तु स्वानन्दभूमोत्पन्नसंयमोपस्कृतः स्नेहः यस्य स्नेहस्य त्यागरूपो गुण आत्मन्येव विराजमानमनवधि महाधनं व्यञ्जयति॥

---

# वार्तागृहम्

अनुवादकः—श्रीध्यानेशनारायणचक्रवर्त्ती

## 'प्रस्तावना'*

### 'नान्दी'

यः काव्यैः मणि-माल्य - गीति - कमलैः सम्पूज्य वागीश्वरीं
लेभे विश्वजनार्घरत्नममलं कीर्त्ति-स्रजा मण्डितः ।
प्राच्यं पश्चिमकं प्रदीप्य किरणैर्योऽभूत् सतां वन्दितः
तं वन्दे "कविसार्वभौम"मनिशं नाथं रवीन्द्राह्वयम् ॥

रवीन्द्रनाथः कविसार्वभौमको
गिरांपतिर्यः कविकुञ्जकोकिलः ।
अपास्तमृत्युः सितकीर्तिमण्डनो
विभातु शश्वद्वसुधाप्रदीपनः ॥

सूत्रधारः—अहो, अद्य खलु कविसार्वभौमस्य रवीन्द्रनाथस्य जन्मशतवार्षिकी-मुपलक्ष्य तस्य 'डाकघर' इति नाटकस्य संस्कृतानुकल्पनं 'वार्तागृह'मस्माभिरभिनीयते ।

नटी—आर्य, कथं संस्कृतानुकल्पनं, केन वा तदनूदितम् ?

सूत्रधारः— या खलु शाश्वती भारतीया संस्कृतिः कविवर्येण वन्दिता नन्दिता

---

* प्रस्तावना अनुवादकेन कल्पिता ।

समादृता च, तस्याश्च चिरन्तनधात्रीयं सुरवाणी संस्कृतभाषा। अतः संस्कृतानुवादोऽस्माभिरभिनीयते।

तत्काव्यं मधुनिर्झरोपममिदं विद्वज्जनानन्ददं
चित्वा वै करुणा-रसैक-कथिकां भावोच्छलां मर्मणः।
चक्रे संस्कृतभाषयानुरचितं नाट्यानुवादं कवेः
श्रीविश्वेश्वरशर्मदीनतनयो ध्यानेशनारायणः॥

---

१

माधवदत्तः—विपदमापन्नोऽस्मि। यदा स नासीत्, तदा नासीदेव, कापि चिन्तापि नासीत्। अधुना कुत आगत्य स कक्षं मे पूरितवान्। गते तस्मिन् कक्षं मे न कदापि कक्षं स्यात्। भिषङ्महोदय, भवता किं मन्यते यद् अमुम्...............।

भिषक्—यदि अस्य भागधेये आयुर्वर्तते, तदायं सुचिरं जीवेत्। आयुर्वेदे तु यादृशं लिखितं, तेन तु...............।

माधवदत्तः—किमुच्यते भवता।

भिषक्—शास्त्रेप्युक्तं यद्—"पैत्तिकान्, सन्निपातजान् कफवातसमुद्भवान् ....।

माधवदत्तः—अलमलम्। तेषां श्लोकानां पुनरावृत्तिं मा कुरु। तेन भीतिर्मे नितरां वर्धते। अधुना, किं करणीयं तदेवोच्यताम्।

भिषक्—(नस्यं गृहीत्वा) अतीव सावधानमसौ रक्षितव्यः।

माधवदत्तः—सुष्ठूक्तम्। अपि तु कस्मिन्नु विषये सावधानेन भवितव्यं, तदेव स्थिरीकृत्य निर्दिश्य च ततो गम्यताम्।

भिषक्—तस्य बहिर्गमने न कदापि अनुमतिः प्रदेयेति मया प्रागेवोक्तम् ।

माधवदत्तः—असौ तु चञ्चलः किशोरः । गृहे तस्य अहर्निशम् अवरोधो भृशमायाससाध्यः ।

भिषक्—तदत्र नास्ति उपायान्तरम् । अस्य शरत्कालस्य रौद्रं वायुश्च उभयमेव बालकस्य विषतुल्यम् । यतः शास्त्रे उक्तम्....

माधवदत्तः—अलं श्लोकसमुद्गिरणेन । तिष्ठतु तावत् भवतः शास्त्रम् । तर्हि किमसौ गृहे सुनिश्चितमवरोद्धव्यः ? नास्ति अन्यः कोऽपि उपायः ?

भिषक्—नास्त्येव, यतः—"पवने तपने चैव—"

माधवदत्तः—भवतः तेन 'चैव' इत्यादिशब्देन मम किं भविष्यतीति उच्यताम् । तिष्ठतु तावत् प्रवचनम् । किं करणीयं तदेव निर्दिश्यताम् । सुकठोरं भवतो व्यवस्थापनम् । रोगस्य सकलानेव क्लेशान् असौ वराको तूष्णीमेव संसहते । अपि तु भवदुपदिष्टम् औषधं सेवमानस्यास्य कष्टं दृष्ट्वा वक्षो मे विदीर्यते ।

भिषक्—यादृशं कष्टस्य प्राबल्यं, तादृशमेव फलस्य प्राचुर्यम् । अतो महर्षिणा च्यवनेनोक्तम्—"भेषजं हितवाक्यञ्च तिक्तमाशु फलप्रदम् ।" दत्तमहोदय, अद्य तावत् प्रचलामि । (प्रस्थानम्)

(पितामहदेवस्य प्रवेशः)

माधवदत्तः—आं, पितामहः समागतः ? सर्वनाशः संघटितः ।

पितामहः—कथम् ? किमर्थं त्वं मत्तो बिभेषि ?

माधवदत्तः—त्वं हि किशोरान् उत्तेजितान् कर्त्तुं सुदक्षो नायकविशेषः ।

पितामहः—त्वं तु न कदापि किशोरः, तव गृहेऽपि नास्ति कोऽपि किशोरकः । तव उत्तेजनायाः वयोऽपि गतम् । अतः का ते चिन्ता ?

माधवदत्तः—गृहे तु आनीतः कश्चित् किशोरः।

पितामहः—कथमेतत् ?

माधवदत्तः—मम पत्नी तु कृतकपुत्रग्रहणार्थमुत्साहवती सञ्जाता।

पितामहः—चिरात् तन्मया श्रुतम्। त्वं तु कृतकं ग्रहीतुं न वाञ्छसि।

माधवदत्तः—इदं तु न ज्ञायते त्वया यद्—"कठोरेण आयासेन आर्जितो मयार्थः। अन्यस्य पुत्रः कुतोऽपि आगत्य मे आयासलब्धस्य वित्तस्य अपचयं करिष्यतीति चिन्तयतो मे मनः क्लिष्टमभूत। किन्तु बालकेऽस्मिन् किमपि प्रसक्तोऽस्मि।

पितामहः—तेन अस्य कृते व्ययं कुर्वता त्वया अर्थस्य सौभाग्यमिति मन्यते।

माधवदत्तः—आसीत् प्रागर्थोपार्जने व्यसनासक्तिरिव। तद् अकुर्वता मया स्वस्थं न स्थातुं शक्यम्। इदानीं तु उपार्जितं वित्तं सर्वमेवासौ प्राप्स्यतीति जानन् उपार्जने प्रभूतमानन्दमुपगच्छामि।

पितामहः—साधु साधु। किशोरोऽयं कुत्र सम्प्राप्तस्तत कथय।

माधवदत्तः—स हि मद्भार्यायाः ग्रामसम्पर्केण भ्रातुष्पुत्रः। आशैशवान्मातृहीनश्च। किञ्च कियद्दिनेभ्यः प्राक् तातस्तस्य पञ्चत्वमुपगतः।

पितामहः—अहह ! तर्हि अस्ति मे प्रयोजनं तेन।

माधवदत्तः—तस्य अस्मिन् क्षीणे शरीरे वातपित्तश्लेष्मादीनां समवेतभावेन यादृशः प्रकोपः सम्प्राप्तस्तेन तस्य जीवनाशा न दृश्यते इति भिषङ्महोदयेनोच्यते। केनाप्युपायेन शरदः आतपात् वाताच्च तं संरक्ष्य गृहरोधकरणमेव अधुना एकमात्र उपायः। किशोराणां गृहाद्बहिरानयनमेव तव वृद्धस्य लीला। अतस्त्वत्तो बिभेमि।

पितामहः—नानृतं त्वयोक्तम्। भृशं भीषणं सञ्जातोऽहं शरदः आतपवत् वायुतुल्यश्च। अपि तु भ्रातः, गृहरोधकरणार्थं क्रीडाऽपि मया

ज्ञायते। अधुना अपरं कार्यादिकं समाप्य आगमिष्यामि, तदनन्तरं तेन किशोरेण सह बन्धुत्वं स्थापयिष्यामि।

(अमलगुप्तस्य प्रवेशः।)

अमलः—तात!

माधवदत्तः—किं कथयितुमिच्छसि वत्स? कथय अमल!

अमलः—किमहम् अङ्गणमपि गन्तुं न शक्नोमि?

माधवदत्तः—नहि वत्स।

अमलः—अमुत्र यत्रार्या पितृष्वसा यन्त्रेण शस्यपेषणं करोति, पश्य यत्र शस्यचूर्णानि हस्तद्वयेन संगृह्य लाङ्गूलोपरि देहभारं समर्प्य उपविश्य च काष्ठबिडाली "कुट्टुस्, कुट्टुस्" इति शब्दं कृत्वा खादति—नाहं तत्र गन्तुमर्हामि?

माधवदत्तः—न हि वत्स।

अमलः—यद्यहं काष्ठबिडाली भूयां, तदैतद् उत्तमम् अभविष्यत्। तात, कथं न मे बहिर्गन्तव्यम्?

माधवदत्तः—वत्स, बहिर्गमने तव पीडा भविष्यतीति भिषङ्महोदयेनोक्तम्।

अमलः—तत्रभवता तत्कथं ज्ञातम्?

माधवदत्तः—अमल, किमुच्यते त्वया? भिषक् न जानाति? तेन तु सुबृहद्ग्रन्थादिकं पठितम्।

अमलः—पुस्तकपठनेन किं सर्वमेव ज्ञायते?

माधवदत्तः—अहो, किं तदपि त्वया न ज्ञायते?

अमलः—(दीर्घं निश्वस्य) मया हि पुस्तकादिकं किमपि न पठितम्; अतो मया न ज्ञायते।

माधवदत्तः—पश्य, महान्तः पण्डिताः सर्वे एव त्वत्सदृशाः। ते गृहान्न निर्गच्छन्ति।

अमलः—न बहिर्गच्छन्ति ।

माधवदत्तः—नहि, विचारय, कदा नु बहिर्गच्छन्ति ? ते तु केवलं समासीनाः पुस्तकानि पठन्ति । अन्यत्र कुत्रापि नापतति तेषां दृष्टिः । वत्स अमल, सम्प्राप्ते वयसि त्वमपि पण्डितो भविष्यसि । उपोपविष्टः एतादृशान् विशालान् ग्रन्थान् पठिष्यसि । सर्वे च तद्दृष्ट्वा विस्मयं गमिष्यन्ति ।

अमलः—तात, तव चरणयोः पतामि । नाहं पण्डितो भविष्यामि । नाहं पण्डितो भवितुमिच्छामि ।

माधवदत्तः—अमल, अर्थहीनं तव वचनम् । पण्डितो यद्यहं, तदा रक्षितोऽभविष्यम् ।

अमलः—यानि कानिचिद् इतस्ततो विद्यन्ते, तानि सर्वाण्येवाहं द्रक्ष्यामि । सर्वं पश्यन् विहरिष्यामि च ।

माधवदत्तः—श्रूयतां वारमेकम् । किं द्रक्ष्यसि ? दर्शनयोग्यानि वा कति विद्यन्ते ?

अमलः—अस्माकं गवाक्षान्तिकात् विदूरे यः खलु शैलो दृश्यते, तमुल्लंघ्य दूरं गन्तुं प्रबलो मे अभिलाषः ।

माधवदत्तः—उन्मत्तस्येव तव वचनम् । किमपि कार्यं प्रयोजनं वा नास्ति । अकस्मान्निष्कारणं शैलमुल्लंघ्य, प्रचलामीति निरर्थकमेतद् वचनम् । पर्वतो यतः प्राकारवत् समुन्नतस्तिष्ठति, अतस्तस्योल्लंघनं निषिद्धमेव इत्यर्थो ग्रहणीयः । अन्यथा एतादृशानि विशालानि प्रस्तराणि एकीकृत्य ईदृशेन व्यापारेण किं प्रयोजनमासीत् ।

अमलः—तात, किं त्वया मन्यते असौ वारयतीति ? अहं तु मन्ये—पृथिवी वाक्यं वाचयितुं न शक्नोति, अतस्तेनोपायेन सुनीले गगने हस्तमुत्क्षिप्य माम् आह्वयतीति । ये खलु विदूरवर्तिनो गृहाभ्यन्तरमधि-

वसन्ति, तेऽपि मध्याह्ने विविक्तं गवाक्षपार्श्वमधितिष्ठन्तः .... तमाह्वानमाकर्णयन्ति। पण्डिताः किं तत्र शृण्वन्ति ?

माधवदत्तः—ते तु न कदापि त्वत्सदृशाः मत्ताः। ते हि श्रोतुमपि न वाञ्छन्ति।

अमलः—अहं तु गतदिवसे मत्सदृशं मत्तमेकं दृष्टवान्।

माधवदत्तः—किंनु सत्यमेतत् ? उच्यतां, शृणोमि तत्।

अमलः—तस्य स्कन्धदेशे एका वेणुयष्टिः। यष्ट्यग्रे संलग्ना चैका पोटलिका। वामहस्ते च तस्य एको घटः। पुरातनं ग्राम्यपादुकायुगलं परिधाय अनेन प्रान्तरपथेनासौ शैलाभिमुखं गच्छति स्म। अहं तमाहूय पृष्टवान्-भोः कुत्र त्वया गम्यते ? तेनोक्तं—नाहं जानामि। नास्ति मे गन्तव्यलक्ष्यो निर्णयः। मया पृष्टं कथं गच्छसीति। तेनोक्तं-कार्यानुसन्धानार्थं गम्यते इति। भवतु, तात, कार्यं किम् अन्वेषणीयम् ?

माधवदत्तः—अन्वेषणीयमेव। बहवः कार्यम् अन्विष्यन्तो भ्रमन्ति।

अमलः—उत्तमम्। अहमपि तथैव कार्यमन्विष्य भ्रमिष्यामि।

माधवदत्तः—यदि अन्विष्य किमपि न प्राप्यते ?

अमलः—अन्वेषणेन यदि किमपि न प्राप्यते, तदा तु पुनरेव अन्वेषयिष्यामि। ततश्च श्रूयताम्। असौ ग्राम्यपादुकाधारी जनोऽपक्रान्तः। अहं तु द्वारं निकषा दण्डायमानस्तं निरीक्षमाणः स्थितः। यत्र तु उदुम्बरवृक्षस्य तले निर्झरिणी प्रवहति, तत्रैवासौ भूमौ यष्टिं संस्थाप्य निर्झरिणीजलेन स्वैरं स्वैरं पादौ प्रक्षालितवान्। अनन्तरं पोटलिकामुन्मुच्य सक्तुं संगृह्य जलेन संमिश्र्य भक्षयितुमारब्धवान्। भोजने परिसमाप्ते पोटलिकां संबध्य-स्कन्धमारोपितवान्। पादयोर्वसनं संकोच्य तस्य निर्झरस्य अन्तःप्रविश्य विभज्य बाहुमिव

उत्तीर्य गतवान् । तेनाहम् आर्यां पितृष्वसारम् उक्तवान् यत् निर्झरसमीपम् गत्वा एकदा सक्तुं भक्षयिष्यामीति ।

माधवदत्तः—तत्ते पितृष्वसा किमुक्तवती ?

अमलः—तयोक्त - त्वं सुस्थो भव । तदनन्तरं त्वां तन्निर्झरान्तिकं नीत्वा सक्तुं भोजयिष्यामीति । अहो कदाहं सुस्थो भविष्यामि ?

माधवदत्तः—वत्स, नास्त्यत्र विलम्बः ।

अमलः—विलम्बो नास्ति ? साधु साधु । तर्हि निरामय एवाहं प्रचलिष्यामि ।

माधवदत्तः—कुत्र गमिष्यसि ?

अमलः—वक्रगतीनां निर्झराणां जले पादौ निमज्जयन् पारमुत्तीर्य प्रचलिष्यामि । मध्याह्ने सर्वे यदा द्वारं निरुध्य गृहे शयानाः स्थास्यन्ति, तदाहं केवलं कर्मानुसन्धानं कुर्वन् भ्रामं भ्रामं दूरदूरान्तरं गमिष्यामि ।

माधवदत्तः—भवतु, उत्तमम् । प्रथमतस्तावत् सुस्थो भव, अनन्तरं त्वं— ।

अमलः—अनन्तरं मां पाण्डित्यार्जने मा उपदिशतु, तात ।

माधवदत्तः—तर्हि उच्यतां, किं ते मनसि कल्पितम् ?

अमलः—अधुना किमपि मे मनसि नायाति । भवतु, विचिन्त्याहं वक्ष्यामि ।

माधवदत्तः—त्वं तु इत्थं यं कमपि वैदेशिकमाहूय तेन सह आलपनं मा कुरु ।

अमलः—वैदेशिको मह्यं भृशं रोचते ।

माधवदत्तः—यदि त्वां धृत्वा दूरं नयति ?

अमलः—तत्तु उत्तमं भवेत् । मां पुनः कोऽपि धृत्वा न नयति । सर्व एवमासने निवेश्य निरोधयन्ति ।

माधवदत्तः—मम कार्यान्तरमस्ति । तेन मया गम्यते । किन्तु, शृणु वत्स । कदापि बहिर्मा गच्छ ।

अमलः—नाहम् गमिष्यामि । अपि तु तात, पथपार्श्वस्थम् एतदेव कक्षमह अधितिष्ठामि ।

२

दधिविक्रेता—दधि ! दधि ! उत्तमं दधि !

अमलः—दधिविक्रेतः, दधिविक्रेतः ! भो ! भो ! घोषः ।

दधिविक्रेता—कथमाह्वयसि ? किं दधि क्रेष्यसि ?

अमलः—कथं क्रेष्यामि ? मम हि अर्थो नास्ति ।

दधिविक्रेता—कीदृशः किशोरस्त्वम् । यदि न क्रेष्यसि, तदा कथं मां विलम्बयसि ?

अमलः—यदि त्वया साकं गमने मे सामर्थ्यमभविष्यत् , तदाऽहम् अगमिष्यम् ।

दधिविक्रेता—मया साकम् ?

अमलः—नूनम् । त्वं तु बहुदूरादाक्रोशं कुर्वन् चलितोऽसि । त्वत्कण्ठ-स्वरमाकर्ण्य मनो मे दूयते ।

दधिविक्रेता—( दधिभाण्डदण्डं भूमौ संरक्ष्य ) वत्स ! त्वम् अत्र उपविश्य किं करोषि ?

अमलः—बहिर्गमने भिषजा वारितोऽहम् । अतोऽहमखिलं दिवसमत्रैव उपविश्य नयामि ।

दधिविक्रेता—अहो, वत्स, किं ते जातम् ?

अमलः—नाहं जानामि । मया तु किमपि न पठितं अतो मया न ज्ञायते किं मे भूतमिति । दधिविक्रेतः, कुतस्त्वया आगम्यते ?

दधिविक्रेता—अस्माकं ग्रामादेव ।

अमलः—युष्माकं ग्रामः ? किमतीव दूरो युष्माकं ग्रामः ?

दधिविक्रेता — पञ्चचूडशैलस्य मूलत एवास्माकं ग्रामः। स हि श्यामलीनद्याः पार्श्वत एव।

अमलः—पञ्चचूडशैलः, श्यामली नदी! मन्यते मया युष्माकम् ग्रामः प्राग् दृष्ट इव। किन्तु कदा दृष्टस्तत्तु स्मर्तुं न शक्नोमि।

दधिविक्रेता—अपि दृष्टस्त्वया? तद्धि शैलमूलं कदापि त्वया प्राप्तम्?

अमलः—नहि, न मया कदापि तत्र गतम्। किन्तु, मन्यते, मया तु दृष्ट एव। बहुकालप्राचीनाः ये खलु विशालाः वृक्षास्तेषामेव छायायां युष्माकं ग्रामः — कश्चित् लोहितवर्णं पन्थानमभित एव? न किम्?

दधिविक्रेता — यथार्थमुक्तं त्वया, वत्स।

अमलः—तत्र शैलसानुदेशे गावो विचरन्ति।

दधिविक्रेता—किमाश्चर्यम्। सुष्ठूक्तम्। अस्माकं ग्रामे गावो विचरन्ति, नूनं विचरन्त्येव।

अमलः—रक्ताम्बराश्च ललना नद्या जलमुत्तोल्य शिरसि कलशान् विधाय प्रचलन्ति।

दधिविक्रेता—साधु, साधु। यथार्थमेवोक्तम्। अस्माकं घोषपल्लीनिवासिन्यो रमण्यः नद्या जलम् उद्धृत्य नयन्तीति सत्यमेव। तास्तु सर्वा एव लोहितनिचोलं परिदधत इति न सत्यम्। यातु वत्स, नूनं कदापि त्वया तत्र भ्रमणार्थं गतमिति मन्ये।

अमलः—दधिविक्रेतः, सत्यमेव मया कथ्यते, मया कदापि तत्र न गतम्। किन्तु यदा भिषक् मे बहिर्गमनम् उपदेक्ष्यति, तदा त्वं मां युष्मद्-ग्रामं नेष्यसि?

दधिविक्रेता—नेष्यामि वत्स, नूनं त्वां नेष्यामि।

अमलः—त्वत्सदृशं दधिविक्रयं मां शिक्षय। त्वत्सदृशं भाण्डदण्डं स्कन्धे निधाय दूरपथेन गमनम् शिक्षय।

दधिविक्रेता—अहो कष्टम्, कथं दधिविक्रये तव अभिलाषः ? विशालान् ग्रन्थान् अधीत्य त्वं पण्डितो भव।

अमलः—नहि, नहि, नाहं कदापि पण्डितो भविष्यामि। युष्माकं लोहित-रागरञ्जितं पन्थानमभितः प्राचीनवटच्छायासु या खलु घोषपल्ली, तत्पल्लीतो दधि समानीय दूरदूरान्तरे ग्रामाद् ग्रामान्तरे च दधि विक्रीणन् परिभ्रमिष्यामि। येन कण्ठेन त्वम् उच्चारयसि तत्स्वरालापनं मां शिक्षय - दधि, दधि - दधि उत्तमं दधीति।

दधिविक्रेता—अहो मे दग्धं ललाटम्। स्वरोच्चयः किं शिक्षणीयः ?

अमलः—नहि, नहि तच्छ्रवणे मे प्रीतिरस्ति। आकाशस्य विदूरप्रान्तात्, विहगकाकलीमाकर्णयतो मनो मे यथा उदासीनं भवति, तथा अमुष्मात् पथसंयोगस्थलाद् अमुं वृक्षवीथिकामतिक्रम्य यदा तव आह्वानमागतं, तदा मनसि किमपि अपूर्वं भावोद्दीपनं जातम्। अधुना नाहं तत्प्रकाशयितुं क्षमोऽस्मि।

दधिविक्रेता—वत्स, दधिभाण्डमेकं गृहाण।

अमलः—मम तु अर्थो नास्ति।

दधिविक्रेता—न, न, न, न, नहि—अलमर्थेन। यदि त्वं मम दधि पिबसि, तदाहमतीव आनन्दितो भविष्यामि।

अमलः—किं भवतो महान् विलम्बस्संघटितः ?

दधिविक्रेता—नहि, नहि। दधिविक्रये कीदृशं सौख्यं, तन्मया त्वत्सकाशादधिगतम्।

[प्रस्थानम्]

अमलः—(गीतस्वरेण) दधि, दधि, दधि, उत्तमदधि। तद्धि पञ्चचूडशैल-तटे श्यामलीनदीतीरवर्तिघोषगृहाणां दधि। ते हि प्रभातकाले वृक्षतले गां दुहन्ति, सायं घोषललना दधिरचनां कुर्वन्ति-तद् दधि, तद्धि दधि-दधि, दधि, दधि-द-अ-धि-उत्तमदधि।

एष प्रहरी पथि विचरति। भोः प्रहरिन्, प्रहरिन्! इहागत्य श्रूयताम्। प्रहरिन्, भोः प्रहरिन्!

(प्रहरी प्रविशति)

प्रहरी—एवं कथमुच्चैः शब्दापयसि? नास्ति ते मत्सकाशाद् भयम्?

अमलः—कथं? कथं त्वत्तो बिभेमि?

प्रहरी—यद्यहं त्वां धृत्वा नयामि?

अमलः—कुत्र मां नेष्यसि? किं महति व्यवधाने - अमुं गिरिशिखरम् अतिक्रम्य मां नेष्यसि?

प्रहरी—यदि त्वां राजसमीपं नयामि?

अमलः—राजसमीपम्? नय माम्। किन्तु चिकित्सकेनाहं बहिर्गमनाद् वारितः। अतः कोऽपि मामन्यत्र बलान्नेतुं न शक्ष्यति। मया अत्रैव केवलं रात्रिन्दिवम् अवस्थातव्यम्।

प्रहरी—चिकित्सकेन वारितोऽसि? अहो तदेव सत्यम्। मुखमण्डलं तव पाण्डुरं सञ्जातम्। नयनप्रान्ते दृश्यते कृष्णा रेखा। करयोश्च शिरागुच्छं प्रकाशं गच्छति।

अमलः—भो प्रहरिन्, किं त्वं घण्टां न वादयिष्यसि-?

प्रहरी—अधुनापि न जातः समयः।

अमलः—कोऽपि वदति, कालः अतिक्रामतीति। अन्ये कथयन्ति समयो नागत इति। यातु, त्वं घण्टां वादयसि चेत्तदा हि समयो भवेत्।

प्रहरी—कथं तद् भवेत्? समये समागते हि यथाकालं घण्टां वादयामि।

अमलः—मनोहारिणी तव घण्टा। श्रुतिमधुरो हि तव घण्टाध्वनिर्मम आनन्दं जनयति। द्विप्रहरे सर्वेषां भोजने परिसमाप्ते यदा हि पूजनीयः पितृष्वसृपतिः कार्यप्रसंगेन बहिर्गच्छति, आर्या च पितृष्वसा रामायणं

पठन्ती निद्रामग्ना भवति, अस्माभिः पालितः सारमेयश्च अंगनप्रान्तच्छायायां मुखलाङ्गूलमेकीकृत्य सुप्तिं गच्छति, तदैव तव घण्टा निनदति टं, टं टमिति। तत्कथं ते घण्टा ध्वनति ?

प्रहरी—घण्टा सर्वानेवं निर्दिशति—कालः कमपि नापेक्षते, अविरामं कालो गच्छतीति।

अमलः—कालो गच्छति ? कुत्रासौ गच्छति ? कं देशमभिगच्छति ?

प्रहरी—भद्र, कोऽपि तन्न जानाति।

अमलः—किं तत्स्थानं न केनापि दृष्टम् ? कालेन सार्द्धम् अहमपि तमदृष्टपूर्वं दूरदेशं गन्तुं नितराम् अभिलषामि।

प्रहरी—वत्स, स देशः सर्वैरेव नूनं गन्तव्यः।

अमलः—किं मयापि गन्तव्यः ?

प्रहरी—नूनमेव।

अमलः—किन्तु, भिषङ्महोदयेन बहिर्गमने वारितोऽहम्।

प्रहरी—कदा हि भिषग्वरः स्वयं करे धृत्वा नयेत्।

अमलः—नहि नहि, न जानासि तं भिषजम्। स केवलं धृत्वैव रुणद्धि।

प्रहरी—तस्मादपि निपुणतरो यश्चिकित्सकः स हि मोचयति।

अमलः—स मे निपुणश्चिकित्सकः कदा नु आगमिष्यति ? उपविश्य विलम्बनं मे नाधुना रोचते।

प्रहरी—शान्तं पापम्। वत्स, एतादृशं न वक्तव्यम्।

अमलः—नहि अहं तु उपविष्ट एव तिष्ठामि। आसनान्न कदापि मया बहिर्गम्यते। किन्तु घण्टा ते निनदति टं, टं टमिति, तदाकर्णयतो मनो मे अवसीदति। यातु, प्रहरिन्।

प्रहरी—तात।

अमलः—अमुत्र पथः पुरतो विशाले भवनशीर्षे समुड्डीना पताका, यत्र च जनाः निरन्तरमागच्छन्ति निष्क्रामन्ति च, तत्र किं घटितम् ?

प्रहरी—तत्र नूतनं वार्तागृहं प्रतिष्ठितम् ।

अमलः—वार्तागृहम् ? कस्येदम् ?

प्रहरी—वार्तागृहमपरस्य कस्य भवति ? एतद्धि राज्ञ एव । बालकोऽयं नूनं कौतुकमुद्दीपयति ।

अमलः—राज्ञो वार्तागृहे राजसकाशं किं सर्वाणि पत्राणि आगच्छन्ति ?

प्रहरी—नूनमागच्छन्ति । पश्य एकदा तवापि नामाङ्कितं पत्रमागमिष्यति ।

अमलः—किं ममापि नाम्ना पत्रमागमिष्यति ? अहं तु किशोरमात्रः ।

प्रहरी—किशोरमुद्दिश्य राजा ईदृशं क्षुद्रं क्षुद्रं पत्रं लिखति ।

अमलः—तद्धि मे प्रीतिकरं भविष्यति । कदा नु अहं पत्रं प्राप्स्यामि ? मामपि उद्दिश्य तत्रभवान् पत्रं लेखिष्यतीति कथं त्वं जानासि ।

प्रहरी—यदि तन्नाभविष्यत्, तदा तव उन्मुक्तगवाक्षस्य पुरत एव ईदृशीं विशालां हेमाभां पताकामुद्धूय तत्रभवता कथं वार्तागृहं प्रतिष्ठितम् ? [ स्वगतम् ] इमं किशोरं प्रति मे प्रीतिः सञ्जायते ।

अमलः—भवतु, राजसकाशात् समागते मे पत्रे, कोऽपि तदानीय मह्यं प्रदास्यति ?

प्रहरी—राज्ञस्तु वर्तन्ते बहवो वार्तावाहकाः । सुवर्णनिर्मितं सुगोलमभिज्ञानं वक्षसि सन्धार्य ते विचरन्तीति किं त्वया न दृष्टम् ?

अमलः—कुत्र ते विचरन्ति ?

प्रहरी—गृहे गृहे, देशे देशे ।

( स्वगतम् ) अस्य प्रश्नश्रवणे हास्यं समुत्पद्येत ।

अमलः—तर्हि-परिणते वयसि अहं राज्ञः वार्तावाहको भविष्यामि ।

प्रहरी—हा-हा-हा-हा। वार्तावाहकः। सुमहत् तस्य कार्यम्। रौद्रे, वर्षणे, दीनानां धनिनां च सर्वेषामेव गृहे पत्रं प्रापयतो विचरणम्! तत्तु कार्यम् आयासकरम्।

अमलः—कथं त्वं हससि? तदेव कार्यं मे सर्वाधिकं रोचते। नहि, नहि, त्वत्कार्यमपि अतीव सुन्दरम्-मध्याह्ने यदा रौद्रमतीव ज्वालामयं भवति तदा टं, टं, टमिति घण्टा ध्वनति पुनः कस्याञ्चिद् रात्रौ शय्यायाम् अकस्मात् जागरितः पश्यामि, प्रदीपो निर्वाणमाप्तः बहिर्देशे च तदा घनान्धकारे घण्टा ध्वनति टं टं टमिति।

प्रहरी—अरे। पश्य, असौ मण्डलपतिरागच्छति - तदहमधुना पलायिष्ये। यतस्त्वया सह आलपनं मे दृष्ट्वा स मां विपदि निपातयिष्यति।

अमलः—कुत्र मण्डलपतिः, कुत्र कुत्रासौ?

प्रहरी—अमुत्र, विदूरे तिष्ठति। मस्तके तस्य तालपत्रनिर्मितं छत्रमेकम्।

अमलः—किं स राज्ञा मण्डलपतिपदे नियुक्तः?

प्रहरी—नहि, स स्वयमेव मण्डलपतिरिव आचरति। किञ्च यस्तस्मै मानं प्रदातुं नेच्छति, तेन सह अहर्निशम् ईदृशं स विवदति यत् सर्व एव तस्मात् बिभेति। केवलं सर्वैः सह वैरमाचर्य स स्वकार्यं साधयति। यातु, अद्य तावत् गच्छामि, यतो अद्य मे कार्यहानिः सञ्जायते। अहं श्वःप्रभाते पुनरागत्य निखिलं नगरसन्देशं त्वां श्रावयिष्यामि।

(प्रस्थानम्)

अमलः—राज्ञः सकाशात् यदि प्रत्यहम् एकैकं पत्रं प्राप्नोमि, तदैतद् उत्तमं भवेत्। एतद् गवाक्षसमीपे समासीनः पठिष्यामि।

किन्तु नाहं शक्नोमि पठितुम्। को मां पाठयिष्यति? पितृष्वसा रामायणं पठति। किन्तु सा किं राजलिपिपठने समर्था? यदि कोऽपि पठितुं न शक्नोति, तदा पत्राणि सञ्चित्य रक्षिष्यामि, पश्चात् परिणते वयसि पठिष्यामि। किन्तु वार्त्तावाहको यदि मां न परिजानाति?

भो मण्डलपतिमहोदय, मण्डलपतिमहोदय, शृणु कथामेकाम्—

(मण्डलपतिः प्रविशति)

मण्डलपतिः—कोऽसौ! मार्गमध्ये को मां समाह्वयति! वानरकल्लोलोऽयं कुत आगतः?

अमलः—त्वं तु मण्डलपतिः। त्वं हि सर्वैरेव मान्यः।

मण्डलपतिः—(प्रसन्नः सन्) सत्यं, सत्यमेव मां सर्वः सम्मानयति। सर्वे हि मां नितरां सम्मानयन्ति।

अमलः—राज्ञो वार्तावाहकः किं तव वचनमनुतिष्ठति?

मण्डलपतिः—यदि मद्वचनं नानुपालयति, तदा स किं जीविष्यति? हुम्, राजादेशम् अपालयतस्तस्य का शक्तिः?

अमलः—ममैव नाम अमल इति वार्तावाहकस्त्वया विज्ञप्तव्यः कथितव्यश्च यदहम् एतद्गवाक्षसमीपे समासीनस्तिष्ठामीति।

मण्डलपतिः—उच्यतां, कथमेतद् विज्ञाप्यते?

अमलः—मम नाम्ना यदि पत्रमागच्छति?—

मण्डलपतिः—तव नाम्ना पत्रम्? कस्त्वां पत्रं लेखिष्यति?

अमलः—यदि राजा पत्रं लिखति, तदा—

मण्डलपतिः—हा हा, हा हा। नायं बालकः स्वाल्पाशः। हा हा, हा हा। राजा त्वां प्रति पत्रं लेखिष्यति? बाढं नूनं लेखिष्यति। यतस्त्वं तस्य परमो बान्धवः। कति दिनानि यावत् त्वया सह अदर्शनात् नरपतिः विशीर्णो भवतीति श्रूयते। नास्त्यतो विलम्बः। पत्रं तु अद्यैव श्वो वा आगमिष्यत्येव।

अमलः—मण्डलपते, कथं त्वमेवं कथयसि? किं त्वं मामभिक्रुध्यसि?

मण्डलपतिः—अहो त्वयि क्रुद्धो भविष्यामि। नैवं मे साहसम्। यतो राज्ञा सार्द्धं तव पत्रं प्रचलति।

[स्वगतम्] माधवदत्तस्य गर्वं पश्यामि। यतस्तेन सञ्चितं किञ्चिदर्थजातम् अतस्तस्य गृहे अधुना राज्ञां.... कथां विना नास्ति वार्तान्तरम्। अस्तु, तं समुचितं शिक्षयिष्यामि। तद् भोः बालक! यथा राजसकाशात् ते पत्रमागच्छति तथाहं करिष्यामि।

अमलः — नहि नहि, त्वया किमपि न करणीयम्।

मण्डलपतिः—कथं भोः? सन्देशं ते राजानमहं विज्ञापयिष्यामि। तदा तु अत्रभवान् विलम्बितुं न शक्ष्यति — युष्माकं सन्देशग्रहणार्थमधुनैव वार्ताहरं प्रेरयिष्यति! आश्चर्यं दूरारोहिणी खलु माधवदत्तस्य स्पर्धा—राजा सर्वं शृणोति चेत्, तस्य समुचिता शिक्षा भविष्यति।

(प्रस्थानम्)

अमलः—का त्वमयि नूपुरनिक्वणं कुर्वती प्रचलसि? क्षणं विलम्बस्व प्रियभगिनि!

[बालिका प्रविश्य]

बालिका—विलम्बने मे किं कार्यम्? वेला हि प्रचलति।

अमलः—विलम्बे नास्ति तव अभिलाषः। नास्ति ममापि अत्रोपविश्य कालक्षेपणे कापि इच्छा।

बालिका—उषःकालस्य तारा इव त्वं प्रतिभासि। उच्यतां तावत् किं ते भूतमिति?

अमलः—किं भूतमिति मया न ज्ञायते। भिषजैव बहिर्गमनाद् वारितोऽहम्।

बालिका—अहो, एवं चेद् बहिर्मा गच्छ, भिषगादेशः परिपालनीयः, चापल्यं च न प्रदर्शयितव्यम्, तेन जनास्त्वां दुष्ट इति वक्ष्यन्ति। बहिर्दिशि दृष्टिं निक्षिपतस्ते मनो व्याकुलं भवति, तदहम् अर्धोन्मुक्तं द्वारं ते पूर्णं रुणध्मि।

अमलः—मा, मा, मा रुन्धि—"निरुद्धं ममात्र अपरं सर्वम् · केवलम् एतदेव उन्मुक्तम् । उच्यतां, कासि त्वम्-नाहं त्वां जानामि ।

बालिका—'सुधा' इति मे नाम ।

अमलः—सुधा ?

सुधा—किं त्वया न ज्ञायते यदहमत्रत्यमालाकारिणीदुहितेति ?

अमलः—किं त्वया क्रियते ?

सुधा—पुष्पाण्यवचित्य पुष्पभाजनं सम्पूर्य माल्यं रचयामि । इदानीं कुसुमचयनार्थं चलामि ।

अमलः—पुष्पचयनाय गच्छसि ? एतदर्थमेव हृष्टं ते चरणयुगलम्, यावच्चलसि तावच्च नूपुरौ शब्दायेते "झम् झम् झम्" इति । यद्यहं त्वया सह गन्तुम् अशक्ष्यम्, तदा हि यत्र दृष्टिर्न गच्छति ततः समुच्चशाखातः कुसुमानि अवचित्य तुभ्यमहम् अदास्यम् ।

सुधा—अथ किम् । कुसुमसन्देशं त्वं मत्तः किमधिकं जानासि ?

अमलः—जानामि, भृशं खलु जानामि । सप्तसहोदरायाश्चम्पायाः कथामहं जानामि । यदि सर्वे मह्यं मुक्तिं ददति, तदाहं गन्तुं शक्नोमि निबिडगहनाभ्यन्तरे । यत्र मार्गो न दृश्यते, अत्रैवाहं प्रचलेयमिति मन्ये । सुकुमारशीर्णशाखायाः पुरोभागे, यत्र मनुयापक्षी उपोपविश्य दोलां करोति, तत्रैवाहं चम्पकरूपेण विकसितुं शक्नोमि । किं तर्हि त्वं मे पारुलनाम्नी अग्रजा भविष्यसि ?

सुधा—कीदृशी ते मतिः ? कथमहं पारुलाख्या ते अग्रजा भविष्यामि ? अहं तु शशिमालिन्याः कन्या सुधा । मया तु प्रतिदिनम् एतावन्ति माल्यानि विरच्यन्ते यद्यहं त्वमिव अत्रोपविश्य कालक्षेपणे समर्था अभविष्यम्, तदाभविष्यत् कीदृशो मे आनन्दसन्दोहः ।

अमलः—तदा तु निखिलं दिनं किमकरिष्यः ?

सुधा —ममास्ति वणिग्वधूपुत्तलिका, तस्याः विवाहमदास्यम्। ममास्ति पुसीति गृहपालिता बिडाली, तया सह, यातु, अधुना गच्छाम्यहम्, यतो अतिक्रामति वेला, विलम्बे सति पुष्पाणि न प्राप्स्यन्ते।

अमलः—मया साकमतः क्षणमधिकं कुरु सदालापम्। तेन मे पुलकः सञ्जायते।

सुधा—अथ किम्। चापल्यं मा कुरु। शिष्टो बालकः सन् स्थैर्यमवलम्ब्य अत्रैव तिष्ठ। अहमपि पुष्पचयनं समाप्य प्रत्यावर्तनपथे त्वया साकं सुधालापं कृत्वा प्रचलिष्यामि।

अमलः—पुनर्मह्यं पुष्पमेकं प्रदास्यसि ?

सुधा—मूल्येन विना कथं पुष्पं दास्यामि ? मूल्यं तु प्रदातव्यम्।

अमलः—परिणते वयसि मूल्यं दास्यामि। कर्मानुसन्धानार्थं तां स्रोतस्विनी-मुत्तीर्य गच्छन्नहं मूल्यं ते प्रदास्यामि।

सुधा—उदारः कल्पः।

अमलः—त्वं तावत् पुष्पाणि प्रचित्य आगमिष्यसि ?

सुधा—आगमिष्यामि।

अमलः—आगमिष्यसि ?

सुधा—आगमिष्यामि।

अमलः—न मां विस्मरिष्यसि ? अमल इति मे नाम तव स्मरणे स्थास्यति ?

सुधा—नाहं विस्मरिष्यामि। द्रक्ष्यसि, तव नाम मनसि मे स्थास्यतीति।

(प्रस्थानम्)

[किशोरसंघस्य प्रवेशः]

अमलः—भ्रातरः, युष्माभिः कुत्र गम्यते। वारमेकम् अत्रैव तिष्ठथ।

किशोराः—वयं क्रीडितुं चलामः।

अमलः—भ्रातरः, यूयं किंनामधेयां क्रीडां क्रीडिष्यथ ?

किशोराः—वयं हलकर्षणक्रीडाम् आचरिष्यामः ।

प्रथमः—(यष्टिं प्रदर्श्य) इदमस्माकं हलम् ।

द्वितीयः—आवां द्वौ वृषभौ भविष्यावः ।

अमलः—किमखिलं दिवसं क्रीडिष्यथ ?

किशोराः—नूनम्-अखिलमेव दि-व-स-म् ।

अमलः—अनन्तरं सन्ध्यायां नदीतीरेण गृहं प्रत्यागमिष्यथ ?

किशोराः—बाढं, सायमेव प्रत्यावर्तनं कुर्मः ।

अमलः—मम कक्षपुरोवर्तिना पथैव प्रत्यागन्तव्यम्, प्रियसुहृदः ।

किशोराः—त्वमपि बहिरागम्यतां, क्रीडनार्थमागच्छ ।

अमलः—भिषङ्महोदयेन बहिर्गमनं मे निषिद्धम् ।

किशोराः—भिषक्! भिषजो निषेधस्त्वया मान्यते किम् ?
—चलत, चलत भ्रातरः, अस्माकं विलम्बो भवति ।

अमलः—नहि भ्रातरः, मम गवाक्षस्य पुरतः पथि दण्डायमानाः सन्तः क्षणं क्रीडन्तु । अहं तु तत्पश्यामि ।

किशोराः—अत्र कैरुपकरणैः क्रीडिष्यामः ।

अमलः—अत्र मम सर्वाणि क्रीडनकानि वर्त्तन्ते । एतानि सर्वाणि युष्माभिर्गृह्यन्ताम् । गृहाभ्यन्तरे एकाकी क्रीडितुं नोत्सहे । तिष्ठन्ति एतानि सर्वाणि धूलिधूसरितानि विक्षिप्तानि च, एतैर्मम किमपि प्रयोजनं नास्ति ।

किशोराः—अहो, अपूर्वम्, मनोहरं क्रीडनकम्, जलयानं खल्विदम् । एषा तु जटिला वृद्धा । भ्रातः किं दृष्टः, कीदृशः सुन्दरः सैनिकः । किम् एतानि सर्वाणि त्वया अस्मभ्यं प्रदीयन्ते ? किं त्वया कष्टं नानुभूयते ?

अमलः—नहि, किमपि कष्टं मया नानुभूयते । सर्वाण्येव युष्मभ्यं प्रदीयन्ते ।

किशोराः—न पुनः प्रत्यर्पयिष्यामः ।

अमलः - नहि, प्रत्यर्पणं नहि करणीयम् ।

किशोराः—न कोऽपि तिरस्करिष्यति ?

अमलः—न कोऽपि, न कोऽपि तिरस्करिष्यति । अपितु प्रत्यहं प्रभाते यूयम् एभिः क्रीडनकैर्मम द्वारस्य पुरतः किञ्चित्कालं क्रीडन्तु तावत् । किञ्च, सत्सु एतेषु पुरातनेषु भूयो नूतनानि अहमानीय दास्यामि ।

किशोराः—शोभनः खलु प्रस्तावः । वयं प्रत्यहमेवात्र क्रीडिष्यामः । भो भ्रातरः, सैनिकान् तावत् सज्जीकुरुत-वयं युद्धं क्रीडिष्यामः । आग्नेयास्त्रं कुत्र प्राप्स्यामः । अहो, तत्रैव वर्तते विशालं शरदण्डकाष्ठमेकं—तदेव भङ्क्त्वा वयमाग्नेयास्त्रं निर्मामः । किन्तु, भ्रातस्त्वं सुप्तोऽसीति दृश्यते ।

अमलः—यथार्थमेव, निद्रा मां दृढमेव बाधते । अन्तरान्तरा कथं निद्रा मामभिभवतीति नाहं जानामि । दीर्घकालं यावदुपविष्टोऽहम्, नाहमतः परम् उपवेष्टुं शक्नोमि, पृष्ठदेशे वेदना जायते ।

किशोराः—अधुना प्रहरैकमात्रः समयः । तत् कथं भवति ते निद्रावेशः ? श्रूयतां, प्रथमप्रहरस्य घण्टा ध्वनतीति ।

अमलः—सम्यगुक्तम्, एषा घण्टा ध्वनन्त्येव-टं टं टमिति, निद्रार्थं-मामाह्वयति ।

किशोराः—तर्हि वयमधुना गच्छामः, पुनः श्वः प्रभाते आगमिष्यामः ।

अमलः–भ्रातरः, युष्माकं गमनात् प्राक् किञ्चित् पृच्छामि । युष्माभिस्तु बहिरेव स्थीयते, तत् किं राज्ञो वार्तागृहस्य वार्तावाहकान् यूयं जानीथ ?

किशोराः—बाढम् जानीमः, सुष्ठु जानीमः ।

अमलः—के तावत्ते, कानि तेषां नामानि ?

किशोरः—बादल् इत्येकस्य पत्रवाहकस्य नाम, अपरस्य शरदिति नाम। अन्ये च बहवः सन्ति ।

अमलः—भवतु, मम नाम्ना यदि पत्रमायाति, तदा किं ते माम् अभिज्ञास्यन्ति ?

किशोरः—कथं न ज्ञास्यन्ति ? पत्रे तु अङ्किते तव नाम्नि ते नूनमेव त्वां परिज्ञास्यन्ति ।

अमलः—श्वः प्रभाते यदा यूयम् आगमिष्यथ, तदा तेषामेकं मत्सकाशमानीय मम परिचयो विधातव्यः ।

किशोरः—बाढम्, तथैव करिष्यामः ।

३

(शय्यागतोऽमलः)

अमलः—तात, किमद्य गवाक्षं निकषा अपि नाहं गन्तुमर्हामि ? किमितोऽपि भिषङ्महोदयेन वारितोऽहम् ?

माधवदत्तः—तथैव, वत्स, प्रतिदिनं तत्र आसनावस्थानेन पीडा ते प्रबला सञ्जाता ।

अमलः—मैवं तात ; नाहं कामपि पीडामनुभवामि । परं तत्रैव स्थितोऽहम् अतीव सुस्थस्तिष्ठामि ।

माधवदत्तः—तत्रैव उपविश्य त्वमस्य नगरस्य सर्वप्रान्तीयबालवृद्धैः सार्द्धं प्रीतिबन्धनं रचितवान्—मम द्वारदेशं निकषा नित्यमेव संघटते जनानां मेलनमहोत्सवः । किमेतेन कदापि शरीरं निरामयं भवति ? अहो अद्य तावत्तव मुखं कीदृशं पाण्डुरं जातम् ।

अमलः—तात, मन्ये, अद्य ममानुरक्त उदासीनो गवाक्षं निकषा माम् अप्राप्य प्रचलिष्यतीति ।

माधवदत्तः—कस्तावत् स उदासीनः ?

अमलः—सोऽसौ, यः प्रतिदिनं मत्सन्निधानमागत्य नाना-दिग्देशानां कथां कीर्तयति, तच्छ्रवणेन महती प्रीतिर्मे जायते।

माधवदत्तः—किन्तु न मया कोऽपि उदासीनो ज्ञायते।

अमलः—इदानीमेव समागतस्तस्य आगमनकालः। तव चरणयोः पतित्वा प्रार्थयेऽहं यथा स मम कक्षं प्रविश्य वारमेकं तत्र उपविशेत्—तदेव तस्मै कथ्यतामिति।

( उदासीनवेषेण पितामहस्य प्रवेशः )

अमलः—अये उदासिन्! आगम्यताम्, मम शय्यायां क्रियताम् आसन-ग्रहणम्।

माधवदत्तः—किमिदम्? एतत्तु ....

पितामहः—( चक्षुर्भ्यामिङ्गितं कृत्वा ) अहमुदासी।

माधवदत्तः—किं त्वं न भवसीति विचिन्त्यापि नावगच्छामि।

अमलः—उदासिन्, अस्मिन्नवसरे कुत्र त्वया गतम्?

पितामहः—क्रौञ्चद्वीपमहं गतवान्, ततश्चेदानीं प्रत्यागतोऽस्मि।

माधवदत्तः—क्रौञ्चद्वीपं गतोऽसि?

पितामहः—अलं विस्मयेन। नाहं युष्माभिः समः। मम तु देशान्तर-गमने नास्ति क्लेशः। अहं यथाभिमतं गन्तुं शक्नोमि।

अमलः—(करतालिं दत्वा) कीदृशस्तव आनन्दसन्दोहः। स्वस्थतां गतोऽहं तव शिष्यीकृतो भविष्यामीति, त्वया यदुक्तं, किमधुना तत्स्मर्यते?

पितामहः—नितरां स्मरामि। अपि तु भ्रमणार्थम् एतादृशान् मन्त्रान् अहं शिक्षयामि यत् समुद्रे शैले अरण्ये कुत्रापि गमने ते बाधा न भविष्यतीति।

माधवदत्तः—उन्मत्ताविव, किमेवं प्रलपथः?

पितामहः—वत्स अमल, शैलात् समुद्राद्वा नाहं भीतोऽस्मि। किन्तु, यदि, अनेन ते पितृष्वसृपतिना सह भिषङ्महोदयोऽपि सम्मिलितो भवति, तदा मे मन्त्राः व्यर्थतां गमिष्यन्ति।

अमलः—नहि, नहि तात, भिषङ्महोदयस्तु त्वया किमपि न वक्तव्यः। अधुनाहमत्रैव शयानः स्थास्यामि, अन्यत् किमपि करिष्यामि। किन्तु यस्मिन्नु दिवसेऽहं निरामयो भविष्यामि, तस्मिन्नेव दिवसे उदासिनो मन्त्रं गृहीत्वा दूरं प्रचलिष्यामि—शैलाः समुद्राः नद्यो वा मां निरोद्धुं न शक्ष्यन्ति।

माधवदत्तः—मैवं ब्रूहि वत्स। केवलं गमिष्यामि गमिष्यामीति न वक्तव्यम्। तच्छ्रवणेन मनो मे दूयते।

अमलः—उदासिन्, उच्यतां तावत्, क्रौञ्चद्वीपस्तु कीदृशः?

पितामहः—अपूर्वः स देशः। स तु विहगानां देशः तत्र नास्ति कोऽपि मनुष्यः। ते हि न बिभ्यति, न चलन्ति, गायन्तः केवलमुड्डीयन्ते।

अमलः—अहो, अपूर्वम्। किं सागरोपान्ते?

पितामहः—अथ किम्! सागरोपकूलमेव ते उत्पतन्ति।

अमलः—सर्वे शैलाः किं सुनीलाः शोभन्ते?

पितामहः—नीलेषु शैलशिखरेषु तेषां कुलायाः। सन्ध्यायां शैलशीर्षे अस्ताचलगामिनस्तपनस्य रश्मिषु निपतितेषु हरिद्वर्णाः पक्षिणः श्रेणिशस्तेषां कुलायान् प्रत्यागच्छन्ति। तदा हि नभसो रागस्य विहगानाञ्च वर्णस्य शैलकान्त्याश्च अकाण्डो भवति समन्वयः।

अमलः— . . . . तत्र प्रवहति निर्झरिणी?

पितामहः—नूनम्। असत्यां स्रोतस्विन्यां किं चलति? सा हि प्रवहति यथैव विगलिता हीरकधारा। अपरञ्च, अपूर्वं तस्याः नृत्यम्। उपलखण्डान् 'ठं, ठं, ठं, ठमि'ति वादयन्ती, केवलं "कल्, कल्, झर्-

झर्'' रवेण सा हि स्रोतस्विनी सिन्धुवक्षसि आत्मानं विसर्जयति। कुत्रापि क्षणायापि तस्या निरोधे कस्यापि भिषजः पितुरपि क्षमता नास्ति। यदि पक्षिणस्ते मां तुच्छं मानुषं मत्वा नाद्विष्यन्, तदाहं तां स्रोतस्विनीं निकषा तेषां सहस्रसंख्याकानां कुलायानां पार्श्वतो नीडं निर्माय समुद्रतरङ्गान् अवलोकयन् निखिलान् दिवसान् अयापयिष्यम्।

अमलः—यद्यहं पक्षी अभविष्यं तदा तु—

पितामहः—तदा तु महती समस्या संजनिष्यते। श्रुतं मया यत्त्वया दधि-विक्रेता विज्ञप्तो यत् परिणते वयसि त्वं दधि विक्रेष्यसि इति। किन्तु पक्षिषु तव दधिविक्रयकार्यं तादृशं लाभजनकं न स्यात्। मन्येऽहं किञ्चिदिव तवार्थहानिः भविष्यतीति।

माधवदत्तः—नाहमतः परं सोढुम् शक्नोमि। मन्ये यूयं मामपि उत्तेजयिष्यथ। मया तु प्रस्थीयते।

अमलः—तात, मम दधिविक्रेता किमागत्य प्रचलितः?

माधवदत्तः—अथ किम्, प्रचलति एव। तव रुचिकरीम् उदासिनः पोटलिकां परिवहन् क्रौञ्चद्वीपस्थितानि पक्षिनीडान्युद्दिश्य उड्डयनेन तस्य उदरं न खलु पूर्यते। स तुभ्यं दधिपूर्णं पात्रमेकमुत्सृज्य प्रस्थितः। उक्तञ्च तेन यत् तेषां ग्रामे तस्य भगिनीकन्यायाः विवाहः। अतः स वंशीसंपादनमादेष्टुं कलमिपल्लीं गच्छति, तेन च भृशं कर्मव्यग्र इति।

अमलः—एकदा तु तेनोक्तं—मया सार्द्धं तस्य कनिष्ठभागिनेय्याः परिणयं विधास्यतीति।

पितामहः—तर्हि महतीं समस्यां तर्कयामि।

अमलः—उक्तञ्च तेन यत् सा मे समुज्ज्वला मनोरमा वधूर्भविष्यति। तस्याः नासिकायां नोलकाभरणं, शाटिका च चित्रिता रक्तवर्णा........। प्रातः स्वहस्तेन कृष्णां धेनुं सन्दुह्य नवीनमृण्मयपात्रेण सफेनं

दुग्धं सा मां पाययिष्यति ; सायंकाले च गोशालायां प्रदीपं प्रदर्श्य मां निकषा उपविश्य सप्तसहोदरायाश्चम्पायाः कथां कथयिष्यतीति ।

पितामहः—-अहो, अपूर्वम् , अपूर्वम् । वाञ्छनीया तु वधूः । अहं तावदुदासीनो जनः, ममापि लोभः सञ्जायते । तद्वत्स, नास्ति ते शङ्काकारणम् ; इदानीम् अनुष्ठीयतां विवाहः । सत्यमेतत् त्वां ब्रवीमि—तव प्रयोजने सति तस्य गृहे न कदापि स्वसृकन्याया अभावो भविष्यतीति ।

माधवदत्तः—अलमलम् । अतोऽधिकं न शक्यते । ( प्रस्थानम् )

अमलः—उदासिन् , पितृष्वसृपतिर्मे तु गत एव । राजसकाशात् मन्त्राङ्कितं पत्रं किं वार्तागृहं सम्प्राप्तमिति माम् अधुना रहसि कथय ।

पितामहः—तत्र भवतः पत्रं तु प्रेषितमेवेति मया श्रुतम् । तत्पत्रमधुना पथि एव वर्तते ।

अमलः—पथि ? कस्मिन् पथि ? वर्षणात् निर्मलीभूते नभसि विदूरे यद् दृश्यते, तस्मिन् निबिडवनमार्गे ?

पितामहः—त्वया तु सर्वमेव ज्ञातमिति पश्यामि । अथ किम् ! तत्रैव पथि वर्तते ते पत्रम् ।

अमलः—उदासिन् , मया तु सर्वमेव ज्ञायते ।

पितामहः— तत्तु अवगम्यते । किन्तु, केनोपायेन जानासि ?

अमलः—नाहं तज्जानामि । प्रत्यक्षमिव सर्वं मयि प्रतिभाति । मन्ये, बहुशो मया दृष्टं सर्वम् , तत्तु अनेकदिनेभ्यः प्रागेव, कदा इति नाहं स्मरामि । अहं पश्यामि— राज्ञो वार्तावाहकः शैलशिखरादेकक एव केवलमवतरति—वामहस्ते तस्य प्रदीपः, स्कन्धे तु पत्रपेटिका । कति दिनानि, कति निशाश्च व्याप्य स केवलमवतरत्येव गिरिपादं निकषा स्रोतस्विन्याः पन्थाः यत्र शेषं गतः तत्र बंकिमनदीपथेन—स

केवलमायात्येव—नद्यास्तीरे नीवारक्षेत्रम्—क्षेत्राभ्यन्तरे यः खलु संकीर्णः पन्थास्तेनैव पथा स केवलमागच्छति—ततस्तत इक्षु क्षेत्रम्, तस्य क्षेत्रस्य पार्श्वतो गच्छति समुच्चा संकीर्णः पथरेखा—तेनैव मार्गेण स केवलम् आयाति—अहर्निशम् एकक एव आयाति—क्षेत्रमध्ये स्वनन्ति झिल्लीकीटाः—नदीतीरे नास्ति कोऽपि मनुष्यः, केवलं पंकखनकः पुच्छमान्दोलयन् परिभ्रमति—अहं सर्वमेव पश्यामि। एवम् अन्तिकमायान्तं तं वीक्षमाणस्य मम वक्षसि समुल्लसति आनन्दसन्दोहः।

पितामहः—नास्ति मे तादृशी नवीना दृष्टिः। तथापि तव दृष्टिमाहात्म्यात् अहमपि अवलोकितुं शक्नोमि।

अमलः—भवतु उदासिन्, यस्येदं वार्तागृहम्, अपि जानासि तं राजानम्?

पितामहः—नूनं जानामि। मया तु प्रत्यहमेव भिक्षार्थं तत्समीपं गम्यते।

अमलः—साधु। निरामयः सन् अहमपि तत्सकाशं भिक्षार्थं गमिष्यामि। किं नाहं गन्तुं शक्ष्यामि?

पितामहः—वत्स, नास्ति प्रयोजनं तव भिक्षाकार्येण। तुभ्यं यत् प्रदेयम्, स याच्ञां विनैव तत् प्रदास्यति।

अमलः—नहि नहि; तस्य द्वारस्य पथि पार्श्वे दण्डायमानः सन् "जयोऽस्तु" इत्युच्चरन्नहं भिक्षां प्रार्थयिष्ये—खञ्जनिं वादयित्वा न नर्तिष्यामि—तत्तु सुष्ठु भविष्यति न किम्?

पितामहः—बाढम्, नितरां शोभनं भविष्यति। मया साकं त्वां नयामि चेत् ममापि भविष्यति पर्याप्तो भिक्षालाभः। तत् त्वं किं याचिष्यसे?

अमलः—अहं वक्ष्यामि—राजन्, मां भवतः पत्रवहनकर्मणि कृपया नियोजयतु। तर्हि करे प्रदीपं धारयन् गृहाद् गृहान्तरं तव पत्रं प्रापयन्नहं भ्रमिष्यामि। शृणु, उदासिन्, मां कश्चिदुक्तवान्, यन्मयि निरामये सञ्जाते स मां भिक्षाटनं शिक्षयिष्यति। अतोऽहं तेन सह यथेच्छं भिक्षया विहरिष्यामि।

पितामहः—कथ्यताम् ; कोऽसौ ?

अमलः—छिदाम।

पितामहः—को नु छिदाम।

अमलः—योऽसौ अन्धः, खञ्जश्च स एव। स प्रत्यहं मे गवाक्षान्तिकम् आगच्छति। मत्सदृशः कश्चित् किशोरस्तं चक्रयानेन परिभ्रामयति। मयोक्तं, सुस्थस्सन्नहं तं चालयन् सर्वत्र नेष्यामीति।

पितामहः—तेन नितरामानन्दो भविष्यति।

अमलः—किञ्च, स एव मामुक्तवान्, केन विधिना भिक्षा करणीया तत् स मां शिक्षयिष्यति। तस्मै भिक्षाप्रदानार्थम् अहं तातमनुरुणधिम। तत्रभवान् ब्रवीति स मिथ्याकाणः, मिथ्या-खञ्जः, न तु यथार्थतो विकलाङ्गः। भवतु मम मिथ्या-काणः, किन्तु दृष्टिहीनः स द्रष्टुं न शक्नोति—एतत्तु सत्यमेव।

पितामहः—यथार्थमुक्तं, वत्स। ननु एतदेव सत्यं यत् स चक्षुर्भ्यां द्रष्टुं न शक्नोति तं तावत् कोऽपि काणं वदतु न वा, किन्तु यद्यपि भिक्षां न प्राप्नोति, तथाप्यसौ किं कर्त्तुं तत्सकाशे उपविशति ?

अमलः—कुत्र किं विद्यते, तदहं तं श्रावयामि। मन्दभाग्यो वराको द्रष्टुं न शक्नोति। त्वं येषां देशानां वृत्तं मह्यं वर्णयसि, तत् सर्वमहं तं श्रावयामि। यस्मिन् देशे द्रव्याणां कोऽपि भारो नास्ति, यत्र च लघुप्लुत्या अनायासेनैव पर्वतमतिक्रम्य गन्तुं शक्यते, मन्मुखात् त्वद्वर्णितस्य तस्य लघुदेशस्य कथां श्रुत्वा स भृशमानन्दितः। भवतु, उदासिन्, केन पथा स देशो गन्तव्यः ?

पितामहः—अस्त्येव अभ्यन्तरे कश्चित् पन्थाः किन्तु तस्य मार्गणं दुष्करमेव।

अमलः—मन्दभाग्यस्तु अन्ध एव। सम्भवतः, स किमपि द्रष्टुं न शक्ष्यति—केवलं भिक्षाटनमेव तेन करणीयम्। एतद् विचिन्त्याऽसौ विषाद-

माधवदत्तः—अहं तमुक्तवान्, भिक्षार्थं गत्वा त्वं यावत् विस्तरशो भ्रमन् सुयोगान् प्राप्नोषि, सर्वे तु तदपि न प्राप्नुवन्ति ।

पितामहः—वत्स, गृहावस्थाने कुतस्ते एतादृशं दुःखम् ?

अमलः—न, न, नास्ति दुःखम् । प्रागेव यदाहं गृहमध्ये निरुद्धः तदा मया अमन्यत यन्नास्ति दिवसस्य अवसानम् । किन्तु अस्माकं राज्ञो वार्ता-गृहं निरीक्ष्य प्रत्यहमेवाधुना आनन्दितोऽहम्—अत्र उपविशन्तं मामियमेव कल्पना आनन्दयति यत् कस्मिंश्चिद् दिवसे मत्कृते पत्रम् आगमिष्यतीति—एवं विचिन्त्य नितरां प्रमोदितः सन् मौनमवस्थातुं पारयामि । किन्तु, राज्ञः पत्रे किं लिखितं स्थास्यतीति मया न ज्ञायते ।

पितामहः—मैतद् ज्ञातमस्तु । तव नाम तु नूनमेव लिखितं स्थास्यति, एतेनैवालम् ।

( माधवदत्तस्य प्रवेशः )

माधवदत्तः—उच्यतां भोः, युवां द्वौ सम्मिलितौ भूत्वा कामिमां विपदं संघटितवन्तौ ?

पितामहः—कथम् ? किं संघटितम् ?

माधवदत्तः—श्रुतं मया, युष्माभिः प्रचारितमेतत् यद् राजा युष्मभ्यं पत्रं प्रेषयितुं वार्तागृहं स्थापितवानिति ।

पितामहः—तेन किं भूतम् ?

माधवदत्तः—अस्माकं मण्डलपतिः पञ्चाननस्तत्सन्देशं राज्ञे निवेद्य अपरस्य नाम्ना पत्रं लिखितवान् ।

पितामहः—सर्वे सन्देशाः राज्ञः श्रुतिपथम् अधिगच्छन्तीति किमस्माभिर्न ज्ञायते ।

माधवदत्तः—तत् कथं न तूष्णीं भवसि, राजमहाराजानां नाम्ना कथं यदृच्छया एतादृशं वचनमुच्चारयसि ? यूयं मामपि विपन्नं करिष्यथ इति पश्यामि ।

अमलः—उदासिन्, किं राजा कोपं प्राप्स्यति ?

पितामहः—कथं क्रुद्धो भविष्यति, कीदृशं कोपं गमिष्यतीति, पश्यामि। मत्सदृशमुदासिनं त्वत्सदृशञ्च किशोरं प्रति कोपमवलम्ब्य स कथं राजत्वं नाटयिष्यति तं तु पश्यामि।

अमलः—उदासिन्, पश्य, अद्य प्रातरेवारभत मम नेत्रयोः समक्षम् अन्तरान्तरम् अन्धकारो घनीभूतो भवति। मन्ये, सर्वः स्वप्न एव। प्राकाम्ये च मौनमवलम्ब्य स्थातुमिच्छामि। वाक्योच्चारणमपि नेच्छामि। तर्हि राज्ञः पत्रं किं नागमिष्यति ? इदानीमेव यदि एतद्गृहम् अन्यानि च सर्वाणि विलुप्तिं गच्छन्ति, तदा—

पितामहः—(अमलमुपवीज्य) मैवम्। पत्रमद्यैव आगमिष्यति।

(भिषजः प्रवेशः)

भिषक्—अद्य कीदृशम् अनुभूयते ?

अमलः—भिषङ्महोदय, अद्य खलु परिपूर्णं सुस्थत्वमनुभूयते, मन्ये अपगताः सर्वाः व्यथाः।

भिषक्—(जनान्तिकं माधवं प्रति) एतत् हास्यं, न तु समीचीनं मन्ये। अमुना यदुच्यते, सुस्थतानुभूयत इति तदेव दुर्लक्षणम्। अस्माकं चक्रधरेणोच्यते—

माधवदत्तः—क्षमस्व, भिषङ्महोदय, तिष्ठतु तावत् चक्रधरदत्तस्य उक्तिः। उच्यतामिदानीं को हि व्यापारः।

भिषक्—मन्ये, नातः परमिमं जीवयितुं शक्ष्यामि। मया तु निषेधो विज्ञापितः। किन्तु, मन्ये, बहिर्देशात्, वायुरिमं स्पृष्टवानिति।

माधवदत्तः—नहि भिषङ्महोदय, नैतत् सत्यम्। अहं तु चतुर्दिग्भ्यो दृढार्गलया निरुध्य इमं संरक्षितवान्। अस्य बहिर्गमनं मया सर्वथा प्रतिरुद्धम् - द्वारमपि प्रायशो निरुद्धमेव रक्ष्यते।

भिषक्—अकाण्डे अद्य कीदृशः कश्चित् वायुप्रवाहोऽनुभूयते। युष्माकं गोपुरद्वारस्य आभ्यन्तरे प्रबलो वायुः हुहुरवेण प्रवहतीति मया दृष्टम्। तन्न कदापि समीचीनम्। तद्द्वारं सम्यग् अर्गलाबद्धं क्रियताम्। उत, दिवसद्वयं त्रयं वा भवत्वत्र निरुद्धं लोकानां गमनागमनम्। यदि कोऽपि आगच्छति, तदा तु तदर्थं पश्चाद्द्वारमस्ति। गवाक्षेणामुना सूर्यास्तमयस्य या खलु आभा आयाति, सापि निरुध्यताम्। सा तु रोगिणं जागरयति।

माधवदत्तः—अमलश्चक्षुषी निमील्य तिष्ठति, मन्ये असौ निद्राति। अस्य मुखमवलोक्य मन्ये, भिषङ्महोदय, यो न खलु स्वकीयस्तमहम् स्वभवनमानीय स्थापितवान्, स्नेहेन च पालितवान्। मन्ये अतः परं तमहं रक्षितुं न शक्नोमि।

भिषक्—किमिदम्। मण्डलपतिस्तवैव गृहमागच्छति। कोऽयं विघ्नपातः। तद्भ्रातः अहं प्रचलामि। किन्तु त्वम् अधुनैव सम्यग् द्वारं निरुन्धि। अहं गृहं गत्वा अचिरेणैव विषवटिकामेकां प्रेषयामि - सैव प्रयोक्तव्या। रक्षणीये सति सा एव रक्षितुं शक्ष्यति।

(माधवदत्तस्य भिषजश्च प्रस्थानम्)

(मण्डलपतेः प्रवेशः)

मण्डलपतिः—रे अर्भक, किम्?

पितामहः—(तूर्णमुत्थाय दण्डायमानः सन्) अहो, अहो, मौनं, मौनमवलम्बस्व।

अमलः—न हि उदासिन्, अहं स्वपिमीति त्वं मन्यसे, नाहं सुप्तः। मया सर्वमेव श्रूयते। अहं तु विदूरस्य कथनं शृणोमीव। मम जननी तातश्च शय्याशीर्षे मे आलपत इति भाति।

(माधवदत्तस्य प्रवेशः)

मण्डलपतिः—भोः माधवदत्त, अद्यत्वे तु अतिप्रख्यातैर्महद्भिः लोकैः सह युष्माकं सम्बन्धो दृश्यते।

माधवदत्तः—किमुच्यते भवता, महात्मन्, अलमनेन परिहासेन। वयं नितरां साधारणजनाः !

मण्डलपतिः—युष्माकमयं किशोरस्तु राज्ञः पत्रमपेक्षते।

माधवदत्तः—एवं बोधहीनश्चासौ बालकः, तस्य वचनं किं ग्रहणीयम् ?

मण्डलपतिः—नहि नहि, किमत्र विस्मयकारणम् ? युष्मत्सदृशम् ईदृशं सुयोग्यं गृहं राजा तु कुत्र प्राप्स्यति ? तदर्थमेव युष्माकं गवाक्षस्य पुरत एव राज्ञो नूतनं वार्तागृहं प्रतिष्ठितमिति किं न दृश्यते ? अरे, अर्भक, राजसकाशात् तव नामाङ्कितं पत्रं तु आगतमेव।

अमलः—(चकितः सन्) सत्यम् ?

मण्डलपतिः—किमेतत् मिथ्या भवति। त्वयैव साकं राज्ञो बन्धुत्वम्—(अक्षरशून्यं किञ्चित् पत्रं प्रदाय) हा, हा, हा, एतदेव तत्रभवतः पत्रम्।

अमलः—मा, माम् उपहस। उदासिन्, उदासिन्; त्वमेव कथय, किमिदं यथार्थस्तत्रभवतः पत्रम् ?

पितामहः—बाढं वत्स, अहमुदासी त्वां ब्रवीमि, तस्यैव पत्रमिदं सत्यमेव।

अमलः—किन्तु मया तु अस्मिन् किमपि न दृश्यते अद्य नेत्रयोर्मे सर्वमेव शुभ्रं सञ्जातम्। मण्डलपतिमहोदय, उच्यतामस्मिन् पत्रे किं लिखितमिति।

मण्डलपतिः—राज्ञा लिखितम्, अद्य श्वो वा युष्माकं गृहं मयागम्यते, मदर्थं युष्माकं सुमिष्ट-भर्जिततण्डुलैः लाजैश्च भोज्यं प्रस्तूय संरक्ष्यताम्। राजभवनं नाधुना मे क्षणमपि रोचते। हा, हा, हा, हा।

माधवदत्तः—(कपोतहस्तं कृत्वा) महात्मन्, क्षम्यताम्, एभिर्वचनैरुपहासो न हि करणीयः।

पितामहः—परिहासः? कस्य परिहासः? परिहसितुं किं तत्रभवतः शक्तिरस्ति ?

माधवदत्तः—भोः पितामह, किं त्वमपि मत्ततां गच्छसि ।

पितामहः—बाढं । क्षिप्तोऽहम्, तवैव अस्मिन् सर्वशुभ्रे पत्रे अक्षराणि पश्यामि । राज्ञा लिखितम्, तत्रभवान् स्वयमेव अमलं द्रष्टुमागच्छति, तस्य राजवैद्यमपि सहैव आनयतीति ।

अमलः—उदासिन्, तस्य वाद्यं ध्वनति, किं न श्रूयते ?

मण्डलपतिः—हा हा हा हा । किञ्चिदधिकतरां क्षिप्ततामगच्छन् तत्र भवान् न श्रोष्यति ।

अमलः—मण्डलपतिमहोदय, मया तु अनुमितं, त्वं मां प्रति कुपितः-त्वं मयि न खिद्यसीति । त्वं सत्यमेव राज्ञः पत्रमानेष्यसीति मया न चिन्तितम्-अतः क्षम्यतां, देहि मे तव पादरजांसि ।

मण्डलपतिः—यातु, अस्य बालकस्य श्रद्धा भक्तिश्च वर्तेते । यद्यपि नास्ति तस्य बुद्धिस्तथापि तस्य मनस्तु निर्मलमेव ।

अमलः—व्यतीतं तु चतुःप्रहरम् । शृणोमि तावत् टं, टं, टं टमिति । किन्तु सन्ध्यातारा: उदयं गताः । तत्तु एतावता कालेन कथमहं द्रष्टुं न शक्नोमि ?

पितामहः—ते तु गवाक्षं रुद्धं कृतवन्तः, अहं तावदुपमोचयामि ।

(बहिर्देशे द्वारे कराघातः)

माधवदत्तः—किमिदम् ! कोऽसौ ? कोऽयमुत्पातः ?

बहिर्देशात्—द्वारमुन्मोचय ।

माधवदत्तः—के यूयम् ?

बहिर्देशात्—द्वारमुन्मोचय ।

माधवदत्तः—मण्डलपतिमहोदय, किं नायं दस्युसमागमः ?

मण्डलपतिः—रे, रे, के यूयम् ? मण्डलपतिः पञ्चाननोऽहम् युष्माकं मनसि किं भीतिर्नास्ति ? पश्यतु तावत् शब्दः स्तब्धीभूतः। श्रुते पञ्चाननस्य कण्ठस्वरे नास्ति रक्षा, यथातथा शक्तिशाली दस्युर्भवतु।

माधवदत्तः—(गवाक्षपथे मुखं बहिः प्रसारयन्) द्वारं हि भग्नं अतो नाधुना शब्दः।

(राजदूतस्य प्रवेशः)

राजदूतः—अद्यैव महाराजः समागमिष्यति।

मण्डलपतिः—कोऽयं सर्वनाशः।

अमलः—कियद्गभीरायां रजन्यामसौ आगमिष्यति।

दूतः—द्विप्रहरपरिमितायां रजन्यां समागमिष्यति।

अमलः—यदा मे बान्धवः प्रहरी नगरसिंहद्वारस्य घण्टां वादयिष्यति-टं, टं, टं .... तदा ?

दूतः—बाढं, तदैव। राज्ञा किशोरबान्धवस्य दर्शनार्थं तस्य निपुणतमो भिषक्प्रधानः प्रेषितः।

(राजवैद्यस्य प्रवेशः)

राजवैद्यः—किमिदम्। चतुर्दिक्षु सर्वमेव रुद्धम्। मोचय! मोचय यानि यानि द्वाराणि गवाक्षाणि च विद्यन्ते, तानि सर्वाणि उन्मोचय।

(अमलस्य गात्रं हस्तेन परामृश्य)

वत्स, कीदृशमनुभूयते ?

अमलः—अत्युत्तमम्, अत्युत्तमम्, भिषङ्महोदय, अधुना नास्ति मे कापि पीडा, नास्ति कापि व्यथा। अहो सर्वम्-उन्मुक्तम्-सर्वानेव तारागणान् पश्यामि-तमसः परस्तात् शोभमाना निखिला नक्षत्र-मण्डली मया दृश्यते।

राजवैद्यः—अर्द्धरात्रे यदा राजा आगमिष्यति, तदा त्वं शयनात् समुत्थाय, तेन सार्द्धं बहिर्गन्तुं किं शक्ष्यसि ?

अमलः—अलमलमहं शक्ष्यामि। बहिर्गमनेनाहं जीविष्यामि। अहं राजानं निवेदयिष्यामि - तिमिराच्छन्नेऽस्मिन् आकाशे मां ध्रुवतारां प्रदर्शयतु, मन्ये कतिवारानहं तां तारां दृष्टवान्, का हि सेति नाभिजानामि।

राजवैद्यः—तत्रभवान् सर्वाण्येव परिज्ञापयिष्यति। (माधवं प्रति) कक्षमिदं राज्ञः प्रत्युद्गमनार्थं परिष्कृत्य पुष्पैः सज्जीक्रियताम्। (मण्डलपतिं निर्दिश्य) कक्षेऽस्मिन्नसौ जनो न कदापि रक्षणीयः।

अमलः—नहि, नहि, भिषग्वर्य, स, मे बान्धवः, यूयं यदा नागतास्तदा तेनैव राज्ञः पत्रमानीय मह्यं प्रदत्तम्।

राजवैद्यः—भवन्तु वत्स, यतोऽयं ते बान्धवस्तदासावपि कक्षेऽस्मिन् तिष्ठतु।

माधवदत्तः—(अमलस्य कर्णे) वत्स, राजा त्वयि स्निह्यति, तत्रभवान् स्वयमद्य आगच्छति - अद्य तत्सकाशे किञ्चित् प्रार्थयितव्यम्। अस्माकमवस्था तु नहि सुखपूर्णा। सर्वं त्वया ज्ञातमेव।

अमलः—तन्मया स्थिरीकृतम्, तात, अस्मिन् विषये नास्ति ते किमपि चिन्ताकारणम्।

माधवदत्तः—तत् किं स्थिरीकृतं वत्स ?

अमलः—अहं तत्रभवन्तं प्रार्थयिष्ये, तत्रभवान् मां तस्य वार्तागृहस्य वार्तावाहकं करोतु। अहं देशाद्देशान्तरं गृहात् गृहान्तरं तत्रभवतः पत्राणि प्रापयन् विचरिष्यामि।

माधवदत्तः—(ललाटे कराघातं कृत्वा) हन्त मे दौर्भाग्यम्।

अमलः—तात, राजा आगमिष्यति, तदर्थं किं भोज्यं विरचिष्यसि ?

दूतः—तत्रभवता तु उक्तमेव, युष्माकमत्र भर्जिततण्डुलैः सगुडलाजैश्चैव तत्रभवता भोज्यं प्रकल्पितम्।

अमलः—भर्जिततण्डुलम्, सगुडलाजादिकम्। मण्डलपतिमहोदय, त्वया तु एतदेव प्रागेवोक्तम् - राज्ञः सर्वमेव वृत्तं त्वयैव ज्ञायते। प्राक् किञ्चिदपि नास्माभिः परिज्ञातम्।

मण्डलपतिः—यदि मम गृहे कमपि जनं प्रेरयसि, तदा तु राज्ञे किञ्चिदुत्तमम्—

राजवैद्यः—अलं तेन। नास्ति किमपि प्रयोजनम्। इदानीं यूयं सर्वे स्थिरीभवत। आयाति, आयाति, तस्य सुप्तिः समायाति। बालकस्य शयनोपान्ते अहमुपविशामि - अस्य निद्रावेशो भवति। प्रदीपस्य आलोकं निर्वापय - अधुना आकाशस्य तारकासकाशादागच्छतु आलोकः। अयं हि निद्रानिष्ठः।

माधवदत्तः—(पितामहं प्रति) पितामह, कथं त्वमित्थं मूर्तिरिव कृताञ्जलिर्मौनमवलम्बसे? कीदृशी शङ्का मे जायते। किमेतानि दृश्यमानानि सुलक्षणानि। कथमेते कक्षं मे तमसाच्छन्नं कुर्वन्ति? तारकालोकेन किं मे प्रयोजनम्?

पितामहः—अविश्वासिन्, मौनमवलम्बस्व। मा वाक्यमुच्चारय।

(सुधायाः प्रवेशः)

सुधा—अमल।

राजवैद्यः—सुप्तिं गतश्चैषः।

सुधा—अहं तु तदर्थं कुसुमसम्भारमानयामि। किं तस्य करतले उपहर्तुं न शक्ष्यामि?

राजवैद्यः—भवतु, प्रदीयन्तां कुसुमानि।

सुधा—कदायं जागरिष्यति?

राजवैद्यः—अधुनैव। यदा हि राजा समागत्य तम् आह्वयिष्यति, तदैव।

सुधा—तदा किं यूयम् अस्य कर्णे वचनमेकं नीरवम् उच्चारयिष्यथ?

राजवैद्यः—किं वक्ष्यामि?

सुधा—कथ्यतां - यत् "सुधा त्वां न विस्मृतवतीति।"

——

# वाल्मीकिप्रतिभा

अनुवादकः—डा० वे. राघवः

## प्रथमं दृश्यम्

वनदेवतागणः—सहे न सहे न क्रन्दितं परेषाम्। साधु अरण्यं जातं श्मशानम्। दस्युदलान्यागत्य शान्तिनाशं कुर्वन्ति। कष्टेन सकला दिशः कम्पमानाः, आकुलं काननं, क्रन्दति समीरणः, चकितो मृगः, पक्षी न गायति, श्यामलं तृणदलं शोणितेन भासते। कातररोदनरवेण स्फुटति पाषाणः। देवि दुर्गे! प्रत्यावृत्य पश्य। त्रायस्वेदं वनम्। रक्ष अधीनान् जनान्। कुरु शान्तिदानम्।

(निष्क्रान्तः)

प्रथमदस्युः—(प्रविश्य) हन्त पलायितोऽस्मि। तां दिशं नैव गमिष्यामि। संरावेण कथं पत्राण्यपि पतन्ति। चिन्तितेऽपि भयेन दन्तवादनं जायते। लुण्टितं धनमादाय व्रजामः। दण्डान् भ्रामयन्तः वाद्यानि वादयन्तः स्वानुत्तेजयिष्यामः।

(लुण्टितद्रव्याण्यादाय प्रविशति दस्युगणः)

दस्युगणः—आनीतोऽस्माभिर्लुण्टितद्रव्यभारः। कृत्वा नाशं कति ग्रामपल्ल्यादि लुण्टित्वा एष सङ्गृहीतः अस्माभिः।

प्रथमः—पश्चात् मिलित्वा सर्वे वयं लुण्टितमिदं संविभजामः।

द्वितीयः—कार्यवेलायामेष कुतोऽपि पलायितः, भागवेलायाम् अग्रे आगतः। (विहस्य) एहि।

प्रथमः—किमिदं प्रहसनम्? अद्य मुण्डं खण्डं करिष्यामि। जागृत, जागृत।

द्वितीयः—यदि संकल्पयामि, विश्वं नाशयिष्यामि। एतावान् मे प्रभावः।

प्रथम:—( प्रहसन् ) एतादृशो योद्धा एषः ! खड्गे उद्धृते मरिष्यति। कुत्र लगुडः ? कुत्र खेटः ?

सर्वे—हा हा यदि संकल्पयिष्यामो विश्वमेव नाशयिष्यामः । एतावान्नः प्रभावः ।

( ततः प्रविशति वाल्मीकिः )

सर्वे—एकेन बन्धेन बद्धा स्मः सकलाः । न मन्यामहे प्रतिबन्धं, न मन्यामहे शासनम्, न मन्यामहे कमपि । को वा राजा ? कस्य वा राज्यम् ? किं जानीमः ? प्रत्येकं वयं जना राजानः; वनं राजधानी; राजा प्रजा इति उच्चनीचगणना कापि नास्ति। त्रिभुवनमध्ये वयं किमपि कस्मा अपि न भेष्यामः । मस्तकोपरि अस्ति काली, संमुखे अस्ति जयः ।

( वाल्मीकिं दृष्ट्वा )

राजन्! इतः परं कर्तव्यं किम् ?

वाल्मीकिः—शृणुत ! अमावास्या निशा अद्य । पूजां दास्यामः कालिकायै । त्वरां कृत्वा यात सर्वे । सर्वे मिलित्वा बलिमानयत ।

( इति निष्क्रान्तः )

सर्वे— त्रिभुवनमध्ये किमपि कस्मा अपि न भेष्यामः । मस्तकोपरि अस्ति काली, संमुखे अस्ति जयः । यः कोऽपि यस्मै कस्मैचिद् रोदिति, किं नस्ततः ? हा हा हा ! खड्गमानय । आनय प्रासम् । आनय खेटम् ।

प्रथमः—काली कालीति सर्वे ब्रूत । हा हा हा ! नामघोषवेगेन कार्यं साधयिष्यामः । सा घोरं मत्तं नृत्यं रङ्गमध्ये करोति । सा लक्ष-लक्षयक्षरक्षःपरिवृता श्यामा मुक्तकेशा अट्टहासिनी-हह हाहा हे हे-श्यामा । मातुः जयं ब्रूत । जय जय जय ।

( सर्वे गन्तुमुद्यताः । ततः प्रविशति एकाकिनी बालिका )

बालिका—हन्त । मेघैरावृतं गगनम् ! अन्धकारः प्रसृतः । रजनी आगता । गृहं पुनर्यायां कथम् ? चरणौ अवशौ जातौ । श्रान्तक्लान्तः कायः । पूर्णो दिवसो वनभ्रमणेन । गृहं पुनर्यायां कथम् ? किमिदं घोरं वनम् । आगताहं कुत्र ? पन्थानं न जाने । किमपि न जाने, किं करिष्यामि अस्यां अन्धरात्रे ? किं भविष्यति मे ? घनघोरमेघावृतं गगनम् । चकितचपला चञ्चति सघने । एकाकिनी बालिका त्रस्तास्मि । कंपते कायः ।

( बालिकां प्रति )

प्रथमः—पथो भ्रष्टासि सत्यम् । साधुमार्गं दिदृक्षसे । तादृशं स्थानं त्वां प्रापयिष्यामः, यत्र सुखेन यावद्वर्षं स्थास्यसि ।

सर्वे—हा हा हा !

द्वितीयः—भ्रातः कीदृशं तत् स्थानम् ?

प्रथमः—फल्गु वा महद्वा, अद्य वा अन्यदा वा सर्वे एव तत्र मिलिष्यन्ति ।

सर्वे—हा हा हा !

( प्रविशन्ति वनदेवताः )

वनदेवताः—म्रियते, कस्यापि वत्सा ! तां कुत्र नेष्यथ । हा एते करुणे चक्षुषी कं प्राप्तुमिच्छतः ? कठिनेन पाशेन बद्धा । अङ्गं कम्पते त्रासेन । अक्षिणी जलेन भासेते । केयं दशा ? अस्मिन् वने कः अस्ति ? कं व्रजामः ? कस्तां रक्षिष्यति ।

## द्वितीयं दृश्यम्

( अरण्ये कालीप्रतिमा । वाल्मीकिः स्तुवन् आसीनः )

वाल्मीकिः—रक्तपदपद्मयुगे ते प्रणमामि भवदाराः । अद्य अस्मिन् घोरनिशीथे पूजयिष्यामस्ते महिमानम् । सुरनरा बिभ्यति ; ब्रह्माण्डविप्लवं करोषि ।

रणरङ्गे जेष्यसि मत्ता मातः ! घोरा उन्मादिनीवासि । ज्वलन्ति दिशि दिशि वल्गमानास्तडिदसयः । प्रवहन्ति शोणितस्रोतांसि । भासते विपुला धरा । भोः कालि ! कपालिनि ! महाकालसीमन्तिनि ! गृहाण जपापुष्पाञ्जलिम् । महादेवि, परात्परे !

( बालिकामादाय दस्युगणः प्रविशति )

दस्युगणः—पश्यतु प्रभुः । बलिरानीतो अस्माभिः, महान् सरसश्च । ईदृशः सरसो मत्स्यः जाले ग्रहीतुं न शक्यः । तत् कुतो विलम्बसे प्रभो, त्वरया स्वीकुरु ।

वाल्मीकिः—आनय खड्गम् । तृषिता श्यामामाता शोणितं पास्यति । यात त्वरया । लोलजिह्वा लम्बते । तडित् खेलति चक्षुषि । घोरदन्तै-र्दिग्दिगन्तान् खण्डयिष्यति ।

बालिका—कस्मै दोषाय मां बद्धवन्तो यूयम् ? कुत्र माम् आनीतवन्तः ? नष्टपथा एकाकिनी बने असहायाहम् । रक्षत रक्षत रक्षत रक्षत माम् । दयां कुरुत अनाथायाम् । के वा मे सन्ति ? बन्धेन कातरतनुः, म्रिये व्यथया ।

वनदेवता (नेपथ्ये)—दयां कुरुत अनाथायाम् । दयां कुरुत । बन्धेन कातरतनुः जर्जरा व्यथया ।

वाल्मीकिः—कीदृक् जातं मे मनः ! किं तद् भावयतीति किञ्चिदपि न शक्यते ज्ञातुम् । पाषाणहृदयं द्रवति कथम् ? कथम् अश्रुजालं दृश्यते नयने ? केयं माया ? पाषाणबन्धः कथं स्फुटति ? सर्वं तरलीभूतं, सर्वं तरलीभूतम् ! मरुभूमिः करुणाप्लावनेन मग्ना ।

प्रथमः—अरे ! कियती भावना ! किमपि नाधिगम्यते ।

द्वितीयः—समयो धावति !

तृतीयः—कदा आनीता वयम् ; अद्यापि किमपि न निर्वृत्तम् ।

चतुर्थः—( साश्चर्यम् ) कथमिदम् !

वाल्मीकिः—नहि नहि। एष बलिर्न भविष्यति। अन्यं बलिं मृगयत। यात।

प्रथमः—अन्यं बलिम् अस्यां रात्रौ कथं प्राप्स्यामः ?

द्वितीयः—कां कथां कथयन्ति भवन्तः ? साधु।

वाल्मीकिः—शृणुत इममादेशम्। कृपाणं खर्परं च उद्धृत्य क्षिपत। बन्धच्छेदं कुरुत, मुञ्चतैनामधुनैव।

## तृतीयं दृश्यम्

[अरण्यम्]

वाल्मीकिः—व्याकुलीभूय वने वने भ्रमामि, एकाकी, शून्यमनाः। कः पूरयिष्यति मे कातरं जीवितम्, शमयिष्यति च हृदयं सुधावर्षेण।

[निष्क्रान्तः]

[दस्युगणः पुनश्च बालिकां गृहीत्वा प्रविशति]

दस्युगणः—न त्यक्ष्यामः न त्यक्ष्यामः ईदृशं मृगयाफलम्। हस्तान्तिकमेवम् आगतम्, एवं गन्तुमुचितं किम् ? एवं गन्तुं के अनुमंस्यन्ते। राजा कुप्यति। तदीयं वच इतः परं नाङ्गीकरिष्यामः। अद्य रात्रौ कोलाहलो भविष्यति। तत्कारणमानीतमस्माभिः। ज्वलयत दीप-स्तम्भान्। नृत्यन्तश्चक्रेण भ्रमन्तो यथेच्छं पूजां दास्यामः। राजा कुप्यति, तदीयं वच इतः परं नाङ्गीकरिष्यामः।

प्रथमः—राजानं महाराजं वा को जानाति। अहं राजाधिराजः। त्वं मन्त्री। नागरिकस्त्वम्। ते च दारका अङ्गरक्षकाः। एतैः सर्वैः अलसैः जनैः स्थानमिदमाक्रान्तम्। कार्यवेलायां बुद्धिः पलायते। पाद-प्रक्षालनाय जलमानय झटिति। कुरुत युष्माकं स्वं स्वं कार्यम्।

द्वितीयः—अस्ति ते विद्यासिद्धिरिति किं मन्यसे ? राजत्वकरणाय किमिदं प्रहसनं करोषि ?

प्रथमः—किं न जानासि कोऽहमिति !

द्वितीयः—बहु बहु जानामि ।

प्रथमः—मा उपहस माम् , याहि याहि । सर्वे प्रतिस्वं कार्यमुद्दिश्य यात यात ।

द्वितीयः—बहुदीर्घा ते कथा । प्रेक्षे, यमस्त्वामाह्वयतीति ।

तृतीयः—किमर्थमियं बाधा ? भवतु, त्वमेव राजवन्नट । मरणवेलायां परावृत्य पृष्ठं प्रदर्शयिष्यामि । पश्चात्स्थास्यामि ।

प्रथमः—राम, राम ! हरे, हरे ! तत्र तेषु तिष्ठत्सु, किमर्थमहं मरिष्ये ? एतादृशीं विपदं यदि प्रेक्षे, पलायिष्ये ।

सर्वे—अरे, शीघ्रं गच्छत, आनयत पूजासामग्रीम् । कथाभिः रात्रिर्गच्छति कार्यमेतदपहाय । इदमेव वः कार्यसौष्ठवम् ।

बालिका—हा ! कीदृशी दशा जाता मे । कुत्रासि मातः करुणामयि ? अरण्ये प्राणा मे गच्छन्ति । मुहूर्तेन मातः, मां दृष्ट्वा आधाव, यथा जनौ तथा मृतौ मामनुगन्तुम् ।

( पूजोपकरणानि गृहीत्वा प्रविशति दस्युगणः,
कालीप्रतिमां परिवृत्य नृत्यति च )

बालिका—एतावन्नाट्यम् शिक्षितवती त्वं कुत्र ? मुण्डमालिनि, ते नृत्यं दृष्ट्वा चित्तं कंपते ; चञ्चति धरणिः ; क्षान्तिं देहि ; शान्ता भव ; त्वत्सन्तानस्य प्रार्थनां देहि । ते रक्तनयने दृष्ट्वा मीलतो मे नयने । आ मातः त्रिणयने !

( वाल्मीकिः प्रविशति )

वाल्मीकिः—अहो कियान् वो दर्पः, नराधमाः ! युष्मत्कार्यमितः परं नेच्छामि । दूरं यात । मा मां स्पृशत । एतत्सर्वं कार्यम् इतः परं न भविष्यति । एतत्पापम् इतः परं न भविष्यति । त्रायध्वम् आत्मानं सर्वं त्यक्त्वा ।

प्रथमः—दीनो हीनश्चाधमोऽहं किञ्चिदपि न जाने राजन्। एते खलु एतावतीं बाधां कर्तुं प्रवृत्ताः। एतान् बोधयितुमेतावति कृतेऽपि न बुध्यन्ते। किं करिष्यामि। दृष्ट्वैतत् त्वमेव विचारय।

द्वितीयः—साधु! महदिदमानन्दकरमाश्चर्यकरं च। एष एवास्यानिष्टस्य मूलम्। किं त्वं न वदसि?

प्रथमः—अलमलम्। निर्लज्जं न प्रलप।

वाल्मीकिः—सद्यः अपसरत। एतत् पापमितः परं न भविष्यति। त्रायध्व-मात्मानं सर्वं त्यक्त्वा।

(निष्क्रान्तो दस्युगणः)

वाल्मीकिः—(बालिकां विलोक्य) एहि मातः! मया सह; किमपि भयं नास्ति इतः परम्। कियद् दुःखं सोढवत्यसि वने, अहो मे मातः! नयनयोः झरति वारि। किमिदं मातः! सोढुं शक्यम्? कोमल-कातरतनुस्ते कंपते वारं वारम्! (निष्क्रान्तः)

## चतुर्थं दृश्यम्

(वनदेवतागणः प्रविशति)

वनदेवता (गणः)—'रिम्, झिम्' इति घनघनो वर्षः। गगने घनघटा। वेपते तरुलता। मयूरीमयूरौ नृत्यतो हर्षात्। दिशि दिशि सचकितसौदामनी चञ्चति। उद्विजते हरिणी त्रासेन।

(निष्क्रान्तः)

(प्रविशति वाल्मीकिः)

वाल्मीकिः—कुत्राहमाश्वासं लभे? अयि जीवित, किं क्रन्दसि रे? व्रजामि मृगयां, पश्यामि यद्येवम् आमोदे मग्नः स्याम्। विस्मृत्य सर्वां ज्वलन्तीं बाधां, वनाद्वनं धावामि। आत्मानं विस्मर्तुमिच्छामि। कथं

विस्मरामि ? कथं गच्छेद् वेदना। धृत्वा धनुः, आनीय बाणं गायन् व्याधगानं सङ्गं गृहीत्वा प्रोत्साही भविष्यामि।

( शृङ्गध्वनिना दस्यूनाह्वयति ; प्रविशन्ति दस्यवः )

दस्युगणः—राजन् ! किमर्थमाह्वयः ? सर्वे आगताः। मन्ये, अद्य श्यामा-मातुः पूजा भवेदिति।

वाल्मीकिः—मृगयार्थं गन्तव्यम्, सह आगच्छत।

प्रथमः—अरे किमाह राजा ? शृणु।

सर्वे—मृगयायै चलत ततः। सर्वानाह्वयत, आनयत। यावद्दलबलं तावत् सर्वमानयत।

( वाल्मीकिः प्रतिष्ठते )

सर्वे—अस्यां वेलायां सर्वे मिलित्वा चलत भोः चलत भोः। उत्तिष्ठत, आगच्छत। इयं रजनी निबिडीभवति। धनुर्बाणलगुडादि गृहीत्वा आगच्छत। राज्ञा ध्माते शृङ्गे, घणघणशब्देन कम्पते वनम्। आकाशो विदीर्येत। उद्विजन्ते पशुपक्षिणस्सर्वे। यामः काननं काननम्। चतस्रो दिशो वृत्वा व्रजामः। हो हो हो।

(प्रविशति वाल्मीकिः)

वाल्मीकिः—गहनं गहनं गच्छत। निशा याति। गच्छत, निपुणं मार्गध्वमरण्ये, करिणो वराहांश्च मार्गध्वम्। इयमेव वेला। गच्छत। निशाचराः पशवः सर्वे बहिरायान्ति। धनुर्बाणांश्च आदत्त हस्ते। चलत त्वरया, चलत। ज्वलयत उल्काः। वेला समागता।

प्रथमः—चल चल भ्रातः ! त्वरस्व, मम अग्रे गच्छ।

द्वितीयः—प्राणान् पणीकृत्य वनमिदं वनान्तरं चालोडयत। केचन मया सह चलन्तु। तस्यां दिशि गच्छत।

प्रथमः—न न भ्रातः ! कार्यं नास्ति । तत्र किञ्चिदपि नास्ति, किञ्चिदपि नास्ति । तस्मिन् गुल्मे किमपि प्राप्स्यसि ।

द्वितीयः—वराहः, वराहः !

प्रथमः—तिष्ठ, अति हि नाम व्यग्रोऽसि । मृगः पलायिष्यते । निभृतमागच्छताश्वत्थतलम् । सज्जीभवत सर्वेऽधुना । सावधानं धत्त बाणं, सावधानं मुञ्चत बाणम् । गतं, गतम् ! पलायत, पलायत, चलत, चलत । कनीयोभिः पृष्ठेऽनुगता आयात । त्वरितं गच्छत ।

(प्रविशति वनदेवतागणः)

वनदेवता—केऽद्य आगताः अस्मिन् घोरनिशीथे, साधूनां काननस्य शान्तिं नाशयन्तः, मत्तकरी यथा पद्मवनं विमलसरोवरं मथ्नाति । स्वपतः पक्षिणः के घ्नन्ति ? वने खरशराग्रैः त्रासेन चकिताः हरिण्यः हरिणाश्च स्खलितचरणैर्धावन्ति कानने । करुणनयनैर्निवृत्य पश्यन्ति । आकुला सरसी । सारसः सारसी च शरवणे प्रविश्य क्रन्दतः । तिमिरं दिक्षु सरति । घोरा यामिनी । विपद्घनच्छाया प्रसरति । किं ज्ञायते ? किं भविष्यति अस्मिन् निशीथे । त्रासेन जीवितमुत्कम्पते ।

प्रथमः—(प्रविश्य) जीवितमादाय आधावः, किमद्य करिष्यसि ? अरे वराहः ! अस्मिन् गुल्मे निगूढो भवामि । अयमेव मर्त्यस्य पराक्रमः ! मत्तो न बिभेषि त्वम् ? भवतु, साधु, धैर्यवन्तमिव त्वां पश्यामि ।

अन्यदस्युः—(पङ्गुर्भूत्वा प्रविशति) किमन्यद् ब्रुवेऽधिकम् । कः कस्य बलिर्भविष्यति । कमपि पङ्गुं मृतं छागं मृगयित्वा आनयम् ।

प्रथमः—तत् ते महान् प्रभावः । अद्य किं करिष्यसि, कुत्र प्राप्स्यसि ?

दस्युगणः—प्रभो महाशय ! विलम्बं न सहामहे । त्वां प्रतीक्षमाणास्तिष्ठामः । मृगयार्थं गन्तव्यम् । परिकरं बध्नीत दृढं । वने विचित्य विचित्य भग्ना म्रियामहे वयम् । त्वं केवलं सुखेनासि । पूरयसि च उदरम् ।

प्रथमः — व्यर्थं तत् कार्यं। अहं सुखमासे। मा कोऽप्येषु मृगेषु मां गिलतु। रक्षितः स्यामहम्। मृगयां गत्वा को वा मर्तुमिच्छेत्। वराहा महिषाश्च शृङ्गैर्मामाधावन्ति। यदि तैर्मृगैर्विद्धोऽहं, न पूरयिष्यते मे उदरम्; भद्रं मदुदरं दारितं भविष्यति।

(इति प्रहसन्तः प्रतिष्ठन्ते मृगयार्थं; पुनः प्रविशन्ति च)

(वाल्मीकिः द्रुतं प्रविशति)

वाल्मीकिः — निधेहि ! प्रक्षिप धनुः। मा मुञ्च बाणम्। हरिणशावकद्वयं प्राणभयेन पलायते। प्रत्यावृत्य पश्यति च पुनः पुनः। कोऽपि दोषो न कृत एतेन। कथं सुकुमारकलेवरे कोमलदेहे मुच्यतां कठिनः शरः? तिष्ठ, तिष्ठ। भो दारुणां क्रीडां त्यज। अद्यप्रभृति विसृजामि एतत् तुच्छं धनुः, बाणं च। (निष्क्रान्तः)

दस्युगणः — इतः परं न भविष्यति, न भविष्यति। आगच्छत सर्वे यास्यामः। धनुर्बाणं च राजा त्यक्तवान्। किमर्थमधुना वयमत्र तिष्ठामः? चलत, चलत, यास्यामोऽद्य।

(प्रविशति वाल्मीकिः)

दस्युगणः — राजन्, दशा ते न समीचीना। रक्तपातात् बिभेषि, लज्जया वयं म्रियामहे। पक्षिणि मारिते, रक्तबाष्पं मुक्त्वा क्रन्दसि। न जाने कस्त्वयि इमं गुणम् आपादितवान्? एवं कदापि नास्माभिः दृष्टम्।

(निष्क्रान्तो दस्युगणः)

## पञ्चमं दृश्यम्

वाल्मीकिः — जीवितस्य किञ्चिदपि न भवति, न भवति। प्रतिगहनं कियत् भ्रमिष्यामि निराशोऽस्मिन् अन्धकारे। शून्यं हृदयमितः परं वोढुं न शक्यम्, न शक्यम्। किमादाय अद्य जीवितं धारयिष्यामि

किं कुर्यामिति न जाने। ये सहचरा आसन् ते त्यक्त्वा गताः। धनुर्बाणं च मुक्तवानस्मि। इतः परं नास्ति किमपि कार्यम्। किं कुर्यामिति वदन् 'हा हा' इति कुर्वन् भ्रमामि।

(प्रविशति व्याधगणः)

प्रथमः—पश्य पश्य। द्वौ पक्षिणौ उपविष्टौ वृक्षे।

द्वितीयः—एहि, निरूपयन् मन्दं मन्दम् उपसर।

प्रथमः—अरे शीघ्रमद्य मुञ्च बाणम्।

द्वितीयः—पदात्पदम् अग्रे गत्वा, करिष्यामि सन्धानम्।

वाल्मीकिः—विरम, विरम। किं करिष्यसि पक्षिणोः प्राणानादाय। द्वावेतौ सुखेन स्तः, मनसि उल्लासेन गायतो गानम्।

प्रथमः—आवृणु सर्वामेतां कथाम्; समीपे मे अद्य मा आगमः। अलमेतया शास्त्रकथया। समयो गलति।

वाल्मीकिः—शृणु शृणु। वृथा रोषं मा कुरु।

व्याधः—तिष्ठ तिष्ठ प्रभो। एष विसृजामि बाणम्।

(एकः क्रौञ्चो हतः)

वाल्मीकिः— मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकम् अवधीः काममोहितम्॥

किमिदं व्याहृतं मया? केयं सुललिता वाणी। किमपि न जाने, कथमहं प्रकाशितवानस्मि देवभाषाम्। ईदृशीं वाचं कथमशिक्षे। पुलकेन पूरितं मनः, प्राणश्च। मधु वर्षति श्रवणयोः। केयं, यां हृदये पश्यामि। घोरान्धकारमध्ये किमिदं ज्योतिः? अवाक् करुणेयं कस्य?

(सरस्वती आविर्भवति)

वाल्मीकिः—केयं ? किं स्थिरा चपला ? किरणैरस्याः सर्वा दिक् उज्ज्वला । कस्याः प्रतिमामिमां पश्यामि ज्योत्स्नाप्रकाशिन्याः ? एतस्या अङ्के निहितं किमिदम् ?

( प्रविशति वनदेवतागणः )

वनदेवता ( गणः )—

नमामि नमामि भारति तव कमलचरणयोः, पुण्या जाता वनभूमिः, धन्यं जातं जीवितम् ।

वाल्मीकिः—पूर्णा जाता इच्छा देवि कमलासने ! धन्यो जातो दस्युपतिः । द्रुतः पाषाणः ।

वनदेवताः—इयं कठिनधरा कमलालया त्वमेवासि । हृदयकमले चरणकमलं ते धेहि ।

वाल्मीकिः—तव कमलपरिमलेन हृदयं पूरय । चिराय कुर्यां तव चरण-सुधापानम् ।

( निष्क्रान्तः वनदेवतागणः )

( कालीप्रतिमां प्रति वाल्मीकिः )

वाल्मीकिः—श्यामे, संप्रति हित्वा व्रजामि, मातः ! पाषाणस्य सुता त्वं पाषाण एवासि । एतदबुद्ध्वा त्वां मातरित्यवदम् । एतावन्ति दिनानि कीदृशीं वञ्चनां कृतवत्यसि ! पाषाणमेव मां कृतवत्यसि । अद्य मम मातरं साक्षाद्द्राक्षम् । नयनजलं गलति मातः । तव कालिमान-मालोक्य भ्रान्तिर्मे गता । तव कान्तिं दृष्ट्वा मनो विस्मरत्यात्मानम् । मां त्वं वञ्चितवत्यसि, अद्य मातः, त्वामहं वञ्चयामि । मायां छित्त्वा मातुरङ्कं व्रजामि ।

## षष्ठं दृश्यम्

वाल्मीकिः—कुत्र अन्तर्हितासि ? सर्वा आशा निमग्नाः । दशदिशासु अन्धकारः । सर्वो गतः त्यक्त्वा माम् । त्वमपि कुतो माम् अत्यजः ?

( लक्ष्मीराविर्भवति )

लक्ष्मीः—किमर्थं दुःखावगाढमनसा भ्रमसि वने वने ? सलिलमिदं द्वयोर्नयनयोः कस्य दुःखेन। कमला ते ददाति रत्नानि राशिभिः। स्फुटिष्यति हासस्ते मलिने मुखे। ब्रूहि, कमला यं वाञ्छति, तस्य किं दुर्लभम् ? दुःखमयायामस्यां धरायां स जीविष्यति सुखेन। सुखमयं मे कमलासनं त्यक्त्वा आगताहम् इदं घोरं वनम् अस्मिन् शुभे क्षणे। पश्य मां चक्षुर्भ्याम्।

वाल्मीकिः—कुत्र सा उषामयी प्रतिमा ? त्वं न सा देवी कमलासना। मा मे छलनम् कुरु। किमानयः ? धनसंमानं न वाञ्छामि। यन्मे जीवितं न वाञ्छति तन्नाहं वाञ्छामि। मणिमयधूलिराशिं न वाञ्छामि। तमादाय ये सुखिनः स्युः, तथा ते भवन्तु नाम। न मे देवि, तत्सुखमभीष्टम् याहि, लक्ष्मि ! अलकाम्; याहि लक्ष्मि अमरान्। एतद्वनं मा एहि। मा एहि अस्य दीनजनस्य कुटीरम्। यां वीणाम् अशृणवं कर्णाभ्यां, मनः प्राणश्च तया भरितम्। गच्छ, किमपि न अभिलषामि, नाभिलषामि।

( लक्ष्मीः अन्तर्हिता। वाल्मीकिः प्रस्थितः। वनदेवतागणः प्रविशति )

वनदेवतागणः—वाणि, वीणापाणे करुणामयि ! अन्धजनाय नयनं दत्त्वा अन्धकारे पुनः अक्षिपः। दर्शनं दत्त्वा कुत्र अन्तर्हितासि देवि ! स्वप्नसमं मेलनं यदि, किम् अददाः चेतनाम्। सोद्वेगं दृश्यते चिरमर्मवेदना। पश्य प्रत्यावृत्त्य एष प्रतिकाननं भ्रमति।

( निष्क्रान्तो वनदेवतागणः )

( प्रविशति वाल्मीकिः, सरस्वत्याविर्भावः )

वाल्मीकिः—इतः पश्य मां देवि। सर्वं कवितामयं जगच्चराचरम्। सर्वं दृष्टयै शोभामयम्। छन्दसा उदेति चन्द्रमाः। छन्दसा कनकरविरुदेति। छन्दसा जगन्मण्डलं चलति। ज्वलन्त्यः कविताः तारकास्सर्वाः। अस्याः कवितायाः मध्ये वर्तमाना का त्वम् देवि ?

आलोके कापि सन्ध्या भाति। अद्य मलयमारुत आकुलः। वने वने, किमिदं, गानं गायन्ति। पुष्पं कथयति जीवितकथाम्। नवा रागा रागिण्यश्च उच्छ्वसन्ति। अनेन आनन्देन अद्य गीतं गायामि। मम हृदयम् अवारितम्। कृपागुणेन अन्धस्य अक्षिणी लब्धे। जीवितान्धकारे त्वमुषामानीतवती। प्रकृतिं रागिणीः शिक्षितवती। त्वं धन्या धन्या, स्थास्यामि चिरकालं चरणं धृत्वा ते।

सरस्वती—दीनहीनबालिकारूपेण पूर्वमागताहं घोरवनमध्ये। द्रवीभूतं पाषाणात्मकं ते मनः येन कारणेन, वत्स, तत् शृणु।

अहं वीणापाणिः, त्वदर्थमागता। शिक्षिष्यामि ते गानम्। तव गानेन द्रवीभविष्यति पाषाणभूतं जीवितम्। यां रागिणीं श्रुत्वा ते द्रुतं कठोरं मनः, सा रागिणी ते कण्ठे ध्वनिष्यति अनुक्षणम्। अधीरो भूत्वा सिन्धुः क्रन्दिष्यति ते चरणतले। चतसृषु दिक्षु दिग्वध्वः आकुला नयनजलैः। मस्तकोपरि ते क्रन्दिष्यन्ति सहस्रं ताराः। अशनिर्द्रवीभविष्यति अश्रुधाराभिः। यस्मिन् करुणरसे अद्य निमग्नं ते हृदयं शतस्रोतोभिः त्वमेव तं जगन्मयं यथा तथा प्रवाहयिष्यसि। यावत् हिमाद्रिः स्थास्यति तावत् ते नाम स्थास्यति। यावत् जाह्नवी प्रवक्ष्यति, तावत् ते काव्यस्रोतः स्थास्यति। सा ते काव्यजाह्नवी प्रवक्ष्यति अयुतहृदयश्मशानानि पवित्रीकुर्वती, मरुभूमिं उर्वरीकुर्वती! मत्पद्मासनतले यदासनं तत् ते नित्यनवनव-गीतैस्सततं भरितं भविष्यति। भविष्यन्ति तव पदतले ते, यावन्तः कविबालकाः। श्रुत्वा ते कण्ठस्वरं शिक्षिष्यन्ते सङ्गीतं कति! इमां गृहाण मदीयां वीणाम्, ददामि ते उपहारम्; यद् गानं गातुमिच्छसि इमां साधयित्वा, तद् ध्वनयिष्यन्ति एतस्याः तन्त्र्यः।

---

# नटीपूजा

अनुवादकः—डा. वे. राघवः

[ रवीन्द्राय कराम्भोजैरञ्जलिं कुरुते जगत् ।
तमोनाशाय जीवाय सत्यधर्माय दृष्टये ॥ ]

( ततः प्रविशति भिक्षुरुपालिनामा )

पूर्वगगनभागे दीप्तं जातं सुप्रभातं तरुणारुणरागे ।
शुभ्रशुभो मुहूर्तोऽद्य, सार्थकं कुरु तम्, अमृतेन पूरय तम् ॥
अमितपुण्यभागी को जागर्ति, को जागर्ति ॥ (इति गीयते)

( अमितपुण्यभागी को जागर्ति, को जागर्ति )

उपालिः—कः कोऽत्र भोः ? भिक्षां देहि । भगवतो बुद्धस्य नाम्ना भिक्षां देहि ।

( प्रविश्य नटी श्रीमती प्रणमति )

शुभं भवतु कल्याणम् । वत्से का त्वम् ?

नटी—राजप्रासादनटी अहम् ।

उपालिः—अस्यां पुर्याम् अद्य त्वमेकैव केवला जागरूकासि ?

नटी—राजकन्यकाः सकला अद्यापि सुप्ताः ।

उपालिः—भगवतो बुद्धस्य नाम्ना भिक्षां देहि ।

नटी—प्रभो, अनुमतिं देहि, राजकन्या आनेष्यामि ।

उपालिः—अद्य त्वचो भिक्षां ग्रहीतुमागतोऽहम् ।

नटी—मत्तः ? अभागिनी खल्वहम् । प्रभोः भिक्षापात्रे यन्मया दीयते तत्कुण्ठितं भविष्यति । किं दास्यामि ? अनुजानीहि ।

उपालिः—त्वदीयं श्रेष्ठं दानम् ।

नटी—किं मे श्रेष्ठं दानम् इति नाहं तत् जाने ।

उपालिः—मैवम् । भगवतो दया तवोपर्यस्ति । स जानाति ।

नटी—प्रभो ! तथा चेत् स स्वयमेव गृह्णातु यन्मय्यस्ति ।

उपालिः—अवश्यं ग्रहीष्यति । ते पूजापुष्पाणि ग्रहीष्यति । ऋतुराजो वसन्तः यथा पुष्पवनमात्मदानाय उद्बोधयति, तथा तवापि तद्दिनं समागतम् । तत्ते निवेदयितुमागतोऽहम् । त्वं भाग्यवत्यसि ।

नटी—अहमपि प्रतीक्षमाणा स्याम् ।

[ उभावपि निष्क्रामतः ]

[ ततः प्रविशन्ति राजकन्याः ]

वासवी—प्रभो ! भिक्षां गृहीत्वा गच्छतु भवान् । मा प्रतिनिवृत्य प्रयातु भवान् । किमिदमापन्नम् ! अपयातोऽयम् !

रत्नावली—वासवि ! किं ते भयम् ? भिक्षाग्राहिणां जनानाम् अभावो नास्ति, भिक्षादायिन एव जना विरलाः ।

नन्दा—मैवं रत्नावलि ! भिक्षाप्रतिग्राहिण एव प्रयत्नेन मार्गितव्या भवन्ति । अद्य व्यर्थं जातं दिनम् ।

[ निष्क्रान्ताः ]

## प्रथमोऽङ्कः

मगधप्रासादस्थमुद्यानम् । ततः प्रविशतः महाराज्ञी लोकेश्वरी, भिक्षुणी उत्पलपर्णा च ।

लोकेश्वरी—महाराजो बिम्बिसारः अद्य मां स्मरति ?

भिक्षुणी—आम् ।

लोकेश्वरी—अद्य तदीयस्य अशोकचैत्यस्य आयोजितायाः पूजाया दिनम् ; मन्ये तदर्थमेव — ।

भिक्षुणी—अद्य वसन्तपूर्णिमा ।

लोकेश्वरी—पूजा ! कस्य पूजा !

भिक्षुणी—अद्य भगवतो बुद्धस्य जन्मोत्सवः । तमुद्दिश्य पूजा ।

लोकेश्वरी—आर्यपुत्रं गत्वा ब्रूहि; अहं मे सर्वां पूजां निःशेषं समापितवतीति । केचित् पुष्पैः, केचिद् दीपैः कुर्वन्तु नाम, अहं मदीयं सर्वमेव प्रपञ्चं रिक्तीकृतवत्यस्मि ।

भिक्षुणी—किमिदमाह महाराज्ञी ?

लोकेश्वरी—मदीय एक एव पुत्रः ! चित्रः, मदीयो राजपुत्रः, तमाकृष्य नीत्वा भिक्षुं कृतवन्तः ! तथापि पूजां कुर्विति मां कथयन्ति ! लताया मूलं छित्त्वा, फलानि मञ्जरीश्च वाञ्छन्ति ।

भिक्षुणी—यं त्वं दत्तवत्यसि, स ते न नष्टः । पूर्वम् उत्सङ्गं तमभजः, अद्य विश्वगं तं भजसि ।

लोकेश्वरी—नारि ! अस्ति ते शिशुः ?

भिक्षुणी—न हि ।

लोकेश्वरी—यदा कदापि आसीद्वा !

भिक्षुणी—अहं प्रथमवयस्येव विधवा ।

लोकेश्वरी—तथा चेत्तूष्णीं भव । यन्न जानासि, मा तद्वद ।

भिक्षुणी—महाराज्ञि ! त्वमेव सर्वप्रथमं सत्यधर्ममाहूय राजान्तःपुरमानयः ! तत्किमेवमद्य ?

लोकेश्वरी—आश्चर्यम् ! तन्मनसि वर्तत इति पश्यामि । अहं त्वचिन्तयम्, इयं कथा गुरुणा ते विस्मृता इति । भिक्षुं धर्मरुचिमाहूय प्रतिदिनं कल्याणपञ्चविंशतिकायाः पाठं कारयित्वा, तदनन्तरमेव जलग्रहणमकरवम् । एकशताय भिक्षुभ्यो अन्नं दत्त्वा पश्चादेव मे उपवासभङ्गोऽभूत् । प्रतिवत्सरं वर्षावसाने समस्तस्यापि संघस्य चीरवस्त्रत्रयदानमिति मे व्रतमभूत । बुद्धधर्मवैरिणो देवदत्तस्य उपदेशेन यस्मिन् दिने अत्र सर्वेषां मनः क्षुभितमभूत्, तदा अहमेकैव अविचलिता अतिष्ठम् । भगवन्तं बुद्धमस्मिन्नुद्याने अशोकतले उपवेश्य सकलं जनं धर्मतत्त्वम् अश्रावयम् । निष्ठुर ! अकृतज्ञ ! अन्ते एतन्मे पारितोषिकम् ! या महिष्यां विद्वेषेण ज्वलन्त्यः अस्माकमन्ने विषं अमिश्रयन्, न किञ्चिदपि तासामापतितम् । न केवलं तत्, तासामपत्यानि राजभोगे वर्तन्ते ।

भिक्षुणी—महाराज्ञि ! सांसारिकेण मूल्येन धर्मस्य मूल्यं नैव गण्यते । किञ्च किं स्वर्णस्य मूल्यं, आलोकस्य मूल्यं च एकं भवेत् ?

लोकेश्वरी—यस्मिन् दिने देवदत्तस्य समीपे आत्मसमर्पणमकरोत् कुमारः अजातशत्रुः, तदा मूढाहम् अहसम् । अचिन्तयं भग्नां तरीमारुह्य समुद्रस्य पारं गन्तुमिच्छतीति । पितरि सत्येव देवदत्तस्य शक्त्या राजा भविष्यामीति एषैवाशाभूत्तस्य । अहं निर्भयं सगर्वं च अवोचम्—देवदत्तापेक्षया यस्य गुरोः पुण्यबलमधिकं, तस्य प्रसादेन अमङ्गलं नङ्क्ष्यति । एतावानासीन्मे विश्वासः । भगवन्तं बुद्धमानाय्य तद्द्वारा आर्यपुत्रस्य आशीर्वादमदापयम् । तदा जयः कस्याभूत् ?

भिक्षुणी—तव । तं जयं त्वदभ्यन्तरतो बहिर्गन्तुं मानुमन्यस्व ।

लोकेश्वरी—मदीयो जयः ?

भिक्षुणी—नो चेत् कस्य ? पुत्रस्य राज्यलोभं दृष्ट्वा महाराजेन बिम्बिसारेण स्वेच्छया सिंहासनं त्यक्तुं यदा पारितमभूत्, तदा तेन यादृशं राज्यं जितम्— ।

लोकेश्वरी—तादृशं राज्यं केवलं कथानिष्ठम् । क्षत्रियस्य राज्ञः पक्षे न तत् शोभनम् । माम् इतः पश्य-अहमद्य सति स्वामिनि विधवा ! सति पुत्रे पुत्रहीना ! प्रासादमध्ये स्थितापि निर्वासिता ! नैषा वृथा कथा । ये तव धर्मं कदापि नामन्यन्त, ते मां दृष्ट्वा अवज्ञया हसन्तो गच्छन्ति । यं त्वं वज्रसत्त्वं वदसि, स इह कुत्र ? तस्य वज्रेण किं नैतेषां मस्तकोपरि पतितव्यम् ?

भिक्षुणी—महाराज्ञि ! एषु मध्ये सत्यं कुत्रास्ति ? एषः क्षणिकः स्वप्नः ! हसन्त्येव तत् अपसारय ।

लोकेश्वरी—स्वप्न एव न सन्देहः । नैतं स्वप्नमहमभिलषामि । अन्यं स्वप्नं यस्य बलेन वित्तं स्यात्, पुत्रः स्यात्, बहुमानः स्यात् । तेन स्वप्नेन विकसिता यास्तत्र उच्चैःशिरस्का गच्छन्ति, ता गत्वा कथय; तां पूजां ताः कुर्वन्तु ।

भिक्षुणी—तद् गच्छामि किम् ?

लोकेश्वरी—गच्छ; किन्तु न ता अहमिव मूढाः । तदीयं किमपि न नश्येत् । सर्वं तिष्ठेत् । न तासां बुद्धोऽभिमतः । शाक्यसिंहस्य दया तासामुपरि न पतिता । तत एव ता रक्षिताः । किमेवं स्तब्धा तिष्ठसि ? धैर्यव्याजं कर्तुं शिक्षितवत्यसि ?

भिक्षुणी—कथमहं वक्ष्ये ? अद्य मे आन्तरं धैर्यं भज्यमानं वर्तते ।

लोकेश्वरी—धैर्यभङ्गो भवति, तथापि अन्तर्मनसि मां प्रति क्षमां करोषि । त्वादृशानामेषा मौनावज्ञा असह्या, अपेहि ।

( भिक्षुणी प्रस्थानोद्यता )

शृणु शृणु भिक्षुणि ! चित्रेण किमपि नूतनं नाम गृहीतम् । जानीषे त्वम् ?

भिक्षुणी—जानामि, कुशलशील इति ।

लोकेश्वरी—यन्नाम तस्य माता अदात्, तद् अद्य तस्य अशुचि भाति। तदपहाय गतवान्।

भिक्षुणी—महाराज्ञी यदि इच्छति, तदा एकं दिनं तमत्र आनेतुं पार्यते।

लोकेश्वरी—अहमिच्छामि? त्यक्त्वा लज्जाम्? अद्य त्वया तम् आनेतुं मया एष्टव्यं, यया स प्रथममस्मिन् लोके आनीतः।

भिक्षुणी—तदादेशं कुरु, अहं यामि।

लोकेश्वरी—तिष्ठ तावत् किञ्चित्। अपि त्वं तं द्रक्ष्यसि?

भिक्षुणी—आम्।

लोकेश्वरी—साधु। अप्येकवारं तम्—यदि स—न हि—भवतु।

भिक्षुणी—अहं तं कथयिष्यामि। यदि शक्यते, तं द्रक्ष्यसि।

लोकेश्वरी—यदि शक्यते, यदि शक्यते, यदि शक्यते! नाडीनां रक्तं दत्त्वा तत्पालनं यदाहमकरवं, तदा, तत्र 'यदि शक्यत' इति नाभूत्। अस्मिन् दिने यः तदीयमातृ-ऋणस्य प्रभावः, सः अत्र 'यदि शक्यते' इत्येकस्मिन् शब्दे तिष्ठति। एतमेव धर्मं वदन्ति, मल्लिके!

(ततः प्रविशति चेटी मल्लिका)

मल्लिका—देवि!

लोकेश्वरी—कुमारस्य अजातशत्रोः उदन्त उपलब्धः?

मल्लिका—उपलब्धः। देवदत्तमानेतुं स गतः। अस्मिन् राज्ये त्रिरत्नपूजायाः किमपि नावशिष्येत।

लोकेश्वरी—भीरुः! राज्ञः साहसं विना राजत्वं करोति! बुद्धधर्मे कियती भक्तिरस्तीत्यस्मिन् अहमेव निश्चितं प्रमाणम्। तथापि अपदार्थस्य तस्य देवदत्तस्य छायामनाश्रित्य इदं मिथ्याभूतमुपेक्षितुं धैर्यं नास्ति।

मल्लिका—महाराज्ञि ! येषां बह्वस्ति तेषां बहु भयं भवति । स राज्येश्वरः, अत एव भयात् सकलाभिः शक्तिभिस्सह सन्धिं कर्तुं प्रयतते । बुद्धशिष्येभ्यः समादरो यदा अधिको भवति, तदा स देवदत्तशिष्यानाहूय तेभ्यः ततोऽप्यधिकं समादरं करोति । भाग्यस्य द्वयोरपि पक्षयोः अनापदं संपादयति ।

लोकेश्वरी—मदीयं भाग्यं सर्वदैव निरापत्कम् । मदीयमिति नास्ति किञ्चित् । अत एव मिथ्याभूतस्य सहायीकरणं नाम दुर्बला बुद्धिः अपगता ।

मल्लिका—देवि ! भिक्षुण्या उत्पलपर्णाया इव एतद्वचः । सा वदति - समीचीनं खलु भाग्यं महाराज्ञ्या लोकेश्वर्याः, यस्या विषये, मिथ्या यैः शङ्कुभिर्मनुष्यं बध्नाति, ते सर्वे भगवतो महाबोधेः कृपया भग्नतन्त्रीका जाताः ।

लोकेश्वरी—पश्य, एतास्सर्वाः प्रतारिका मिथ्यावाचः शृण्वत्या मम कोपो जायते । त्वदीयेन अतिनिर्मलेन निस्सत्त्वेन सत्येन स्थीयतां त्वया । मदीयानेतान् मृत्पूर्णान् शङ्कून् मह्यमेव पुनः प्रयच्छ । ततः पुनरपि अशोकचैत्ये दीपान् प्रज्वालयिष्यामि; श्रमणशताय अन्नं दास्यामि; यावन्तस्तेषां मन्त्राः सन्ति, तान् सर्वान् आमूलमावर्तयन्ती यास्यामि । यदि न तत् स्यात्, देवदत्त आयातु; स सत्यो वास्तु मिथ्या वास्तु । गच्छ । प्रासादशिखरमारुह्य द्रक्ष्यामि - कियद्दूरे ते वर्तन्त इति ।

( उभे निष्क्रान्ते )

( ततः प्रविशति वीणाहस्ता श्रीमती )

श्रीमती—( लतावितानतले आसनमास्तीर्य सुदूरं परावृत्य पश्यन्ती ) समयः प्राप्तः, आगच्छत ।

( स्वगतं गायति )

निशीथे किमुक्त्वा रहस्स प्रयातः
न जानाम्यहं तत् न जानाम्यहं तत् ।
तदासीन्नु सुप्तौ तदासीन्नु बोधे
न जानाम्यहं तत् न जानाम्यहं तत् ॥

( ततः प्रविशति मालती )

मालती—त्वं श्रीमती ?

श्रीमती—आम् हला ! किमर्थम् ? ब्रूहि ।

मालती—प्रतीहार्या प्रेषितास्मि त्वत्तः गानं शिक्षयितुम् ।

श्रीमती—प्रासादे त्वं नैव मया दृष्टपूर्वा ।

मालती—नूतनतया समागतास्मि ग्रामतः । मम नाम मालती ।

श्रीमती—किमर्थमायातासि बाले ? तत्र दिनानि किं दुरतिवाहानि ? तत्र त्वमभवः पूजापुष्पं, देवताः सानन्दमासन् ; अत्र भोगमाला भविष्यसि, हसिष्यन्ति चोपदेवताः । व्यर्थो भविष्यति त्वदीयो वसन्तः । गानं शिक्षितुमागतासि ! एतावत्येव ते आशा ।

मालती—सत्यं कथयिष्यामि, ततोऽपि अधिका आशा वर्तते, आख्यातुं लज्जा भवति ।

श्रीमती—आ अवगच्छामि, राज्ञी भवितुं दुराशा अस्ति । पूर्वस्मिन् जन्मनि यदि अनेका दुष्कृतीः कृतवत्यसि, तदा एवं भवितुं पार्यते । वन्यः पक्षी सौवर्णं नीडं दृष्ट्वा लोभं करोति । तत एव तस्य पक्षयोः दुष्टबुद्धिरारोहति । गच्छ, प्रतिनिवृत्य गच्छ, अद्यापि प्रतिगन्तुं समयोऽस्ति ।

मालती—भगिनि ! किं त्वं वदसि ? नाहं सम्यगवगन्तुं शक्नोमि ।

श्रीमती—अहं कथयामि

बन्धो भाति कुतस्ते
भूषणवेषेण हन्त मुग्धदुर्भाग्ये ।
मरणं मोहयति त्वां
डोलायां ते स्मितेन दुर्भाग्ये ॥

मालती—त्वं किञ्चिदपि नावगच्छसि, तस्मात् स्पष्टं कथयिष्यामि । श्रुतं मया कदाचित् भगवान् बुद्धः आसीनः अस्मिन् आरामे अशोकतले । महाराजो बिम्बिसारः अस्मिन्नेव स्थाने वेदिं निर्ममे ।

श्रीमती—आम् । सत्यम् ।

मालती—राजगृहदारिकाः सन्ध्यावेलायां तत्र पूजां कुर्वन्ति । मम यदि पूजायाम् अधिकारो नास्ति, तस्मिन् स्थाने धूलीर्मार्जयिष्यामि । अनयैव आशया अत्र गायिकागणे प्रविष्टास्मि ।

श्रीमती—एहि ! एहि ! भगिनि ! साधु, साधु ! राजकन्यकानां हस्तेषु पूजादीपाः धूमं विसृजन्ति भूयसा, आलोकं च स्वल्पतया । त्वदीयस्य हस्तद्वयस्य प्रतीक्षा वर्तते । भवतु, इयं कथा केन कथिता ते ?

मालती—कथं वक्ष्यामि भगिनि ! अद्य वाते अग्निसदृशः कोऽपि मन्त्रो लग्नः । तदानीं मे भ्राता गतः, तस्य वयः अष्टाविंशतिः । तं हस्तयोरालम्ब्य जिज्ञासितं मया 'भ्रातः क यासि' इति । स आह 'मार्गितुम्' इति ।

श्रीमती—नदीनां सर्वा वीचीः समुद्रोऽद्य एकेन स्वरेण आह्वयति । पूर्णश्चन्द्र उदितः । ( मालत्या हस्तमादाय दृष्ट्वा ) किमिदम् , तव हस्ते अङ्गुलीयकं दृश्यते । हन्त ! कीदृशमिदं वर्तते ! नेयं स्वर्गमन्दारकलिका मृत्तिकामूल्याय विक्रीता ।

मालती—यद्येवं, उद्घाट्य कथयिष्यामि ते । त्वया सर्वम् अवगन्तुं पार्यते ।

श्रीमती—कियदिव क्रन्दित्वा अवगमनशक्तिः आसाद्यते ?

मालती—ते धनिकाः, वयं दरिद्राः। दूरात् तूष्णीं तं दर्शंदर्शमासम्। एकस्मिन् दिने स्वयमागत्य आह—"मालती मे साधु रोचते" पिता मे आह - मालत्या इदं सौभाग्यम्। सर्वमायोजनं यस्मिन् दिने पूर्णं तस्मिन् दिने स आगत्य द्वारि अतिष्ठत्—न वरवेषेण, भिक्षुवेषेण-काषायं वस्त्रम्, हस्ते भिक्षापात्रम्। आह च सः—'यद्यावयोस्सङ्गमो भावी, स मुक्तिमार्गे स्यात्, अत्र न' इति। भगिनि, नान्यथा मन्यस्व - अद्यापि चक्षुषोर्जलमागच्छति, फल्गु खलु मे मनः।

श्रीमती—अश्रुजलं प्रवाहय, मुक्तिपथे या धूल्यः तास्सर्वाः प्रशमिता भवेयुः।

मालती—प्रणामं कृत्वा अवोचम्—'मम बन्धो न क्षीणः। यदङ्गुलीयकमामोचयिष्यामीति अकथयः तत् पूरयित्वा गच्छ इति।' एतत्तद् अङ्गुलीयकम्। भगवत आरव्याम्, एतत्, यदा मद्धस्तात् च्युतं भगवतः पादयोः पतेत् तस्मिन् दिने मुक्तिमार्गे समागमो भविष्यति।

श्रीमती—कति दारिकाः गृहमाबबन्धुः, अद्य च ताः गृहं बभञ्जुश्च। कति दारिकाः चीरधराः मार्गे प्रस्थितवत्यः ? को जानाति, तत् किं पथः आकर्षणशक्तिः, उत पथिकानाम् ? कतिवारं हस्तयोरञ्जलिं बध्वा मनसि प्रार्थनां कृत्वा अवोचम्—'महापुरुष! उदासीनो मा भूः। अद्य प्रतिगृहं नारीणां चक्षुषि जलं त्वं स्रोतोरूपेण प्रावाहयः। त्वमेव ताभ्यः शान्तिं देहि। (निरूप्य) राजप्रासाददारिका आगच्छन्ति।

(वासवी, नन्दा, रत्नावली अजिता, मल्लिका, भद्रा एताः प्रविशन्ति)

वासवी—केयं दारिका ? निरूपयामि तावत्। शिरसि निबद्धधम्मिल्ला अलके दत्तजपापुष्पा। नन्दे, एहि पश्य! वेण्यां दत्त-अर्ककुसुम-माला; उच्चैरुद्धृत्य केशभारं निबद्धवती। गले भाति गुञ्जाफलहारः। श्रीमति! एषा कुत आगता ?

श्रीमती—ग्रामतः। अस्या नाम मालती।

रत्ना—लब्धवत्यसि किमपि शरव्यम्। कदाचिदेनां शिष्यां करिष्यसीति भाति। अस्मानुद्धर्तुं न पारितम्; इमां ग्रामदारिकां गृहीत्वा मुक्तिव्यवसायं करोषि।

श्रीमती—ग्रामदारिकायाः किमर्थं मुक्तिभावना? तत्र यत् स्वर्गहस्तनिर्वर्तितं शिल्पकर्म न तत् पिहितं मृत्तिकया वा, मणिमाणिक्यर्वा। अत एव स्वर्गलोकः एतान् सम्यग् अवगच्छति।

रत्ना—स्वर्गं यद्यपि नाहं गतवती, तथापि तवोपदेशबलेन नाहं तत्र गन्तुमिच्छामि। नास्ति मे गणेशमूषिककृपया सिद्धिं लब्धुमुत्साहः। प्रत्युत, यमराजस्य महिषमङ्गीकर्तुं सन्नद्धास्मि।

नन्दा—रत्नावलि! तव वाहनं सज्जमस्ति-लक्ष्म्या उलूकः; पश्य अजिते! श्रीमती किमर्थमेवमुपद्रूयते? नैषा उपदेशं दातुमुन्मुखी समागता।

वासवी—अस्या मौनमपि उपदेशराशीभवति। तत्र पश्य; तूष्णीं हसन्ती वर्तते। किं न तद् उपदेशायते?

रत्ना—महान् उपदेशः। अर्थतः न तथा भवति किम्? मधुरेण कटुं जेष्यति, हासद्वारा भाष्यम्।

वासवी—श्रीमति, किं न किञ्चिदपि कलहायसे। किमेतावान् मधुरिमा सह्यः? मनुष्यलज्जापनात् मनुष्यकोपनं परं श्रेयः।

श्रीमती—अन्तस्तावद्यदि वयं साध्व्यो भवामः, बहिः असाधुतया गृह्यमाणे न कोऽपि दोषः। कलङ्कस्य स्वीकारः चन्द्रस्य शोभां धत्ते, किन्तु अमावास्या यदि मेघपुस्तं धत्ते?

अजिता—तत्र पश्य। ग्रामदारिका अवाक् किमभि चिन्तयन्ती वर्तते। राजप्रासाददारिकाणां रसनायां रसो नास्ति; केवलं लालैवास्ति। किं ते नाम? तद् व्यस्मरम्।

मालती—मालती।

अजिता—किं चिन्तयन्ती आसीः, कथय।

मालती—भगिन्यां स्निह्यामि, अत एव व्यथा जायते ।

अजिता—येषु जनेषु वयं स्निह्यामः, तेभ्य एव व्यथादानच्छलं कुर्मः । एष राजप्रासादीयः अलङ्कारशास्त्रनियमः । एतदवधारय ।

भद्रा—मालति ! त्वं किमपि वक्तुकामेव ? उच्यतां नाम । अस्मान् प्रति कीदृशस्ते भाव इति ज्ञातुमतीव कुतूहलिनी अहम् ।

मालती—मयैतत् विवक्षितम्—आम्, भवत्यः मदीयां कथां शृण्वत्यः एतावन्मह्यं प्रीयन्ते, मदीयगान-श्रवणसमये तु तत्प्रेम गलतीति ।

( सर्वा उच्चैः हसन्ति )

वासवी—आम्, आम् । राजप्रासादीयं व्याकरणचुञ्चुमाह्वयत । तस्य शिक्षा सम्बोधनकारकपर्यन्तं नागता ।

रत्ना—आम् वासवि ! आम् राजकुलमुकुटमणिमालिके !

वासवी—आम् रत्नावलि ! आम् भुवनमोहनलावण्यकौमुदि ! व्याकरणे कीयं नूतना संपत् संबोधने ! आम् ।

मालती—भगिनि ! किमेता मां प्रति कुप्यन्ति !

नन्दा—नास्ति ते भयं मालति ! दिग्बालिका यदा शेफालिकावने शिलावृष्टिं कुर्वन्ति तदा न कोपेन कुर्वन्ति ; तासाम् आदरप्रदर्शनपथस्तादृशः ।

अजिता—पश्य तत्र, श्रीमती स्वगतमेव गानं कुर्वाणा भाति । अस्माकं कथाः तस्याः कर्णे न पतन्ति । श्रीमति ! कण्ठमुद्धाट्य गीयतां नाम ; वयमप्यनुगास्यामः ।

( श्रीमती गायति )

निशीथे किमुक्त्वा रहः स प्रयातः
न जानाम्यहं तत् न जानाम्यहं तत् ।
तदासीन्नु सुप्तौ तदासीन्नु बोधे
न जानाम्यहं तत् न जानाम्यहं तत् ॥

नानाकार्ये मते नाना पुनर्गेहे पुनः पथि ।
क्षणे क्षणे ध्वनति यत् न जाने तदगोचरम् ॥

अकारणं मे हृदयं व्यथयत् किन्तु तद् भवेत् ।
न जानामि न जानामि किं भयं तद् जयोऽथ किम् ॥

'नेतः परम्' इति ब्रूते वारं वारं हि कर्णयोः ।
'दूरं चराम' इति च स्वरैर्नानाह किन्तु तत् ॥

किं तद् ध्वनति मे चित्ते किन्तु तद् गगने तथा ।
ध्वनतीह, न जानामि, नैव जानामि किन्तु तत् ॥

वासवी—मालति ! तव चक्षुषी जलभरिते जाते ! एतस्मिन् गाने किमवगतं त्वया ब्रूहि ।

मालती—श्रीमत्या कस्यापि कण्ठध्वनिः श्रुतः ।

वासवी—कस्य ?

मालती—यस्य कण्ठध्वनिं श्रुत्वा मे भ्राता प्रव्रजितः, यस्य ध्वनिना मे .... ।

वासवी—ते .... .... कः .... .... ?

श्रीमती—मालति मे भगिनि ! तूष्णीं भव, उपरि मा ब्रूहि । चक्षुषी मार्जय । क्रन्दितुं नेदं स्थानम् ।

वासवी—तां किमर्थं न्यवारयः श्रीमति ! किं मन्यसे त्वं, वयं केवलं हसितुमेव जानीम इति ।

भद्रा—कुत्र हास्यं न शोभत इति किं न वयं सर्वथा न जानीमः ?

मालती—राजकुमारि ! अद्य वाते वाते कथा चलति; युष्माभिः न श्रुता किम् ?

नन्दा—प्रभातालोके पद्मानां दलानि विकसन्ति, किन्तु न राजप्रासादस्य भित्तयः उद्घाटयन्ते ।

( ततः प्रविशति लोकेश्वरी; सर्वाः प्रणमन्ति । )

लोकेश्वरी— न सोढुं पारयामि । किं न श्रूयते पथि पथि स्तवध्वनिः ?— "ओं नमो बुद्धाय गुरवे" "नमः संघाय महत्तमाय"—अस्मिन् श्रूयमाणे अद्य मनसि मे अन्तः कंप उदेति ।

( कर्णौ हस्ताभ्यां पिधाय )

अद्यैवैतत् समापयितुमिच्छामि, अद्यैव ।

मल्लिका—देवि, शान्ता भव ।

लोकेश्वरी—शान्तिं कथं भजेयम् ? यो मन्त्रः क्षान्तिं दास्यति—"नमः शान्ताय महाकारुणिकाय" इति, स मन्त्र इतः परं नास्ति । 'नमो वज्रक्रोधडाकिन्यै, नमः श्रीवज्रमहाकालाय ।' अस्त्रद्वारा, अग्निद्वारा, रक्तद्वारा जगति शान्तिरेष्यति । नो चेत् मातुरुत्सङ्गं हित्वा पुत्रो यास्यति । सिंहासनात् राजमहिमा जीर्णपत्रमिव लुलितं पतिष्यति । यूयं कुमारिकाः अत्र किं कुरुथ ?

रत्ना—( हसन्ती ) अपेक्षमाणा उद्धारं वर्तामहे । मलिनं मनः निर्मलीकर्तुं श्रीमत्याः शिष्यभावपथे शनैः शनैः पुरोगामिन्यो भवामः ।

वासवी—अश्राव्या इयं तव अत्युक्तिः ।

लोकेश्वरी—अस्या नट्याः शिष्याः ! अन्ते इदमेव घटिष्यति—स एव धर्म आगतः । परित्राणोपदेशमानयन्ती पतिता उत्थास्यति । मन्ये श्रीमती अद्य अकस्मात् साध्वी सञ्जाता । यदा भगवान् बुद्धः अशोकवनमागतः, राजपुरीयाः सर्वे द्रष्टुमागताः । इमामपि दयां कृत्वा आकारयम् ; पापिष्ठा नागमत् । तथापि संप्रति सदा भिक्षुरुपालिः राजप्रासादे एतस्या एकस्या एव हस्ततो भिक्षां ग्रहीतुम् आगच्छति । सा राजकुमारिका अवजानाति । मूढाः ! राजवंशदारिका भूत्वा यूयमधुना अमुं धर्ममभ्यर्थयध्वे । उच्चमासनमाकृष्य पांशुषु निपात-

यिष्यति अयं धर्मः। यत्र राज्ञः प्रभाव आसीत् तत्र भिक्षोः प्रभावः भविष्यति। एतमेव धर्मं वदत यूयम् आत्मघातिन्यः ? (श्रीमतीं विलोक्य) नटि ! उपालिस्ते कं मन्त्रमदात्, उच्चारय, द्रक्ष्यामः। पश्य कियदिव साहसम्। पापाया रसनायाः किं पार्श्ववायुर्नागमिष्यति ?

श्रीमती—(अञ्जलिं बद्ध्वा उत्तिष्ठन्ती)

ओं नमो बुद्धाय गुरवे, नमो धर्माय तारिणे।
नमः संघाय महत्तमाय नमः।

लोकेश्वरी—ओं नमो बुद्धाय गुरवे। भवतु, भवतु, तिष्ठ, तिष्ठ।

श्रीमती—मद्विताय अनाथानुकम्पाय विभो ते नमः।

लोकेश्वरी—(वक्षसि कराघातेन) अयि, अनाथा, अनाथा। श्रीमति एकवारं भण - महाकारुणिक, अनाथनाथ।

(उभे मिलित्वा आवर्तयतः।)

महाकारुणिको नाथः सर्वप्राणिहिताय सः।
सर्वपारमितापूर्त्या प्राप्तः संबोधिमुत्तमाम्॥

लोकेश्वरी—अलमलम्। इतः परं न। "नमो वज्रक्रोधडाकिन्यै"।

(ततः प्रविशति अनुचरी)

अनुचरी—इतो निभृतमेत (इति राज्ञीं स्वपार्श्वमाहूय - जनान्तिकं) राजकुमारः चित्रः प्राप्तः साक्षाद् द्रष्टुं जननीम्।

लोकेश्वरी—क आह धर्मो मिथ्येति। पुण्ये मन्त्रे उच्चारितमात्र एव अमङ्गलं नष्टम्। अयि विश्वासहीनाः। यूयं मदीयं दुःखं दृष्ट्वा मनसि अहसत। महाकारुणिको नाथः। तस्य करुणायाः कियती महती शक्तिः। प्रस्तरोऽपि द्रविष्यति। इदमहं वः सर्वाभ्यः उक्त्वा गमिष्यामि। प्राप्स्यामि मे पुत्रकम्, प्राप्स्यामि मे सिंहासनम् ! ये भगवन्तम् अवमन्येरन्, द्रक्ष्यामि तेषां दर्पः कति दिनानि

स्थास्यतीति । बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, संघं शरणं गच्छामि । (इति वदन्ती अनुचर्या सह निष्क्रान्ता) ।

रत्ना — मल्लिके ! वातोऽधुना कुतो दिशो वीजते ?

मल्लिका — अद्य आकाशे सर्वत्रैव अस्यैव उन्मादस्य वातः । अस्य गतौ स्थिरता कुत्र ? अकस्मात् कं कस्यां दिशि आकृष्य नेष्यतीति कः कथयितुं पारयिष्यति ? स कलन्दको नाम यः चत्वारिंशद् वर्षाणि द्यूतेन कालमयापयत्, सः अकाण्डे आदरार्हः अर्हन् सञ्जातः । किञ्च नन्दिवर्धनो नाम यज्ञे यः सर्वस्वदानं प्रतिज्ञातवान्, सोऽद्य ब्राह्मणे दृष्टमात्र एव तं हन्तुमुद्यतः ।

रत्ना — एवं च राजकुमारः चित्रः पुनरपि समागतः !

मल्लिका — पश्य अवसानपर्यन्तं किं भवतीति ।

मालती — भगिनि, श्रीमति । भगवान् दयावतारः यदात्र आगतः तस्मिन् दिने तं द्रष्टुं त्वं नागमः ! किमिदं सत्यम् ?

श्रीमती — सत्यं । तस्य दर्शनं नाम पूजादानं भवति । अहं मलिना, मयि नैवेद्याय प्रस्तुतं किमपि नासीत् ।

मालती — हन्त हन्त ! ततः परं किमासीत् ?

श्रीमती — एतावत्या लघुतया यदि तदन्तिके गम्यते, तद्गमनं व्यर्थं भविष्यति । साक्षाद्दर्शनेनैव किं स द्रष्टव्यः, तत्कथां श्रुत्वैव किं स श्रोतव्यः ?

रत्ना — अहो ! इदमस्मान् कटाक्षयति । यदि किञ्चिदिव दाक्षिण्यपवनो भवति, तदा नट्याः सौजन्यावरणम् अपसरति ।

श्रीमती — कृत्रिमसौजन्यदिनानि मे गतानि । मिथ्यास्तवं न करिष्यामि । स्पष्टं कथयिष्यामि । ते चक्षुषी यं पश्यतः तं न पश्यसि ।

रत्ना — वासवि, भद्रे, अस्या नट्याः गर्वं कथं सहते ?

वासवी—बहिस्तः यदि सत्यं सोढुं न पार्यते, तदा अन्तस्तः मिथ्या सोढव्यं भविष्यति। श्रीमति! पुनरेकवारं ते मन्त्रगानं कुरु; मनःकण्टकानां तीक्ष्णता क्षीयताम्।

श्रीमती—ओम् नमो बुद्धाय गुरवे। नमो धर्माय तारिणे। नमः संघाय महत्तमाय नमः।

नन्दा—वयं भगवन्तं द्रष्टुं गताः। श्रीमत्यास्तु हृदये भगवान् स्वयमेव आगत्य दर्शनमदात्!

रत्ना—विनयं व्यस्मरस्त्वं नटि! एतद् वचः न किं खण्डयिष्यसि?

श्रीमती—किं कुर्यां राजकुमारि! स यदि मम हृदये पादं न्यस्यति तत् किं मम गौरवात्, उत तस्यैव?

वासवी—तिष्ठ, तिष्ठ। कथा प्रतायमाना भवति। त्वं गानं कुरु—

(श्रीमती गायति)

द्वारं त्वमागमः किं मे मार्गयन् हृदयं मम।
येन ते ध्वनिना पुष्पं गोपनाद् बहिरागतम्।
नम्रशाखासु तेनैव ध्वनिनाद्य समाहृय॥

यस्य ध्वनेस्ते बाधायां हरितप्राणगोपिनी।
धूलिर्मुखं विवृणुते तवाह्वयति स ध्वनिः॥

आलोकधारां वर्षन्ती करैरपहरन्त्यपि।
अन्धकारं समायाति नवीना सहसा ह्युषा॥

(नेपथ्ये)

"ओं नमो रत्नत्रयाय बोधिसत्त्वाय महासत्त्वाय महाकारुणिकाय"

(ततः प्रविशत्युत्पलपर्णा। सर्वा भगवतीं नमस्कुर्वन्ति।)

सर्वाः—भगवति, नमस्कुर्मः।

भिक्षुणी—भवतान्मङ्गलं सर्वं, रक्षन्त्वखिलदेवताः ।

सर्वं बुद्धानुभावेन श्रेयो भवतु ते सदा ॥

स्वस्ति ते भवतात् सदा श्रीमति !

श्रीमती—क आदेशः ?

भिक्षुणी—अद्य वसन्तपूर्णिमा ; भगवतो बोधिसत्त्वस्य जन्मोत्सवः ; अशोकवने तदीयासनस्य पूजानिवेदनस्य भारः श्रीमत्या उपरि निहितः ।

रत्ना—मन्ये अन्यथा अशृणवम् । कस्याः श्रीमत्याः कथा प्रस्तुता ?

भिक्षुणी—अस्याः । अस्या एव श्रीमत्याः ।

रत्ना—अस्या राजप्रासादनट्याः ?

भिक्षुणी—आम् । अस्या एव नट्याः ।

रत्ना—स्थविरेभ्य एव ते आदेशो गृहीतः ?

भिक्षुणी—तेषामेवायमादेशः ।

रत्ना—के ते स्थविराः ? तेषां नामानि श्रोतुमिच्छामि !

भिक्षुणी—उपालिरेकः ।

रत्ना—उपालिः ? स नापितः ।

भिक्षुणी—सुनन्दोऽप्येवमाह ।

रत्ना—स गोपालपुत्रः ।

भिक्षुणी—सुनीतेरादेशोऽप्येवमेव ।

रत्ना—स एव पुक्कसजातीयः ?

भिक्षुणी—राजकुमारि, जात्या एते सर्वेऽपि समाः । तेषामाभिजात्यं प्रति किं न जानासि त्वम् ?

रत्ना—निश्चयेन न जानामि ; मन्ये एषा नटी जानाति । मन्ये अस्या जातेः विशेषतः प्रभेदो नास्तीति । नो चेत् एतावान् ममताबन्धः कुतः ?

भिक्षुणी—सत्येयं कथा - यदद्य राजपिता बिम्बिसारः राजगृहनगर्या निर्जनवासतः स्वयमागत्य व्रतानुष्ठानमिह करिष्यति। तमभिनन्दनैस्संवर्ध्य आनेतुं गच्छामि।

( भिक्षुणी प्रस्थिता )

अजिता—कुत्र गच्छसि श्रीमति ?

श्रीमती—अशोकवने आसनवेदिं धावयितुं गच्छामि।

मालती—भगिनि ! मामपि नय।

नन्दा—अहमपि गमिष्यामि।

अजिता—मन्ये किं नाहमप्यागमिष्यामि ?

वासवी—अहमपि द्रक्ष्ये युष्माकमनुष्ठानं कीदृशमिति।

रत्ना—शोभते ! श्रीमती पूजायामुद्यता भवेत्, यूयं परिचारिकादलं भूत्वा चामरं वीजयिष्यथ !

वासवी—किञ्च, त्वम् अत्रत्यैव अभिशापस्य उष्णं निश्वासं विस्रक्ष्यसि। तेन अशोकवनं न दह्येत, श्रीमत्याः शान्तिरपि अक्षुण्णा तिष्ठेत्।

( रत्नावलीं मल्लिकां च वर्जयित्वा शिष्टाः सर्वाः प्रस्थिताः )

रत्ना—सहे न, सहे न। इदमेकपद एव सर्वं विरुद्धं भवति। मल्लिके, पुरुषजन्म किं नाहं प्राप्ता ? एतौ कङ्कणधरौ हस्तौ धिक्कर्तुमिच्छामि। यदि हस्ते करवालः आस्ते ! मल्लिके त्वमपि सदैव तूष्णीमास्से, किमपि न वदसि ! त्वमपि तस्या नट्याः परिचारिकापदमभिलषसि ?

मल्लिका—यद्यप्यहमभिलषामि न तत्प्राप्स्यामि। नटी मां सम्यक् जानाति।

रत्ना—कथमावृतमुखी सर्वंसहा तिष्ठसीति न ज्ञातुं पारयामि। धैर्यं नाम निरुपायानामितरेषाम् अस्त्रम्; राजकुमारीणां न।

मल्लिका—जाने प्रतीकार आसन्न एव, अत एव शक्तेरपव्ययं न करोमि।

रत्ना—निश्चयेन जानासि ?

मल्लिका—निश्चयेन।

रत्ना—रहस्यं चेत् तन् मा कथय। केवलं किञ्चिद् एतद् ज्ञातुमिच्छामि— एषा नटी किमद्य सन्ध्यावेलायां पूजां करिष्यति ? राजकन्याश्च साञ्जलि स्थास्यन्ति ?

मल्लिका—न, कदापि न, अहं प्रतिजानामि।

रत्ना—राजगृहलक्ष्मीः ते वाणीं सार्थां करोतु।

## द्वितीयोऽङ्कः

(राजोद्यानम् - ततः प्रविशतः लोकेश्वरी मल्लिका च)

मल्लिका—महाराज्ञि, पुत्रस्य दर्शनं संपन्नम्। ततः सांप्रतं किम् ?

लोकेश्वरी—पुत्रस्य ? कुत्र पुत्रः ? एतन्मृत्योरपि अधिकम्। प्रथमं बोद्धुं न पारितम्।

मल्लिका—ईदृशीं कथां किमर्थं वदथ ?

लोकेश्वरी—पुत्रो यदा अपुत्रो भूत्वा मातरम् आगच्छति, तादृशं अन्यद् दुःखं नास्ति। कथं नाम स मत्पार्श्वं परावृत्य अपश्यत्। तस्य माता एकपद एव विनष्टा। कुत्रापि स्वचिह्नं किमपि अविहाय। निज एतादृशः निःशेषः सर्वनाशः कल्पनायामपि संभावयितुं न पार्यते।

मल्लिका—रक्तमांसमयं जन्म संपूर्णतया विधूय, एते निर्मलं नूतनं जन्म उपलब्धवन्तः।

लोकेश्वरी—आः रक्तमांसे ! हन्त असह्या क्षुत्, असह्या वेदना ! रक्त-मांसयोः तपस्या एतेषाम् एतस्याः शून्यतपस्यायाः किं न्यूना ?

मल्लिका—किंतु यद्वा तद्वा वदतु देवी; अहं तम् अपश्यम्! कीदृशं रूपम्! आलोकेन धौता देवमूर्तिरिव!

लोकेश्वरी—तेनैव रूपेण स्वमातरं लज्जापयित्वा गतः। यस्या मातुः प्राणा मे नाडीषु, यस्या मातुः स्नेहो मे हृदये, तां तद्रूपं धिक्करोति स्म। यज्जन्म तस्मै अदाम्, तेन जन्मना तस्य सांप्रतिकजन्मनो न केवलं विच्छेदः, विरोधोऽपि। पश्य मल्लिके! अद्य स्पष्टं बोद्धुं पारितम्। एष धर्मः पुरुषाणां घटना। अयं धर्मः मातॄणां शिशूनां च नावश्यकः। स्त्रीणां भर्तृभिः प्रयोजनं नास्ति। ये पुत्रा न, भर्तारो न, भ्रातरो न, तादृशेभ्यः सर्वेभ्यः गृहं हित्वा पलायितेभ्यः काममपि भिक्षां दातुं सर्वमपि जीवं शोषयित्वा शून्येषु गृहेषु पतितैः अस्माभिः भाव्यम्। मल्लिके एष पुरुषाणां धर्मः अस्मान् निहतवान्। वयमपि एतं निहन्मः।

मल्लिका—किन्तु देवि! किं नापश्यद् भवती, स्त्रिय एव संघीभूय बुद्धस्य पूजां दातुं गच्छन्ति।

लोकेश्वरी—मूढा एताः! एतासां भक्तिचिकीर्षारूपायाः क्षुधः अन्तो नास्ति। ये एताः सर्वापेक्षया अधिकं ताडयन्ति, तेभ्य एव एताः सर्वापेक्षया पूजां समर्पयन्ति। एतेषां प्रश्रयं नाङ्गीकरोमि।

मल्लिका—मुखमात्रनिःसृतानि वचनान्येतानि, महाराज्ञि! निश्चयेन जानामि। स ते पुत्रः सेवापवरकद्वारा बहिर्गत्वा युष्मत्पूजागृहद्वारा अन्तः प्रविष्टः। ते मानुषः पुत्रः उत्सङ्गतः अवरुह्य, अद्य दैवः पुत्रो भूत्वा तव हृदयपूजावेदिमारूढः।

लोकेश्वरी—तूष्णीं भव। मा भण। हस्तयोरञ्जलिं बद्ध्वा अन्वरुधम्; अवोचम्—'अप्येकां रात्रिं ते मातुर्गृहे स्थित्वा ततो व्रज' इति। स आह—मे मातुर्गृहे उपरिच्छदो नास्ति, आकाश एवास्ति। मल्लिके! यदि त्वं माता अभवः अवगच्छेः, कियदिव महत्कठिनमिदं

वच इति। वज्रं देवतायाः हस्ते स्यात्, किन्तु तद् वज्रमेव। हृदयं विदीर्यते ! तस्य विदीर्णस्य हृदयस्य छिद्रेभ्यः अस्माकं पञ्जरनीडान्तः, पथि गच्छतां तेषां श्रमणानां गर्जनं प्रतिध्वनत वलते—

"बुद्धं शरणं गच्छामि,
धर्मं शरणं गच्छामि,
संघं शरणं गच्छामि" इति।

मल्लिका—किमिदं महाराज्ञि ! मन्त्रोच्चारणेन सह अद्य भवती नमस्कारं करोति।

लोकेश्वरी—तदेव विषत्। दुर्बालानां धर्मोऽयं मनुष्यान् दुर्बलान् करिष्यति। दुर्बलीकरणमेव अस्य धर्मस्य उद्देश्यम्। उच्चानपि मस्तकान् न्यक्करिष्यति। ब्राह्मणान् वक्ष्यति—'सेवां कुरु' इति। क्षत्रियं वक्ष्यति—'भिक्षां चर' इति। अस्य धर्मस्य विषम् अहमेव स्वेच्छया बहूनि दिनानि मदीयस्य रक्तस्यान्तरपालयम्। अत एव अहम् अद्य अन्यान् सर्वान् अपेक्ष्य अधिकतया एतस्माद् बिभेमि।....तत्र का आयाति ?

मल्लिका—राजकुमारी वासवी। पूजार्थं गन्तुं सज्जा समागता।

(ततः प्रविशति वासवी)

लोकेश्वरी—पूजार्थं गच्छसि ?

वासवी—आम्।

लोकेश्वरी—ननु प्राप्तवयस्का यूयम्।

वासवी—अस्माकं व्यवहारे तादृशं वयःकृतं वैलक्षण्यं दृश्यते वा ?

लोकेश्वरी—शिशवः ! 'अहिंसा परमो धर्मः' इति यूयमेव वदन्त्यो भ्रमथ।

वासवी—ये अस्मदपेक्षया प्रवयसः ते वदन्तो भ्रमन्ति, वयं केवलं मुखैस्तदावर्तनं कुर्मः।

लोकेश्वरी—निर्बोधा एताः कथं बोधयिष्यामि, अहिंसा इतरेषां धर्म इति। क्षत्रियाणां विशालेषु बाहुषु माणिक्याङ्गदवत् हिंसा निष्ठुरेण तेजसा दीप्यते।

वासवी—अपि शक्तेः कोमलं रूपं नास्ति ?

लोकेश्वरी—अस्ति, किन्तु तदा, यदा सा मज्जयिष्यति; न तदा, यदा सा दृढतया निर्भन्त्स्यति। पर्वतान् सृष्टिकर्ता कठिनैः प्रस्तरैः घटितवान्, न पङ्कैः। युष्माकं गुरोः कृपया उपरितनात् नीचपर्यन्तं सर्व एव किं पङ्कप्राया भविष्यन्ति ? राजप्रासादाभ्यन्तरा भूत्वा इमां कथां तिरस्कर्तुं ते घृणा नास्ति ? किं न भणसि ?

वासवी—चिन्तयामि, महाराज्ञि !

लोकेश्वरी—चिन्तयितुं किमस्ति ? चक्षुषां पुरतः अपश्याम - राजपुत्रः एकेन मुहूर्तेन राजा स्वयं भवितास्मीत्येतद् व्यस्मरत्। एवं कथयन् प्राव्रजत् - चराचरस्य दयाप्रदर्शकं साधनं करिष्यामीति। किं न श्रुतं वासवि ?

वासवी—श्रुतम्।

लोकेश्वरी—तथा चेत्, निर्दयताप्रदर्शनं नाम गुरुं भारं कः स्वीकरिष्यति ? यदि कोऽपि न स्वीकरोति, वीरभोग्यायाः वसुन्धरायाः का गतिर्भविष्यति ? नतमस्तकेभ्यः उपवासजीर्ण - क्षीणकण्ठ - मन्दाग्निभ्यः ग्लानेभ्यो निर्जीवेभ्यः या दुर्गतिः स्यात्, तस्याः किं कापि सीमा स्यात् ? यूयं क्षत्रियदारिकाः, कुत इदं वचो वो नूतनं प्रतिभाति ?

वासवी—इदं पुराणं वचः, किन्तु एकपद एव अद्य एकेनैव दिनेन विलीनम्, यथा वा वसन्ते निष्पत्रा किंशुकशाखा पुष्पैः निगूढा विलीयते।

लोकेश्वरी—कदाचित् बुद्धिभ्रंशात् पुरुषाः आत्मनः पौरुषधर्मं विस्मरन्ति। किन्तु नार्यो यदि विस्मरन्ति, स्यात् तासामेव मरणम्। महालतानां

महावृक्षाणाम् अपेक्षा वर्तते । सर्वे महावृक्षा गुल्मा भवन्ति चेत्, किं तत् तेषां साधु भवेत् ? ब्रूहि, किं नोत्तरयसि ?

वासवी—महावृक्षा अवश्यमपेक्षिताः ।

लोकेश्वरी—किन्तु वनस्पतीन् निर्मूलयितुमेव समागतस्ते गुरुः । तथापि परशुराम इव हस्ते कुठारमादास्ये इति वक्तुं शक्तिर्नास्ति । कोमल-शास्त्रवार्तारूपकीटैरधो भक्षयित्वा मनुष्यत्वं जीर्णं करिष्यति । विना युद्धं पृथ्वीं निःक्षत्रियां करिष्यति । तस्य कार्यं संपत्स्येत । किं च, राजकुमार्यो यूयं काषायं धृत्वा, भिक्षापात्रं हस्ते गृहीत्वा पथि पथि अटिष्यथ । तत्पूर्वमेव युष्माभिः मर्तव्यमित्येव मे आशीर्वादः । किं चिन्तयसि ? किं मे वचसि मनो नावगाहते ?

वासवी—सम्यक् परिशीलयामि ।

लोकेश्वरी—परिशीलनस्य आवश्यकता नास्ति । पश्य प्रमाणम् । आर्यपुत्रो बिम्बिसारः क्षत्रियराजः । राजत्वं तस्य न भोगवस्तु, किन्तु तदीयं धर्मसाधनं तत्रैवासीत् । अयं मरुकान्तारधर्मः यदा तत्कर्णे मन्त्रम् अजपत्, तदा एवं लघुतया राजभावात्प्रच्युतः, पतितः, न शस्त्रमुखे, न रणक्षेत्रे - मृत्योर्मुखे । वासवि, त्वमपि एकदा राज-महिषी भविष्यसि; किम् एताम् आशां अत्यजः ?

वासवी—किमर्थं त्यक्ष्यामि ?

लोकेश्वरी—तथा चेत् ज्ञातुमिच्छामि - यो राजा दयामन्त्रप्रवातेन सिंहा-सनोपरि अस्थिरमास्ते, राजदण्डः यस्य हस्ते शिथिलमास्ते, जयतिलकं यस्य ललाटे म्लानमस्ति, तं श्रद्धया वरीतुं शक्नोषि किम् ?

वासवी—न ।

लोकेश्वरी—मदीयां कथां कथयिष्यामि । महाराजो बिम्बिसारः वार्तां प्रेषितवान् - सः अद्य आगमिष्यति । मया सज्जया भवितव्यमिति तस्य इच्छा । यूयं चिन्तयथ-अहं तत्कृत आत्मानमलंकरिष्यामीति ।

यो मानुषो राजा न, भिक्षुर्न, यो न भोगे अस्ति, न वा त्यागे, तस्य किम् अभ्यर्थनम् ? कदाचिदपि न। वासवि! त्वां वारं वारं कथयामि - एतं पौरुषहीनम् आत्मावमानकरं धर्मं स्वल्पमपि मा अङ्गीकुरु।

(वासवी शनैः प्रस्थिता)

मल्लिका—राजकुमारि, क्व प्रस्थितासि ?

वासवी—गृहं प्रति।

मल्लिका—इह नटी सज्जा प्राप्ता!

वासवी—भवतु भवतु।

(इति प्रस्थिता वासवी)

मल्लिका—महाराज्ञि! अपि श्रुतम् ?

लोकेश्वरी—श्रुतम्। विषमः कोलाहलः।

मल्लिका—निश्चयेन एते प्राप्ताः।

लोकेश्वरी—इदमद्य शृणोमि—नमो .... .... ....

मल्लिका—स्वरस्तु भिन्नः। 'नमो बुद्धाय' इति गर्जनम् इतः प्रबलतरं भूत्वा उत्थितम्। सहैव ततो गर्जनानन्तरं शृणोतु भवती—'नमः पिनाकहस्तायेति। इतः परं भयं नास्ति।

लोकेश्वरी—भग्नं भग्नम्। यदा इदं सर्वं मृन्मयं भवति, तदा को जानाति, तत्र मे जीवः कियदिव समर्पितः, कियती भक्तिश्चेति। मल्लिके! एतच्च भञ्जनकार्यं यदि शीघ्रं संपद्येत, तदा मृत्योर्मुक्ता भविष्यामि। अस्य मूलं मदीये हृदये न्यस्तम्।

(ततः प्रविशति रत्नावली)

लोकेश्वरी—रत्नावलि! त्वमपि पूजार्थं गच्छसि ?

रत्नावली—भ्रमेण कदाचित् पूज्यान् पूजयितुं न पारयामि, किन्तु अपूज्यानां पूजनं नाम अपराधो न मद्द्वारा घटिष्यति ।

लोकेश्वरी—तत् कुत्र गच्छसि ?

रत्नावली—अद्य महाराज्ञीसकाशम् आगता । अस्ति किमपि आवेदयितुम् ।

लोकेश्वरी—किम् ? ब्रूहि ।

रत्नावली—सा नटी यद्यत्र पूजायामधिकारं प्राप्नोति, तदा अशुचिनि अस्मिन् राजप्रासादे वासं कर्तुं न शक्यम् ।

लोकेश्वरी—विश्वसिमि, अद्यैषा पूजा न भविष्यति ।

रत्नावली—अद्य नो चेत्, श्वो भविष्यति ?

लोकेश्वरी—मा भैषीः, जाते । पूजायाः समूलमुच्छेदं करिष्यामि ।

रत्नावली—एवमपि सोढानामवमानानां प्रतीकारो न भविष्यति ।

लोकेश्वरी—राज्ञः सकाशे ते निवेदनं कुरु । नट्याः निर्वासनम्, अथवा प्राणदण्डनमपि भवेत् ।

रत्नावली—तेन एतस्या गौरवमेव महीकृतं भविष्यति ।

लोकेश्वरी—तत् का वा ते इच्छा ।

रत्नावली—सा यत्र पूजाकरी भूत्वा पूजां कर्तुं गच्छति, तत्र तया केवलं नट्या सत्या नर्तितव्यम् । मल्लिके ! किं जोषमास्से ? किं त्वं भणसि ?

मल्लिका—प्रस्ताव एष कौतुकजनकः आस्ते ।

लोकेश्वरी—रत्नावलि ! न मे मनः सम्मन्यते ।

रत्नावली—अस्या नट्या उपरि महाराज्ञ्याः अद्य दया वर्तत इति पश्यामि ।

लोकेश्वरी—दया ! कुक्कुरैरस्याः मांसं छिद्यमानं खाद्यमानं द्रक्ष्यामि । दया मे ! यत्र अनेकानि दिनानि निजहस्तेन पूजामदाम्, सा पूजावेदिः

भज्यतां नाम। तदपि सोढुं पार्यते। किन्तु राज्ञः राज्याश्च पूजासने अद्य नट्याः चरणघातं तु .... ....।

रत्नावली—प्रगल्भतां मे क्षमस्व। इयत्या व्यथाया यदि अवकाशं दास्यसि, तदा व्यथारूपमूलोपरि भग्ना वेदिः पुनः उत्थास्यति।

लोकेश्वरी—तद् भयं मनसि सर्वथा नास्तीति न।

रत्नावली—मोहे पतिता यस्य मिथ्याभूतस्य संमानमकरोः तस्य दूरीकरणेन मोहान् न मोक्ष्यसे, मिथ्याभूतस्य अपमानं कृत्वैव ततो मोक्ष्यसे।

लोकेश्वरी—मल्लिके! ततः शृणु। उद्यानस्य उत्तरदिशः शब्द आयाति—'भङ्ग्धि, सर्वं भङ्ग्धि। नमो .... भवतु सर्वं भग्नं भवतु।

रत्नावली—एहि महाराज्ञि! दृष्ट्वा प्रत्यागच्छामः।

लोकेश्वरी—आगच्छामि, किन्तु नाधुना।

रत्नावली—अहं दृष्ट्वा प्रत्यागच्छामि। (इति प्रस्थिता)

लोकेश्वरी—मल्लिके, बन्धनं छेत्तुं महती वेदना भवति।

मल्लिका—भवत्याः चक्षुषोर्जलम्।

(नेपथ्ये 'जय कालि करालि' इति ध्वनिः)

लोकेश्वरी—तत्र शृणु, 'जय कालि, करालि'। अन्यो ध्वनिः क्षीणो जातः। नाहमिदं सोढुं शक्नोमि।

मल्लिका—बुद्धस्य धर्मं यदि निर्वासयिष्यसि, स पुनरेष्यति। अन्येन धर्मेण यदि नैष मज्जितः, शान्तिर्न स्यात्। देवदत्तात् यदा नूतनं मन्त्रम् आदास्यसि, तदैव शान्तिं प्राप्स्यसि।

लोकेश्वरी—धिक् धिक्! मा ब्रूहि मा ब्रूहि। देवदत्तः क्षुद्रः सर्पः नरककीटः। यदा अहिंसाव्रतम् आदत्तवती अहं तदा मनसि प्रतिदिनं तमदहम्, अविध्यं च। यस्मिन् आसने तं परम-

निर्मलज्योतिःप्रदं महागुरुम् अहमेव आनाय्य उपावेशयं, तस्य तस्मिन्नेव आसने अद्य देवदत्तमानेष्यामि ? (जानुभ्यामुपविश्य) क्षमां कुरु प्रभो, क्षमां कुरु। करणत्रयकृतं सर्वमपराधं क्षमस्व प्रभो। (उत्थाय) मा भैषीः मल्लिके! या मदन्तरास्ते उपासिका सा अन्तः स्थास्यत्येव; बहिस्तु अहं निष्ठुरा अस्मि राजकुलवधूः; मां न कोऽपि पर्यासयितुं पारयेत्। मल्लिके! मदीयं निर्जनं गृहं गत्वा उपविशामि। य एतावन्तं कालं मम आराधनापोतो बभूव स यदा धूलिसमुद्रे एकपद एव मग्नो भवेत्, तदा माम् आह्वय। (उभे अपि निष्क्रान्ते)

(धूपदीपगन्धमाल्यमङ्गलघटप्रभृतिपूजोपकरणानि
आदाय राजप्रासादनारीणाम् एकं दलं
श्रीमत्या सह प्रविशति)

(श्रीमतीमनुसृत्य)

सर्वाः—(पुष्पपात्राणि प्रदक्षिणमावर्तयन्त्यः)

वर्णगन्धगुणोपेतामेतां कुसुमसन्ततिम्।
अर्पयामि मुनीन्द्रस्य श्रीमत्पादसरोरुहे॥

(प्रणमन्ति सर्वाः, शंखध्वनिः। धूपपात्रमावीज्य)

गन्धसंभारयुक्तेन धूपेनाहं सुगन्धिना।
पूजये पूजनीयं त्वां पूजाभाजनमुत्तमम्॥

(शंखध्वनिना सह प्रणमन्ति)

श्रीमती—(प्रदीपमावीजयन्ती)

घनसारप्रदीप्तेन प्रदीपेन तमोहृता।
त्रैलोक्यदीपं संबुद्धं पूजयामि तमोनुदम्॥

(सशंखध्वानं प्रणमन्ति)

( आहारनैवेद्यमावीज्य )

अधिवासितमेतन्नो भवते परिकल्पितम् ।
अनुकम्पामुपाधाय प्रतिगृह्णीष्व भोजनम् ॥

( सशंखध्वानं प्रणमन्ति । जानुभिर्निपत्य )

यः सन्निषण्णो वरबोधिमूले
मारस्य सेनां महतीं विजित्य ।
अवाप संबोधिमनन्तबोधो
लोकोत्तमं तं प्रणमामि बुद्धम् ॥

उद्यानद्वारस्य पूजा समाहिता । संप्रति स्तूपमूलं प्रति चलिष्यामः ।

मालती—किन्तु भगिनि श्रीमति ! इतः पश्य, अस्यां दिशि पन्था निरुद्धः ।

श्रीमती—प्राचीरमुल्लङ्घ्य गन्तुं शक्यते ।

नन्दा—ज्ञायते, राज्ञो निषेधः ।

श्रीमती—किन्तु, प्रभोः आदेशो वर्तते ।

नन्दा—किम् एतद् भयंकरं गर्जनम् । किं राष्ट्रविप्लवः ?

श्रीमती—गानम् आरभस्व । [ गायति ]

बन्धच्छेदाय संप्राप्तं साधनं सांप्रतं मया ।
तीरं सन्त्यज्य याम्यद्य कृत्वा सांराविणं महत् ॥

जयमाला करे यस्य रौद्री दाहकरी तथा ।
वह्निज्वाला, नमस्तस्मै भैरवाय नमो नमः ॥

आलोकयात्रिको याति दिवसेषु च रात्रिषु ।
शून्याभिमुखमेतस्मिन् समुद्रे कालनामनि ॥

आह्वानं तारमायाति तरङ्गेभ्यः, तथा ध्वनिः ।
वज्रभेरीवक्षसोऽसौ, अपारो जीवनोत्सवः ॥

( ततः प्रविशति अन्तःपुररक्षिणीनां किमपि दलम् )

रक्षिणी प्रथमा — इतः प्रतिनिवर्तध्वम् ।

श्रीमती—अस्माकं प्रभोः पूजार्थम् आगता वयम् ।

रक्षिणी—पूजा प्रतिषिद्धा ।

मालती—अद्य प्रभोः जन्मोत्सवः ।

रक्षिणी—पूजा प्रतिषिद्धा ।

श्रीमती—किमेतत् संभाव्यते ।

रक्षिणी—पूजा प्रतिषिद्धा । अहम् अन्यन्न जानामि । प्रयच्छत युष्माकमर्घ्यद्रव्यम् ।

( पूजोपकरणानि आच्छिनत्ति )

श्रीमती—कैषा परीक्षा मे ? अपराधः कोऽपि आपतितः ?

उत्तमाङ्गेन वन्देऽहं पादपांसुं तवोत्तमम् ।
बुद्धौ यत्स्खलितं दोषं बुद्धः क्षाम्यतु तं मम ॥

रक्षिणी—विरम स्तवात् ।

श्रीमती—द्वारपार्श्वे एव विरोधः । प्रवेशोऽस्माकं न घटितः ।

मालती—भगिनि श्रीमति ! किं क्रन्दसि विना अर्घ्यं, विना मन्त्रं किं पूजा न संपद्येत ? भगवतः अस्माकं मनसो अन्तरेव जन्मलाभः सम्भूतः ।

श्रीमती—न केवलं तत्, मालति । तस्मिन् जाते सर्वा वयं प्रजाताः । अद्य सर्वेषामेव जन्मोत्सवः ।

नन्दा—श्रीमति ! हठात् एकस्मिन् मुहूर्ते अद्यैवं दुर्दिनम् अस्मान् आवृणोति ।

श्रीमती—दुर्दिनं वास्तु सुदिनं वा ; एतत् उत्थानस्य दिनमद्य । यद् भग्नं तत् सन्धास्यति । यत् पतितं तत् पुनः उत्थास्यति ।

अजिता—श्रीमति, अद्य इदं मे भाति, पूजाभारो यस्ते दत्तः तत्र निश्चयेन दोषः अस्ति । तत एव सर्वं नष्टमभूत् । प्रथममेव इदं यदि अस्माभिर्ज्ञातं, तदुचितं स्यात् ।

श्रीमती— नाहं बिभेमि । जाने प्रथमत एव न कस्यापि देवमन्दिरस्य द्वारम् उद्घाटितं भवेत्, क्रमेणैव अर्गला विस्त्रियते । तथापि एतद्वक्तुं नास्ति मे संकोचः— प्रभुरेव मामाह्वयत् । बाधाः भंस्यन्ते अद्यैव ।

भद्रा— राज्ञः प्रतिषेधमपसारयितुं न शक्यते ।

श्रीमती— तत्र राज्ञः राजदण्डः न प्रसरति ।

( ततः प्रविशति रत्नावली )

रत्नावली—श्रुतं मया, श्रुतं मया यत्त्वमवादीः । त्वं राज्ञो निषेधमपि न गणयिष्यसि । तावत् ते साहसम् ।

श्रीमती—पूजायां राज्ञो निषेधो नास्ति ।

रत्नावली—राज्ञो निषेधो नास्ति ? सत्यं नास्ति ? गच्छ त्वं पूजां कर्तुम्, अहं द्रक्ष्यामि, द्वयोरपि मे चक्षुषोराशां पूरयिष्यन्ती ।

श्रीमती—यः अन्तर्यामी स एव द्रक्ष्यति । ततः बहिःस्थं सर्वम् अपासारयम् येन आलोक आयाति । अद्य—

वचसा मनसा चैव वन्द एतं तथागतम् ।
आसने शयने स्थाने गमने चापि सर्वदा ॥

रत्नावली—तव दिनानि अद्य समाप्तानि । अहंकारश्च नङ्क्ष्यति ।

श्रीमती—सः नङ्क्ष्यति, न किमपि शिष्येत । न किमपि स्यात् ।

रत्नावली—अद्य मदीयः पर्यायः, सन्नद्धा समागमिष्यामि ।

( इति प्रस्थिता )

भद्रा—न किमपि शोभनम् । वासवी बुद्धिमती प्रथममेव कुत्रापि अपसृता ।

अजि—किमपि मे भयं भवति ।

( ततः प्रविशति उत्पलवर्णा )

नन्दा—भगवति ! कुत्र प्रस्थितासि ?

उत्पल—उपद्रवस्समागतो नगरे। धर्मः पीडितः, श्रमणाः आशंकिताः। पौरपथे रक्षामन्त्रं वाचयितुं यामि।

श्रीमती—भगवति, किं न मामपि नीत्वा यास्यसि?

उत्पल—कथं नीत्वा यामि? तवोपरि आदेशोऽस्ति पूजायाः।

श्रीमती—पूजाया आदेशः संप्रत्यपि अस्ति?

उत्पल—यावत्समाधानं न भवति, तावद् तस्य आदेशस्य अवसानं नास्ति।

मालती—मातः! किन्तु राज्ञः प्रतिषेधो वर्तते।

उत्पल—मा भैषीः, धीरा भव। सैव बाधा नः पन्थानम् उत्पादयिष्यति।

(प्रस्थिता)

भद्रा—शृणु अजिते! पथि किं तत्, क्रन्दनं वा गर्जनं वा?

नन्दा—मे मनसि भाति—उद्यानान्तः केऽपि प्रविश्य भंक्त्वा चूर्णीकृतवन्त इति। श्रीमति! शीघ्रमेहि। राजमहिष्या मातुः गृहं प्रविश्य शरणं प्राप्स्यामः।

(प्रस्थिता)

भद्रा—एहि अजिते! सर्वमेतत् किमपि दुःस्वप्न इव प्रतिभाति।

(राजकुमार्यः प्रस्थिताः)

मालती—भगिनि! बहिः किमिदं मरणध्वनिरिव श्रूयते। आकाशे दृश्यते अग्निशिखा। नगरे अग्निः लग्नः। जन्मोत्सवे कुत एतत् मृत्यु-ताण्डवम्?

श्रीमती—मृत्युसिंहद्वारमूलमेव जन्मजययात्रा भविष्यति।

मालती—मनसि भयमस्ति, ततो बलवत् लज्जितास्मि। पूजार्थं गमनसमयेऽपि भीतास्मि। नैतत् सह्यं मे।

श्रीमती—भगिनि! कस्मात् भयं ते?

मालती—विपदो भयं न । किन्तु न किञ्चिदपि बुध्यते, अन्धकारः स्फुरति, तत एव भयम् ।

श्रीमती—आत्मानं बाह्यतो मा विलोकय । अद्य यस्य अक्षय्यं जन्म तस्य मध्ये त्वमात्मानं विलोकय, ते भयं नङ्क्ष्यति ।

मालती—त्वं गानं कुरु भगिनि । अस्माकं भयं यास्यति ।

श्रीमती— (गायति)

मा निधेह्यन्धकारे नः द्रष्टुं त्वां देह्यनुग्रहम् ।
एकीकृत्य तवान्तर्नः यथा पश्येम तत् कुरु ॥

क्रन्दामोऽद्य; सुखग्लानिः न सोढुं पार्यतेऽधुना ।
मा याहि ; धौतनयनास्त्वश्रुधारासु नो भव ॥

नेमां छायामजानीम मायामग्ना अभूम च ।
स्वप्नभाराश्रितः ; शून्ये मृग्याम चिरजीवनम् ॥

आलोकमावृणोत् को मे ? तद् राज्याः समनन्तरम् ।
मां विलोकयितुं नाथ समागन्तुं त्वमर्हसि ॥

(ततः प्रविशति अन्तःपुररक्षिणी काचित्)

रक्षिणी—शृणु श्रीमति !

मालती—कुत एवं निष्ठुरासि ? इतः परं यातेति मा ब्रूहि नः । आवामिव द्वे दारिके अस्य उद्यानस्य समीपे मृदि उपविष्टे भवतां नाम । किमतस्ते नष्टम् ?

रक्षिणी—अनेन किं ते प्रयोजनम् ?

मालती—भगवान् बुद्धः यस्मिन्नुद्याने कदाचित् प्रविवेश, तस्य प्रान्तपर्यन्ते तस्य पादधूलिः प्रसृता अस्ति । यूयं यद्यपि तत्रान्तःप्रवेशं नानुमन्यध्वम्, अत्र अस्यां मृदि उपविष्टाः अन्तर्मन एव तस्य जन्मोत्सवमूरीकुर्मः । मन्त्रं नोच्चारयिष्यामः ; अर्घ्यं नार्पयिष्यामः ।

रक्षिणी—किमर्थं मन्त्रं नावर्तयामि ? भण, भण । तावन्मया पापमाचरितं, यदहं न श्रोतुं पारयामि । अन्या देवता दूरे सन्ति । अस्यां वेलाया-मद्य पुण्यदिने, हे श्रीमति, ते मधुरकण्ठनः प्रभोः स्तवो मया श्रोतव्यः । अहं तेषां दासीति त्वं जानासि । यस्मिन् दिने सः अशोकच्छायामागच्छत् , तस्मिन् दिने एते पापे चक्षुषी तमपश्यताम् । तत आरभ्य स मे अन्तरावसति ।

श्रीमती— नमो नमो बुद्धदिवाकराय
नमो नमो गौतमचन्दिराय ।
नमो नमोऽनन्तगुणार्णवाय
नमो नमः शाक्यसुनन्दनाय ॥

रक्षिणि ! त्वमपि मया सह आवर्तयैतत् ।

रक्षिणी—मन्मुखात् किमेतत्पुण्यं मन्त्रं बहिरागमिष्यति ?

श्रीमती—भक्तिरस्ति हृदये; यद्वा तद्वा त्वयोच्यमानं पुण्यमेव स्यात् । उदीरय 'नमो नमो बुद्धदिवाकराय' इति । (क्रमेण शनैरावर्तयति )।

रक्षिणी—मम हृदयभारः अवतीर्णः । अद्येदं दिनं मदीयं, तत् सार्थकं जातम् ; यद्वचः कथयितुम् अहम् आगता, तत् किं वक्ष्यामि ? त्वम् इतः पलायस्व, अहं ते मार्गं प्रदर्शयिष्यामि ।

श्रीमती—कुतः ?

रत्नावली—महाराजः अजातशत्रुः देवदत्तस्य सकाशे दीक्षां स्वीचकार । सः अशोकतले प्रभोरासनमभाङ्क्षीत् ।

मालती—हन्त हन्त भगिनि, नाहं द्रष्टुम् उत्सहे । मन्दं मे भाग्यम् । सर्वं भग्नम् ।

श्रीमती—किमात्थ मालति ! तस्य आसनम् अक्षयम् । महाराजो बिम्बिसारः

यद् निर्ममे तदेव भग्नम् । प्रभोरासनं किं प्रस्तरैस्सम्यक् कर्तव्यम् ? भगवतो निजो महिमैव तद् रक्षिष्यति ।

रक्षिणी—राज्ञा प्रख्यापितं—तत्र यदि ये केऽपि आरतिं कृत्वा स्तवमन्त्रं पठन्ति तेषां प्राणदण्डो भविता। श्रीमति, तत् किमतःपरं त्वमत्र करिष्यसि ?

श्रीमती—प्रतीक्षमाणा वर्तिष्ये ।

रक्षिणी—कति दिनानि ?

श्रीमती—तावन्ति दिनानि यावत् पूजाह्वानं नागच्छति, यावन्ति दिनानि जीविष्यामि ।

रक्षिणी—श्रीमति ! अद्य पूर्वमेव क्षमां याचे ।

श्रीमती—किमर्थं क्षमा ?

रक्षिणी—कदाचित् राज्ञः आदेशात् त्वमपि आहन्तव्या भवेः ।

श्रीमती—तत् जहि ।

रक्षिणी—स आघातः राजप्रासादनट्या एव । किन्तु प्रभोः भक्तायै सेविकायै अद्यापि मे नमस्कारः, तदापि मे नमस्कारः । मां क्षमस्व ।

श्रीमती—सकलमाघातं प्रति क्षमां कर्तुं वरं ददातु मे प्रभुः । बुद्धः क्षमताम् ।

( अन्या रक्षिणी प्रविशति )

रक्षिणी २—रोदिनि !

रक्षिणी १—किं पाटलि !

रक्षिणी २ ( पाटली )—भगवतीमुत्पलपर्णां ते हतवन्तः ।

रक्षिणी १ ( रोदिनी )—किं ? सर्वनाशः !

श्रीमती—के अताडयन् ?

पाटली—देवदत्तस्य शिष्याः ।

रोदिनी—एवं रक्तपात आरब्धः ? तथा चेत् अस्माकं हस्तेऽपि अस्त्रमस्ति । एतत्पापं न सहे । एतच्च प्रभोः संघे प्रहारः । श्रीमति ! क्षमा न प्रवर्ततेऽद्य । अस्त्रं धत्त ।

श्रीमती—रोदिनि, मा मयि लोभं पश्य । अहं नटी, तथापि ते तं खड्गं दृष्ट्वा ममायं नृत्यहस्तोऽपि चपलायते ।

पाटली—तद् इतः खड्गो दत्तः ।

श्रीमती—(सकम्पा खड्गमधः पातयन्ती) नहि नहि । प्रभोः सकाशात् मया प्राप्तमस्त्रम् । प्रवृत्तं मदीयं युद्धम् । मारस्य पराजयो भवतु, प्रभोर्जयो भवतु ।

पाटली—चल रोदिनि ! भगवत्या देहम् आदाय श्मशानं गन्तव्यम् ।

(इति उभे अपि प्रस्थिते)

(कतिपयरक्षिणीभिस्सह प्रविशति रत्नावली)

रत्नावली—(रक्षिणीं विलोक्य) इयमत्रास्ते । एनां राजादेशं श्रावय ।

रक्षिणी—महाराजस्य आदेशः एष एव - त्वं नटी; अशोकवने नटितुं त्वया गन्तव्यम् इति ।

श्रीमती—नटनमद्य ?

मालती—कां कथां कथयत ! एतादृशमादेशं कृतवतो महाराजस्य किं भयं नोदभूत् ?

रत्नावली—भयं नास्ति । तद् दिनमागतं यस्मिन् नटीं दासीं दृष्ट्वा राजेश्वरेण भेतव्यम् ! ग्राम्याः सर्वाः ।

श्रीमती—कदा नटनं भवति ?

रत्नावली—अद्य आरतिवेलायाम् ।

श्रीमती — प्रभोः आसनवेद्याः पुरतः ?

रत्नावली — आम् ।

श्रीमती — तथा चेदस्तु ।

( प्रस्थिताः सर्वाः )

[ ततः प्रविशति भिक्षुसंघः । गायति ]

पृथिवी हिंसयोन्मत्ता नित्यं युद्धं च निष्ठुरम् ।
पन्थाश्च घोरः कुटिलः जटिलं लोभबन्धनम् ॥

नूतनं जन्म ते जातं कातराः प्राणिनोऽखिलाः ।
त्राणं कुरु महासत्त्व ! वाणीमानय तेऽमृताम् ॥

विकासय प्रेमपद्मं मधुनिष्यन्दि नश्चिरम् ।
शान्तं मुक्तानन्तपुण्य ! करुणाघन हे विभो ॥

कलङ्कशून्यां धरणीं कुरु त्वं
त्यागस्य दीक्षां कठिनां प्रदेहि ।
भो दानवीरैहि गृहाण सर्वा-
हङ्कारभिक्षां च महिष्ठभिक्षो ॥

लोको विस्मरताच्छोकं मोहो भूयाच्च खण्डितः ।
उज्ज्वलः स्याद् ज्ञानसूर्यः समारोहोऽधुनोदितः ॥

लभतां भुवनं प्राणान् अन्धो नयनमाप्नुतात् ।
शान्तमुक्तानन्तपुण्य करुणाघन हे विभो ।
कलङ्कशून्यमेतन्नः निधेहि धरणीतलम् ॥

क्रन्दनमयमिदमखिलं हृदयं
तापरूपदहनेन च दीप्तम् ।
विषयविषोदितविविधविकारैः
अपरितृप्तमतिजीर्णं खिन्नम् ॥

कालुष्येण म्लान्या देशानामद्य तिलकमुन्मृष्टम् ।
आनय मङ्गलशङ्खं आनय तव दक्षिणं पाणिम् ॥

तव शुभगीतकरागान् आनय तव सुन्दरं छन्दः ।
धरणीं कलङ्कशून्यां कुरु करुणाघन शान्त, मुक्त, पुण्यात्मन् ॥

## तृतीयोऽङ्कः

[ राजोद्यानम् - ततः प्रविशतः मालती श्रीमती च ]

मालती—भगिनि ! शान्तिर्न प्राप्ता ।

श्रीमती—किमापन्नम् ?

मालती—यदा त्वां नर्तनाय सज्जीकर्तुं ते अनयन्, तदा मौनेनाहं प्राचीर-पार्श्वं गत्वा पन्थानमालोकयन्ती आसम् । अपश्यं तत्र - भिक्षुण्या उत्पलपर्णाया मृतं देहं नीत्वा अगच्छन् । किञ्च ....

श्रीमती—किं विरतासि, ब्रूहि ।

मालती—भगिनि ! मा कुप्यः, अहम् अतीव दुर्बला ।

श्रीमती—नैव किञ्चिदपि ।

मालती—अपश्यम् - अन्त्येष्टिमन्त्रं पठन् शवदेहेन अगच्छत ।

श्रीमती—को अगच्छत् ?

मालती—दूरात् प्रत्यभात् स इवेति ।

श्रीमती—न असंभावितं तत् ।

मालती—शपथं करिष्यामि, यावन्न मुक्तिं प्राप्नोमि, तावन्न तं द्रक्ष्यामि ।

श्रीमती—रक्ष एतं शपथम् । समुद्रदिशि अनिमेषं दर्शनेन समुद्रस्य परं पारं द्रष्टुं शक्यते किम् ? दुराशाया मनसि आश्रयं मा देहि ।

मालती—तद्दर्शनाशया मनः आकुलीकरोमि इति न; बिभेमि कदाचिदमेते

मारयिष्यन्ति। तत एव तत्पार्श्वे भवितुमिच्छामि। भगिनि! शपथं रक्षितुं न पारयामीति मा माम् अवजानीहि।

श्रीमती—अप्यहं ते व्यथां न जानामि?

मालती—स रक्षितुं न शक्यते, किन्तु मर्तुं शक्यते। इतः परं सोढुं न पारयामि, भगिनि! अद्य मे सर्वं भग्नम्। अस्मिन् जन्मनि न स्यान्मुक्तिः।

श्रीमती—यस्य सकाशं यासि, स एव मुक्तिं दातुं शक्नोति, यतस्स स्वयं मुक्तः। तव वचः श्रुत्वा मया अद्य एतदेकं ज्ञातुं पारितम्।

मालती—किं ज्ञातं भगिनि?

श्रीमती—अद्यापि मे मनसि यत् पुराणं क्षतं सुप्तमास्ते, तदधुना व्यथयदुद्बुध्यते। बहिस्तः यावद् बन्धनानि व्यद्रावयं, तावत्तानि अन्तरवगाह्य निलीनानि।

मालती—राजप्रासादे त्वादृशः एकलो जनः कोऽपि नास्ति। ततः त्वां विहाय गमनं कष्टं भवति। तथापि गन्तव्यं भवति। यदा ते समयो लभ्यते, तदा मदर्थं क्षमापणमन्त्रं पठ।

श्रीमती—बुद्धौ यत्स्खलितं दोषं, बुद्धस्तं क्षमतां मम।

मालती—बुद्धस्तं क्षमतां मम। गमनसमये मे किमपि गानं कुरु। तस्मिंस्ते मुक्तिगाने अद्य किञ्चिदपि मनो दातुं न शक्यते। यत्किमपि मार्गसम्बन्धि गानं कुरु।

श्रीमती— (गायति)

पथि गमन आह्वयो मां पश्चाद्विलम्बमानां, कथं यामि।
आयाता निबिडनिशा पथि रेखा बत गता तिरोधानम्॥
अपसारय घोरतमो भयंकरं भवति तद् द्रष्टुम्।
यावत्कालं यामि प्रयामि तावत—यदि मनस्तेऽस्ति॥

एहि मया सह पार्श्वे, भयं यतः पृष्ठतो यायात् ।
अयमहमागच्छामि त्वं नासि श्वो दिने रात्रौ ॥

मालती—शृणु भगिनि ! पुनरपि गर्जनम् । दया नास्ति, कस्यापि दया नास्ति । अनन्तकारुणिको बुद्धः अस्यां पृथिव्यां पादार्पणमकरोत् । तथापि अत्र नरकशिखा न प्रशमिता । प्रणमामि भगिनि ! मुक्तिं यदा प्राप्नोषि, तदा एकवारमाह्वय । एकवारं चरमतया प्रयत्नं करिष्यामि !

श्रीमती—गच्छ, प्राचीरद्वारपर्यन्तं प्रेषणार्थमनुगच्छामि । [ उभे प्रस्थिते ]

( ततः प्रविशतः रत्नावली मल्लिका च )

रत्नावली—देवदत्तशिष्या भिक्षुणीं मारयामासुः । अत्र किमेतावती चिन्ता ? सा किल कस्यापि क्षेत्रपालस्य दारिका ।

मल्लिका—किन्तु अद्य सा भिक्षुणी !

रत्नावली—मन्त्रपठनेन रक्तं भिन्नं भवति किम् ?

मल्लिका—अद्याहं पश्यामि सर्वत्र—मन्त्रभेदः रक्तभेदात् वरीयान् भवति ।

रत्नावली—तिष्ठतु सर्वाप्येषा कथा । प्रजा उत्तेजिता दृष्ट्वा भवति राज्ञश्चिन्ता । इदमहं सोढुं न शक्नोमि । युष्माकं भिक्षुधर्मः राजधर्मं नाशयिष्यति ।

मल्लिका—उत्तेजनस्य कारणान्तरमस्ति । महाराजो बिम्बिसारः पूजार्थं प्रस्थितः ; किन्तु नाद्याप्यागतः ; प्रजाः सन्दिहते ।

रत्नावली—कर्णाकर्णिकया यत्किमपि प्रचरति अत्र, मयापि तत् श्रूयते । व्यापार एष न शोभते इत्यङ्गीकरोमि । परन्तु स्वकर्मफलस्य मूर्तिः हस्तगता दृश्यते ।

मल्लिका—कीदृशं कर्मफलं त्वया दृष्टम् ?

रत्नावली—महाराजो बिम्बिसारः स्व-पितुर्वैदिकं धर्मं विनाशयामास । तत्

पितृहत्यातोऽपि किं लघ्वी ? ब्राह्मणाः तदैव कथयामासुः यो यज्ञाग्निः तेन निर्वापितः, स क्षुधितः अग्निः कदाचित् तं भक्षयिष्यति ।

मल्लिका—जोषमास्स्व । जानीषे अभिशापभयेन स कियद्विव अवसन्नो निपतित इति ?

रत्नावली—कस्य अभिशापः ?

मल्लिका—बुद्धस्य । मनसि तस्मात् महाराजो भीतः ।

रत्नावली—बुद्धस्तु न कमप्यभिशपति । अभिशापविधिज्ञस्तु देवदत्तः ।

मल्लिका—तत एव एतावत् माननम् । दयालुं देवतां मनुष्यः केवलं मुखवचसा तर्पयितुं पारयति । हिंस्रायै देवतायै एव अर्घ्यं ददाति ।

रत्नावली—या देवता हिंसां कर्तुं न जानाति, तया उपवासः कर्तव्यो भविष्यति, यथा वा नखदन्तहीनेन वृद्धसिंहेन ।

मल्लिका—यथा तथा वास्तु । एतत्तु कथयामि - अद्य सन्ध्यावेलायां तस्मिन् अशोकचैत्ये पूजा निश्चयेन भविष्यति ।

रत्नावली—तथा चेद् भवतु नाम । किन्तु नाट्यं तदग्रे भविष्यति । इदमप्यहं कथयामि ।

( निष्क्रान्ता मल्लिका । ततः प्रविशति वासवी )

वासवी—सन्नद्धा सम्प्राप्ताहम् ।

रत्नावली—किंकृते ।

वासवी—वैरं निर्यातयितुम् । बहु मां लज्जापितवती सा नटी ।

रत्नावली—किम् उपदेशद्वारा ।

वासवी—नहि । मां स्वस्यां भक्तिप्रवणां कारयित्वा

रत्नावली—तत एव छुरिकाहस्ता समागतासि ?

वासवी—न तदर्थम् । राष्ट्रविप्लवशङ्का प्राप्ता । विपत् मे आपतति चेत् निरलं न मरिष्यामि ।

रत्नावली—नट्या उपरि कथं वैरं निर्यातयिष्यसि ?

वासवी—(हारं प्रदर्शयन्ती) एतद्धारद्वारा ।

रत्नावली—त्वदीयवज्रहारद्वारा ?

वासवी—बहुमूल्यम् अवमाननम् , राजकुलोचितम् । तस्यां नृत्यन्त्यां तस्या अङ्गोपरि पारितोषिकतया एतत् क्षेप्स्यामि ।

रत्नावली—सा यदि तिरस्कृत्य पुनरपि तवोपरि ते प्रतिक्षिपति ? यदि न स्वीकरोति ?

वासबी—(छुरिकां दर्शयित्वा) तदा एतदस्ति ।

रत्नावली—शीघ्रमानय महाराज्ञीं लोकेश्वरीम् । सा नितान्तम् आमोदमेष्यति ।

वासवी—आगमनसमये ताम् अस्पृश्यम् ; श्रुतं गृहे संवृतकपाटम् अपवरके अस्ति इति । राष्ट्रविप्लवे भयेन वा, उत पतिविषये मानेन वा इति न ज्ञातुं शक्यते ।

रत्नावली—किन्तु अद्य नट्याः नतिनाट्यं भविष्यति । तत्र महाराज्ञ्या सन्निहितया उपस्थितया भाव्यम् ।

वासबी—नट्या नतिनाट्यम् ! नाम साधु संपन्नम् ।

( ततः प्रविशति मल्लिका )

मल्लिका—यथा मया चिन्तितं, तथैव आपतितम् । राज्ये यत्र यावन्तो बुद्धशिष्याः तान् सर्वान् आनेतुं महाराजः अजातशत्रुः दूतान् प्राहिणोत् । एवं कापि ग्रहपूजा प्रचलति, कदाचित् शनिग्रहस्य कदाचित् रविग्रहस्य ।

रत्नावली—साधु साधु । एवं स बुद्धस्य यावन्तः सन्ति शिष्याः तान्

सर्वान् देवदत्तशिष्याणां हस्ते समर्पितवान् । एवं कालविलम्बः परिहृतो भविष्यति ।

मल्लिका—नैतदर्थम् । ते राजार्थम् अहोरात्रं पापमोचनमन्त्रं पठितुम् आगताः । महाराजः एकपद एव अभिभूतो जातः ।

वासवी—ततः किम् आपन्नम् ?

मल्लिका—आश्चर्यम् ! अद्य जनश्रुतिः ते कर्णे न पतिता ! सर्वैरिदमनुशीयते । मध्येमार्गं बिम्बिसारमहाराजो निहत इति ।

वासवी—सर्वनाशः । एतत् न कदापि सत्यं स्यात् ।

मल्लिका—किंतु एतावत् सत्यमेव - महाराजः अग्निज्वालायां प्रक्षिप्तः, स केनापि अनुतापेन विह्वल आस्ते ।

वासवी—हन्त केयं वार्ता ?

रत्नावली—लोकेश्वर्या महाराज्या किमिदं श्रुतम् ?

मल्लिका—एतां महतीमप्रियवार्तां ये तस्याः कथयिष्यन्ति तान् सा द्विधा खण्डयिष्यति । कस्यापि धैर्यं न स्यात् ।

वासवी—सर्वनाशः सञ्जातः । एतावतो महतः पापस्य आघातात् राजप्रासादे न कोऽपि मुच्येत । धर्मस्य हेतोः स्वेच्छया एवं करणं किं सह्यं स्यात् ?

रत्नावली—पश्यामि त्वां वासवि ! नष्टधाः शिष्यभावदिशि पुनरपि त्वम् आवलस इति । यदा भयेनाक्रान्तो मनुष्यः तदा धर्मस्य मूढश्रद्धायाम् आत्मानं गोपयितुं प्रयतते ।

वासवी—कदापि न । अहं किञ्चिदपि न बिभेमि । अपि भद्रायै एतं वृत्तान्तं निवेदयिष्यामि ।

रत्नावली—मिथ्या व्याजं कृत्वा मा पलायस्व । भयं ते सञ्जातम् । तवेमम् अवसादं दृष्ट्वा मे महती लज्जा जायते । एतत् केवलं नीचसंसर्गस्य फलम् ।

बासवी—अन्याय्यं वदसि त्वम् । अहं न किञ्चिदपि भीतास्मि ।

रत्नावली—तथा चेत् अशोकवने नर्तनं द्रष्टुं याहि ।

बासवी—कथं न यास्यामि । त्वं मन्यसे माम् आकृष्य यास्यामीति ।

रत्नावली—इतः परं मा विलम्ब्यताम् । मल्लिके, श्रीमतीमिह आहूय, अलंकृतां वा अनलंकृतां वा । राजकन्यका यद्यपि नागन्तुम् इच्छन्ति, राजकिंकरीभिः सर्वाभिः आगन्तव्यम्; अन्यथा कौतुकम् असंपूर्णं स्यात् ।

बासवी—ततः श्रीमती आयाति, पश्य, पश्य; यथा स्वप्ने चरन्ती, यथा वा मध्याह्ने दीप्ता मरीचिका, स्वस्या अन्तः न किमपि आवहन्तीव ।

( ततः प्रविशति, शनैः शनैः, गायन्ती श्रीमती )

श्रीमती—महाजीवन हे देव ! महामरण हे विभो ।
गच्छाम्यहं त्वां शरणं गच्छामि शरणं प्रभो ॥

अन्धकारे प्रदीपस्य शिखां प्रज्वालय प्रभो ।
ज्योतिस्तिलकमाधत्स्व लज्जामपि च मे हर ॥

रत्नावली—इतोऽस्ति पन्थाः । किमस्माकं वचः कर्णे न पतिता ? इत इतः ....

श्रीमती—चरणं स्पर्शरत्नं ते शरणं यामि, याम्यहम् ।
यत्किञ्चिन् मलिनं क्रूरं सर्वं विलयमेतु तत् ॥

यद्यद् विरूपं भवति तत्तत् सम्यक्त्वमेतु च ।
धुनीहि विधुनीहि त्वं सर्वमावरणं मम ॥

रत्नावली—वासवि ! किं तिष्ठसि ? एहि ।

बासवी—नाहमागच्छामि ।

रत्नावली—कुतः ?

वासवी—सत्यं कथयामि—नाहं गन्तुं शक्नोमि ।

रत्नावली—अपि भीतासि ?

वासवी—आम्, भीतास्मि ।

रत्नावली—भेतुं न लज्जसे ?

वासवी—मात्रयापि न । श्रीमति ! तदेव क्षमापणमन्त्रं .... ....

श्रीमती—उत्तमाङ्गेन वन्देऽहं पादपांसुं तवोत्तमम् ।
बुद्धौ यत्स्खलितं, दोषं बुद्धस्तं क्षमतां मम ॥

वासवी—"बुद्धस्तं क्षमतां मम । बुद्धस्तं क्षमतां मम । बुद्धस्तं क्षमतां मम ।"

(श्रीमती गायति)

पराजयं स प्रददौ अभिमानं बभञ्ज च ।
ज्वाला क्षीणा; म्लानदीपभाजनं व्यर्थतां गतम् ॥

अद्य ते ज्वालया तारालोकेन च तवाधुना ।
अवसानं यातु सन्ध्या त्वदङ्गच्छायया तथा ॥

एहि पारान्तरसख, वीजन्ते पथि वायवः ।
निर्वाणा वर्तयो गेहे पारान्तरसख, एहि भोः ॥

सांप्रतं विजने वाटे कूटेऽन्धतमसस्य च ।
मयानीतं गीतमेतत नाशाय निखिलस्य च ॥

[ निष्कान्ताः सर्वाः ]

( ततः प्रविशति गायन् भिक्षुसंघः )

भिक्षुसंघः— कालुष्यतामसहर जयो भवतु ते जयः ।
अमृताम्भस्सेककारिन् सर्वलोकमय प्रभो ॥

महाशान्ते महाक्षेम महापुण्य महाप्रिय ।
ज्ञानसूर्योदयालोक ! रात्रिं सतिमिरां जहि ॥

जहि दुःसह दुःस्वप्नम् अपाकुरु भयं मम ।
महाशान्ते महाक्षेम महापुण्य महाप्रिय ॥

दुर्दिने मोहमलिने गहने जटिले पथि ।
संशयोद्भ्रान्तपथिकः प्रार्थये करुणामय ॥

हर मे दुर्गतिभयं तरणं दुःखबन्धतः ।
मुक्तेः परिचयं चैव भगवन् संप्रयच्छ मे ॥
महाशान्ते महाक्षेम महापुण्य महाप्रिय ॥

## चतुर्थोऽङ्कः

[ अशोकतलम् । भग्नः स्तूपः । भग्नप्राया आसनवेदिः ।
ततः प्रविशति रत्नावली, सह किंकरीभिः रक्षिणीभिश्च ]

प्रथमा किङ्करी—अस्माकं प्रासादकार्ये विलम्बो भवति ।

रत्नावली—किञ्चिदिव प्रतिपालयत । महाराज्ञी लोकेश्वरी स्वयमागत्य द्रष्टुं वाञ्छति । यदि सा नायाति, नर्तनमारब्धुं न शक्यते ।

द्वितीया किङ्करी—तव आदेशेन आगता वयम् । किन्तु अस्य अधर्मस्य भयेन मनो नः व्याकुलितं वर्तते ।

तृतीया किङ्करी—अत्रैव प्रभवे पूजा दीयते, अत्रैव नट्या नाट्यस्य च दर्शनम् ! धिक्, धिक् ! अस्य पापस्य क्षालनं कथं भविष्यति ?

चतुर्थी किङ्करी—एतावान् महाबीभत्सव्यापारः अत्र भविष्यतीति न ज्ञातम् । न शक्यं स्थातुमस्माभिः, न किञ्चिदपि शक्यम् ।

रत्नावली—मन्दभागिन्यः ! न श्रुतं युष्माभिः—बुद्धस्य पूजा अस्मिन् राज्ये निषिद्धा इति ।

चतुर्थी किङ्करी—राजानमवमन्तुम् अस्माभिरपि न शक्यते। भगवतः पूजां वा न कुर्मः, किन्तु तदर्थं तदपमानं कर्तुं न शक्नुमः।

प्रथमा किङ्करी—राजप्रासादनटीनां नाट्यं राजकन्यानां राजवधूजनानां च कृते। अस्यां सभायां किमस्माकम् अस्ति, वदत? यद् अस्माकं स्थानं तत्र गच्छामः।

रत्नावली—(रक्षिणीः विलोक्य) मा एता गन्तुमनुमनुध्वम्। अद्य शीघ्रं तां नटीम् आह्वयत।

प्रथमा किङ्करी—राजकुमारि! न एतद् पापं नटीं स्प्रक्ष्यति। एतत् पापं तवैव।

रत्नावली—यूयं चिन्तयत – युष्माकं नूतनस्य अस्य धर्मस्य पापम् अहम् अङ्गीकरोमि इति।

द्वितीया किङ्करी—मनुष्यभक्तेः अवमाननं चिराय पापतया गणितम्।

रत्नावली—अस्या नटीसाध्व्याः वातेन सर्वा अपि यूयं स्पृष्टा इति पश्यामि। मा मां पापभयं प्रदर्शयत। नाहं शिशुः।

रक्षिणी—(प्रथमां किङ्करीं प्रति) वसुमति! वयं श्रीमत्यां भक्तिम् अकुर्म। किन्तु तदयुक्तमभूत्। अद्य नर्तितुं तयैव अङ्गीकृतम्।

रत्नावली—नाङ्गीकरिष्यति? कथं राजादेशाद् न भेष्यति?

रक्षिणी—वयं तु बिभीमः। किन्तु—

रत्नावली—नट्याः स्थानं युष्मदीयादुन्नतम्?

प्रथमा किङ्करी—न वयं तां नटीं गणयामः, तस्यां स्वर्गस्य आलोकम् अपश्याम।

रत्नावली—नटी स्वर्गं गत्वापि नर्तिष्यति! इदं यूयं न जानीत।

रक्षिणी—राजादेशः स्यात्, श्रीमत्यां न प्रहर्तव्यं स्यात् इति भयम् आसीत्। किन्तु अद्य ज्ञायते—राजादेशं प्रतीक्षितुम् आवश्यकता नास्तीति।

प्रथमा किङ्करी—तिष्ठतु तावत् अस्याः पापिन्या वार्ता । किन्तु अनेन पापदृश्येन अक्षिणी कलङ्किते चेत् का गतिः स्यात् !

रत्नावली—अद्यापि नस्याः अलङ्कारः न पूर्णः ? किं पश्यत युष्माकं नटीसाध्व्याः अलङ्कारे कियानभिनिवेश इति ।

प्रथमा किङ्करी—इत आगच्छति । आः ! कीदृक् जाज्वलीति ।

द्वितीया किङ्करी—स्वपापदेहोपरि शतवर्तिकानां प्रदीपानां प्रकाशं प्रसारितवती ।

( ततः प्रविशति श्रीमती )

प्रथमा किङ्करी—पापिष्ठे श्रीमति ! भगवतः आसनस्य समीपे अद्य नर्तिष्यसि । किं न लज्जसे ? तव द्वावपि पादौ शुष्कीभूय कथं न काष्ठप्रायौ जातौ ?

श्रीमती—नास्ति गत्यन्तरम् । एवमेव आदेशः ।

द्वितीया किङ्करी—नरकं यास्यसि चेत , तत्र लक्षं वर्षान् ज्वलतामङ्गाराणामुपरि अहोरात्रं नटिष्यसि । एतद् अद्यैवाहं कथयामि ।

तृतीया किङ्करी—पश्यैनाम् । पापा एषा आशिरः आ च पादं आभरणानि धत्ते । एकैकमाभरणम् अग्निश्रृङ्खलीभूय त्वन्मांसं पीडयिष्यति । तव नाडीषु प्रत्येकं ज्वालास्रोतांसि प्रवक्ष्यन्ति ।

( ततः प्रविशति मल्लिका )

मल्लिका—( रत्नावलीं प्रति जनान्तिकं ) राज्ये बुद्धपूजाया या प्रतिबन्धघोषणा कृतासीत् सा उद्धृता । प्रतिरथ्यं दुन्दुभिवादनेन घोषणा भवति । कदाचित् अत्रापि ते आगमिष्यन्ति । अद्यैवैतत् कथयामि । अन्यापि वार्ता अस्ति । अद्य महाराजः अजातशत्रुः स्वयमत्रागत्य पूजां करिष्यति । तदर्थं सज्जो भवति ।

रत्नावली—किञ्चित् त्वरया गच्छ, मल्लिके, महाराज्ञीं लोकेश्वरीं शीघ्रमानय।

महाराज्ञी—इतः सैव समागता।

(ततः प्रविशति लोकेश्वरी)

रत्नावली—महाराज्ञि! इतो भवत्या आसनम्।

लोकेश्वरी—तिष्ठ। श्रीमत्या सह अस्ति मे निभृतं कथयितव्यं किमपि।
(श्रीमतीं जनान्तिकं आहूय) श्रीमति।

श्रीमती—किं महाराज्ञि?

लोकेश्वरी—एतद् गृहाण। त्वदर्थमेव समानयम्।

श्रीमती—किमानयद् भवती?

लोकेश्वरी—अमृतम्।

श्रीमती—बोद्धुं न शक्यते।

लोकेश्वरी—विषम्; इदं पीत्वा म्रियस्व। परित्राणं लप्स्यसे।

श्रीमती—परित्राणार्थम् उपायान्तरं नास्ति?

लोकेश्वरी—नास्ति। रत्नावली प्रथममेव गत्वा राज्ञः सकाशं त्वन्नृत्यार्थम् आदेशमानीतवती। तमादेशं न किञ्चिदपि शक्यमतिक्रमितुम्।

रत्नावली—महाराज्ञि! इतः समयो नास्ति। नृत्यमारभ्यताम्।

लोकेश्वरी—गृहाण, शीघ्रं पिब। अत्र मरिष्यसि चेत् स्वर्गं प्राप्स्यसि। अत्र नर्तिष्यसि चेत् यास्यसि अवीचिं नरकम्।

श्रीमती—सर्वप्रथमम् आदेशं पालयिष्यामि।

लोकेश्वरी—श्रीमति, नर्तिष्यसि?

श्रीमती—आम्, नर्तिष्यामि।

लोकेश्वरी—भयं नास्ति ते?

श्रीमती — नास्ति, किञ्चिदपि नास्ति ।

लोकेश्वरी — त्वां न कोऽपि उद्धर्तुं पारयति ।

श्रीमती — क उद्धर्ता तमपहाय !

रत्नावली — महाराज्ञि ! इतः परम् एकमपि मुहूर्तं विलम्बो मास्तु । बहिः प्रक्षोभशब्दः श्रूयते । कदाचिद् विद्रोहिणः एतद् राजोद्याने प्रवेक्ष्यन्ति । नटि ! नर्तनमारभ्यताम् ।

( श्रीमती गायन्ती नृत्यति )

श्रीमती —

१. क्षमस्व मां क्षमस्व मां नमोऽस्तु ते नमोऽस्तु ते ।
२. स्मरामि निरुपमान ते स्मरामि निरुपमान ते ॥
३. नृत्यरसे मम चित्तं समुत्पतत किमपि तच्चदति ।
आकुलरवो ममायं सकलस्याप्यस्य देहस्य ।
४. स्तवमन्त्रहारभावं नवजन्मन्यद्य संयातु ॥
५. तव वन्दनं विराजत्वस्यां संगीतभङ्गयां मे ॥

रत्नावली — किमिदं नर्तनम् ? केवलं नर्तनस्य भावना भवति । को वार्थः अस्य गानस्य ?

लोकेश्वरी — मा मा प्रतिबध्नीत ।

श्रीमती — ( गायन्ती नृत्यति )

हन्त व्यथा मे परमा कंपः प्राणस्य हन्त मे ।
कम्पो मे वक्षसो हन्त किं वा सञ्जातमद्य मे ॥

खेलन्ति वीचयो हन्त शान्तिसागरवक्षसि ।
जागर्ति किमपीहाद्य सौन्दर्यमपि चाद्भुतम् ॥

सर्वा मे चेतना सर्वा वेदनारावनीकृता ।

पादे ते साधनीभूता; मैतन्नश्यतु लज्जया ।
अस्यां सङ्गीतभङ्ग्यां मे वन्दनं ते विराजति ॥

रत्नावली—किमिदम् ? एषा आभरणानि एकैकशः उन्मुच्य अस्यां वेद्याम् एकैकस्मिन् आवर्तने प्रक्षिपति । ततो याति कङ्कणम् ! ततः केयूरं गच्छति ! ततो हारः ! महाराज्ञि ! पश्य राजप्रासादीया एते समस्ताः अलङ्काराः ! अवमाननमिदम् ! श्रीमति ! ते मद्दत्ता-लङ्काराः ! सञ्चित्य पुनः तान् मस्तकोपरि ते धारय । गच्छ, अद्यैव ।

कोकेश्वरी—शान्तिः, शान्तिः । न कोऽप्यस्या दोषः । ईदृशम् आभरण-विसर्जनं नर्तनाङ्गं भवति । आनन्देन मे शरीरमान्दोलितम् । (स्वगलात् हारमुन्मुच्य वेदिं प्रति क्षिपन्ती) श्रीमति ! मा विरम, मा विरम ।

श्रीमती—(गायन्ती नृत्यति)

काननान्नाहरं पुष्पं फलं किञ्चन नाहरम् ।
कलशो मम शून्योऽयं न तीर्थजलपूरितः ॥

तन्व्यां तनौ मे हृदयधारा या बन्धहारिकाः ।
पूजापुण्यविधौ सर्वाः चरणे ते भवन्त्विमाः ।
अस्यां सङ्गीतभङ्ग्यां मे वन्दनं ते विराजति ॥

रत्नावली—किमिदं नर्तनस्य विडम्बनम् । नटी वेषवस्त्राणि एकैकशः प्रक्षिपति ! पश्य महाराज्ञि ! अन्तः भिक्षुण्याः पीतवस्त्रम् ! किं पूजामिवैतत पश्यसि ! महाराजस्य दण्डविधानं किं न स्मर्यते ?

रक्षिणी—श्रीमत्या पूजाया मन्त्रपाठः कोऽपि न कृतः ।

श्रीमती—(जानुभ्यामुपविश्य) बुद्धं शरणं गच्छामि .... ....

रक्षिणी—(श्रीमत्या मुखं हस्तेन पिधाय) विरम दुःसाहसिके । तिष्ठ किञ्चित ।

रत्नावली—राज्ञः आदेशं पालय ।

श्रीमती—बुद्धं शरणं गच्छामि । धर्मं शरणं गच्छामि ।

किंकरीगणः—श्रीमति । मा मा सर्वनाशमापादय । विरम, विरम ।

रक्षिणी—मा व्रज मरणमुखं, उन्मत्ते ।

द्वि. रक्षिणी—अञ्जलिं बद्ध्वा प्रार्थये; दयां कृत्वा मयि शान्ता भव ।

किंकरीगणः—चक्षुर्भिः द्रष्टुं न शक्यते । पलायामहे, पलायामहे ।

रत्नावली—राज्ञः आदेशं पालयत ।

श्रीमती—बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, संघं शरणं गच्छामि ।

लोकेश्वरी—(जानुभ्यामुपविश्य श्रीमत्या सह)

बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि; संघं शरणं गच्छामि ।

(रक्षिण्या श्रीमत्यां प्रहृतायां, श्रीमती वेद्युपरि पतति)

रक्षिण्यः—"क्षमां कुरु क्षमां कुरु"

(इति वदन्त्यः एकैकशः आगत्य श्रीमत्याः पादधूलिमाददति.)

लोकेश्वरी—(श्रीमत्या शिरः अङ्कनादाय)

नटि ! तवेदं भिक्षुणीवस्त्रं मे देहि ।

(तस्य वस्त्रस्यैकदेशं शिरसि निधाय)

इदं मदीयम् ।

(रत्नावली भूमौ निमज्जति)

मल्लिका—किं चिन्तयसि ?

रत्नावली—(वस्त्राञ्चलेन मुखमाच्छाद्य) अद्य भीतास्मि ।

(प्रतीहारी प्रविशति)

प्रतीहारी—महाराजः अजातशत्रुः भगवतः पूजामादाय उद्यानद्वारे देवी-संमतिमपेक्षमाणः तिष्ठति ।

मल्लिका—गच्छ। अहं महाराजाय देवीसंमतिं निवेद्य आगच्छामि।

( इति निष्क्रान्ता मल्लिका )

लोकेश्वरी—भणत सर्वा यूयम् - बुद्धं शरणं गच्छामि।

सर्वाः—( रत्नावलीं वर्जयित्वा ) - बुद्धं शरणं गच्छामि।

लोकेश्वरी— - धर्मं शरणं गच्छामि।

सर्वाः—( रत्नावलीं वर्जयित्वा ) - धर्मं शरणं गच्छामि।

लोकेश्वरी— - संघं शरणं गच्छामि।

सर्वाः—( रत्नावलीं वर्जयित्वा ) - संघं शरणं गच्छामि।

अन्यन्मे शरणं नास्ति बुद्धो मे शरणं वरम्।
एतेन सत्यवाक्येन भूयान्मे जयमङ्गलम्॥

( ततः प्रविशति मल्लिका )

मल्लिका—महाराजः न आगतः, प्रतिनिवृत्य गतः।

लोकेश्वरी—कुतः?

मल्लिका—वार्तामेतां श्रुत्वा भयेन अकम्पत।

लोकेश्वरी—कस्मात् तस्य भयम्?

मल्लिका—तस्या एव हताया नट्याः।

लोकेश्वरी—चलत, शिबिकामानयामः। अस्या देहं सकला वयं वक्ष्यामः।

( रत्नावलीं वर्जयित्वा सर्वा निष्क्रान्ताः )

रत्नावली—( श्रीमत्याः पादस्पर्शं कृत्वा प्रणमति। जानुभ्यामुपविश्य )

बुद्धं शरणं गच्छामि।
धर्मं शरणं गच्छामि।
संघं शरणं गच्छामि।

॥ इति समाप्ता नटीपूजा ॥

# रवीन्द्रः संस्कृतं च

## डा. वे. राघवः

स्वकीयजीवनानुस्मरणे [ Reminiscences ] रवीन्द्र एवात्मना बालेन सता यद्यत् पठितं तदनुकीर्तयन् स्वशैशवे ईश्वरनाम्ना ग्रामपाठशालोपाध्याय-वृत्तेः विश्रान्तेन रामायणमहाभारतकथानां वाचनम्, तत्त्वरत्नाभिधेन पण्डितेन संस्कृतव्याकरणसूत्राणां बोधनं च वर्णयति। तथा वेदान्तवागीशपुत्रेण ज्ञान-बाबूनाम्ना कुमारसम्भवस्याध्यापनम्, रामसर्वस्वनाम्ना पण्डितेन च सामान्यतः स्वस्य संस्कृताध्ययनाभिवृद्धेः पर्यवेक्षणं च (पृ. ११०)। अनन्तरं (पृ. १०५) पित्रा सह वाल्मीकिरामायणस्य पठनमपि कथयति। अहमदाबाद् - नगरे प्राड्विवाकपदाधिकृतेन स्वभ्रात्रा सह यदा कालं कमपि स अनयत्, तदा भ्रातुः पुस्तकसङ्ग्रहे हेबर्लिन् - नाम्ना सङ्कलितं काव्यसङ्ग्रहं दृष्ट्वा तमादाय उदारमधुरां संस्कृतशब्दधारां, छन्दसां गतिं, विशिष्य अमरुशतकं च पाठंपाठं यमानन्दमन्वभवत्, तमपि वर्णयति।

यद्यपि बाल्ये तस्य संस्कृतश्लोकानामन्यैर्वाचितानां स्वयं वा पठितानामर्थावबोधो नासीत्, तथापि भाषाया अन्यादृशी ध्वनिमाधुरी अन्तरनुप्रविश्य कमपि तस्य मनसि मोदमेदुरं प्रक्षोभमजनयत्। कदाचित् नदीपरिसर-वर्तिनि प्रासादोपरितले स्वज्येष्ठभ्रात्रा अतर्कितोपचितकादम्बिनीदर्शनेरितेन उच्चैरुदीर्णान् कतिचन मेघसन्देशश्लोकान् अशृणोत; अर्थो न बुद्धः; न च तद्बोधोऽपेक्षितः; परवशेन भ्रात्रा उदारस्वरलयाभ्यां यत्ते श्लोका गीताः,

तदेव स्वस्य अलमभूत् इति अन्यत्र वर्णयति (पृ. ७३)। तदानीमुप्तमेव बीजं पश्चात्कवेः मेघदूत - सेकाल् - नामककाव्यद्वयरूपेण उदभिद्यत।

गीतगोविन्दमधिकृत्य लिखति (पृ. ७४): "कतिवारं मयेदं पठितमिति न वक्तुं शक्यते। 'निभृतनिकुञ्जगृहम्' इति पदं बुद्धौ निखातमभूत्, तदेकमासीदलम्, व्याप्नोति स च मनः कयापि अनिर्वर्णनीयया शोभया।"

कविर्विहारिलालचक्रवर्ती रवीन्द्रस्य गृहं मुहुर्मुहुरागच्छत्। स वाल्मीकिकालिदासयोः श्लोकानुदाहृत्य तत्सौन्दर्यं व्याकरोत्; एकदा कुमारसम्भवस्य उपक्रमश्लोकमधिकृत्य स यदवोचत्, तद्रवीन्द्रेण स्मर्यते— अस्मिन् पद्ये 'आ' - कारस्य कविना बुद्धिपूर्वमनेकशोऽभ्यासः कृतः; 'देवतात्मा' इत्यारभ्य 'नगाधिराजः' इत्यन्तमयमभ्यासो दृश्यते; हिमालयस्य माहात्म्यं विस्तारं च साक्षात्कर्तुमयम् 'आ' - कार उपकरोति इति।

पितुः भगवद्गीतापुस्तके मुख्याः श्लोका अङ्किता आसन्। पित्रा चोदितो रवीन्द्रः श्लोकानेतान् सानुवादं पृथक् पत्रेषु अलिखत् (पृ. ८५)।

एवं पश्चात्कदाचित् किञ्चिदिव प्रौढेन तेन पुनश्च कुमारसम्भव आलोकितः; तदा प्रथमसर्गे "भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः" इत्येतच्छ्लोकस्थो भागीरथीवायुः देवदारुमिव यदास्मानपि अकम्पयत्, यच्च कृत्स्नकाव्यस्याप्यध्ययनेऽचोदयत्तदन्यत्रोपन्यस्यति।

आदिकविना वाल्मीकिना रवीन्द्रस्य मनो गाढं वशीकृतम् इत्यत्र तेन कृतं "वाल्मीकिप्रतिभा" - नामकं रूपकमेवालं निदर्शनम्। क्रूरव्याधजीवितमपहाय यथा स करुणामसृणः ऋषिः कविश्च बभूव, साद्भुता काव्योदयकथा रवीन्द्रं न केवलं तस्या नाटकीकरणे न्ययोजयत्, परन्तु स्वयं वाल्मीकिभूमिकां गृहीत्वा नटनेऽपि। समनन्तरमेव 'कालमृगया' इति दशरथशापवृत्तान्तमादाय रवीन्द्रेण नाटकान्तरमपि रचितम्। स्वजीवितवृत्तान्ते रवीन्द्रः स्वयमेव

स्मरति—'एतयो रूपकयोर्निर्माणे यावानुत्साहो भाववेगश्च मे आसीत्, स कस्मिन्नपि मदीये अर्वाचीने काव्ये नाभवत्' इति। दिनेशचन्द्रसेन-महाशयस्य 'रामायणी कथा' - इति ख्यातस्य ग्रन्थस्य रवीन्द्रेण या भूमिका लिखिता,* तत्र तस्य आदिकवौ, तथा व्यासे, इतिहासद्वये, तत्प्रतिपाद्यमाने भारतीये संप्रदाये धर्मे च योऽभिनिवेशः स सम्यग् ज्ञायते।

कालिदाससृष्टिषु रवीन्द्रस्य अन्यादृशी आसक्तिरासीत्। सा चानेकेषु स्थलेषु कवेरस्य लेखेषु स्पष्टं दृश्यते। आरण्यकं दर्शनम् (Religion of the Forest) इति प्रसिद्धेऽस्य लेखे† कुमारसम्भवस्य तृतीयसर्गस्य सौन्दर्यं, तथा शाकुन्तले प्रदत्तस्य तपोवनस्वरूपस्य उदात्तता च रवीन्द्रेणानितरसाधारण्या दृष्ट्या शैल्या च उल्लिखिते। रवीन्द्रस्य प्राचीनसाहित्यादुद्धृत्य 'कुमार-सम्भवं शाकुन्तलं च' इति शीर्षकेण अनूद्य संस्कृते यत्प्रकाशितं§ तत्रापि कवीन्द्रस्यास्य कालिदासहृदयावगाहने प्रावण्यं प्रावीण्यं चास्माभिरनुभूयेते। तथैव केदारनाथदासगुप्तेन आङ्गभाषया शाकुन्तलस्य योऽनुवाद आङ्गरङ्गस्थले प्रयोगार्थं रचितः, तस्य 'शाकुन्तलस्याभ्यन्तरोऽर्थः' इति शीर्षकेण प्रकाशितायां प्रसिद्धायां रवीन्द्रभूमिकायां च।

'रवीन्द्रस्य प्रतिभा तस्याः स्वभावः पारम्परी च' इति विषयं परिशी-लितवता आचार्यक्षितिमोहनसेनेन$ रवीन्द्रसाहित्ये किं किं साक्षाद्वा छायया वा संस्कृतोपजीवि प्राचीनभारतीयसंस्कृतिवासनावासितं च, केषां कथाः कथांशाः भावा वा वेद - उपनिषद् - इतिहास - काव्यादिभ्यः उद्धृता इति विस्तरेण निरूपितम्। नैवेद्य - नामके रवीन्द्रस्य काव्ये कठ-श्वेताश्वतराणां भावाः,

---

* इयं संस्कृतसाहित्यपरिषत्पत्रिकायां (४७-७-१९६२) संस्कृते अनूद्य प्रकाशिता।

† अस्यां सञ्चिकायामेवानूद्य प्रकाशितोऽयं लेखः।

§ संस्कृतसाहित्यपरिषत्पत्रिकायाम् (४४-६-८. १९६१, पृ. १५६-१६५; अनुवर्ति)।

$ *Visvabharti Quarterly*, Tagore 80th Birthday Number, 1941, ed. by Sri K. R. Kripalani.

ब्राह्मण-अभिधे काव्ये सत्यकामजाबालेः कथा, सेकाल् - नामके मेघदूत-चित्राणि, एवं चैतालि-नामके ऋतुसंहारमेघदूतयोरनुवादाः, खेया-शेषोपहारादिषु ऋग्वेदप्रतिध्वनयः, कृष्णयजुर्वेदादभ्यूहितः शारदोत्सवो नाम प्रबन्धः, वसुन्धरा - नामके अथर्ववेदीयपृथ्वीसूक्तार्थसङ्क्रमः, एतानि चान्यानि चात्र पर्याप्तानि निदर्शनानि भवन्ति। प्राचीनभारतं, तत्संस्कारश्च यावत् रवीन्द्रसाहित्ये प्रतिफलितं द्योतते, तत् 'रवीन्द्ररचनासु चिरन्तनभारतम्' इत्याख्ये लेखे* सुष्ठु प्रतिपादितम्।

१९४० - वर्षे कलकत्ताविश्वविद्यालये मेट्रिकुलेषन् - परीक्षार्थं पाठ्यमानाभ्यो भाषाभ्यः संस्कृतस्य बहिष्कारो बहुभिः चिकीर्षितः। तदानीं रवीन्द्रस्य प्रयत्नेनैव संस्कृतस्य स्थानमच्युतमतिष्ठत्। भारतीयेन सता एकैकेनापि बालकेन संस्कृतमध्येतव्यमिति महाकवेर्मनीषा।

एवं च यां काञ्चिद् मातृभाषामालम्ब्य आधुनिकस्य भारतीयस्य कवेर्लेखकस्य वा वदनं वदतु, तस्यान्तरात्मना तु संस्कृतरसे निमग्नेन भवितव्यमित्यपि निदर्शयति रवीन्द्रस्य कथा प्रथा च।

व्यष्टिदृष्ट्या इयन्तस्तस्य प्रबन्धाः संस्कृतानुबन्धिन इति निर्दिष्टाः। यदि समष्टिदृष्ट्यालोक्यते तदानीं नास्त्येव स महाकवे रवीन्द्रस्य लिखितविशेषः, य आर्षस्य भारतीयस्य धर्मस्य संस्कारस्य च आध्यात्मिकत्वं सारतां तथा आधुनिकस्य पाश्चात्यस्य अधियन्त्रस्य बाह्यत्वमवरतां च न व्याख्याति। तत्कवितासु तदुद्घोषिते सन्देशे च प्राचीनार्वाचीनभारतयोरनुस्यूतिः सन्धानं च दृश्येते। कालिदासजयदेवादिपारम्परीमेवोद्द्योतयन्नुदितोऽसौ नूतनो रवी रवीन्द्रनाथो नाम।

---

* सं. सा. प. पत्रिकायां (४७-२-१९६४) श्रीवटुकनाथभट्टाचार्यस्य।

# निकषोपलः

( पृथक् पुस्तकरूपेण प्रकाशितस्य रवीन्द्रसंस्कृत-साहित्यस्य विमर्शः )

**गीताञ्जलि - संस्कृतम्** अनुवादकः - अध्यापक श्रीकामिनीकुमार-अधिकारी। प्राप्तिस्थानम्—श्रीचिन्मय-अधिकारी, शिलचर ( राङ्गीरखारी ) आसाम्। मूल्यं रू. १ - ५०.

भूचक्रवालव्याप्तधवलयशसः जगत्कवेः ठाकुरमहाभागस्य कतिपयानि गीतान्यत्र संस्कृतेन अनूदितानि। अनूदितानां भागानां वङ्गभाषामयानि मूलगीतान्यपि पुस्तकस्यास्यान्ते प्रकाशितानि। श्रीकामिनीकुमारस्यायमीदृशो यत्नः श्लाघनीय एव। किन्तु छन्दोभङ्गयतिभङ्गयोः निवारणे असाधुशब्ददूरीकरणे च अनुवादकेन सविशेषा दृष्टिः पातनीया आसीत्, तत्र यतिभङ्गस्तावत्—कीर्तिर्भर्तृहरेर्जयोऽति जयदेवस्येति यस्याः कृपा इत्यत्र स्पष्ट एव। एवं वृत्तभङ्गस्यापि बहून्युदाहरणानि। संयुक्ताक्षरे परे पूर्वस्य ह्रस्ववर्णस्य गुरुत्वं भवतीति कविनाऽनेन विस्मृतम्। तथा हि कविकृते मङ्गलश्लोके—'भासः स्वप्नमयं सुकाव्यमकरोत् यत्प्रीतिस्निग्धाक्षरम्'। अस्यां पङ्क्तौ स्थूलमुद्राङ्किते भागे उक्तो दोषः स्पष्ट एव। अथापि कवेः ललितशब्दप्रयोगेऽभिरुचिं नितरामभिनन्दामः। मुद्रणं, पत्रं, बाह्यो रचनाप्रकारश्च नयनमाकर्षन्ति।

—को. ल. व्या. शास्त्री

**गीताञ्जलिः**—अनुवादकः - पुल्लेल श्रीरामचन्द्रः, संस्कृतोपन्यासकः, आर्ट्स् अण्ड् सैन्स् कालेज्, वरङ्गल्, आन्ध्रप्रदेशः। मूल्यं सामान्याङ्कः रू. ३, विशेषाङ्कः रू. ४.

विश्वविख्यातयशसः महाकवेः श्रीठाकुरस्य कृतिः गीताञ्जलिः सुप्रसिद्ध एव। स प्रायेण लोके सर्वास्वपि भाषास्वनूदितो वर्तते। नाद्य यावत् अभिनन्दनीयः संस्कृतानुवादः केनापि सम्पादितः। पुल्लेल श्रीरामचन्द्रेण कृतोऽयमनुवादः सुतरां सौष्ठवं भजते। अनुवादकेनादृतं मन्दाक्रान्तावृत्तं गीतानुरूपं रसानुगुणं च। अन्यूनानतिरिक्तोऽयमनुवादः विश्वकवेराशयं विशदमनुवर्णयति। मूल इवास्मिन्ननुवादेऽपि क्वापि चारुता भासते।

अत्र १०३ भागाः सन्ति। सैषा कृतिः प्रधानामात्याय श्रीजवाहरलाल्-महाभागाय समर्पिता, तस्य प्रतिच्छन्देनालङ्कृता च चकास्तितराम्। उत्तर-प्रदेशराज्यपालस्य श्री बि. रामकृष्णराव् - महाभागस्य आमुखेन प्रसाधिता वर्तते। अनुवादोऽयं न केवलं विश्वकवेः किन्त्वनुवादकस्यापि शब्दगुम्फन-नैपुणीं सुस्पष्टमाचष्टे।

—को. ल. व्या. शास्त्री

**रथरज्जुः**—अनुवादकः श्रीविमलकृष्णमतिलालः, एम्.ए., संस्कृत-कालेज्, कल्कत्ता। प्रकाशकः—बि. के. मोतिलालः, टेयूनगर, २४ पर्गाना

विश्वविश्रुतयशसा विश्वकविना रवीन्द्रनाथठाकुरेण मार्कि चत्वारिंशतो वर्षेभ्यः पूर्वं रथयात्रासमाख्या काचन नाटिका प्रणीता। पश्चात्काले कविनैव तस्या नाटिकायाः 'कालेर यात्रा' इति नामान्तरं कृतम्। 'रथरज्जुः' इति नाम अनुवादकेन कल्पितमिवावभाति। श्रीविमलकृष्णकृतोऽयमनुवादः अन्यू-नानतिरिक्तः अनुवाद्यस्य शोभां कात्स्न्र्येन परिपालयति। अनुवादकस्य संस्कृत-भाषाव्युत्पत्तिः सुतरां श्लाघनीया। अनुवादोऽयं द्विः रङ्गप्रयोगेणाधिकृतो ज्ञायते। ठाकुरकवेः शतवार्षिकोत्सवावसरे रचितोऽयमनुवादः स्थास्नुर्भविष्यति।

—को. ल. व्या. शास्त्री

मुक्तधारा--अनुवादकः-श्रीध्यानेश नारायण चक्रवर्ती, साहित्यशास्त्री। प्रकाशस्थानम् - संस्कृतपुस्तकभाण्डारम्, कलकत्ता, मूल्यं रूप्यकत्रयम्।

मुक्तधारा विश्वकवे रवीन्द्रनाथस्य प्रतीकरूपकाणामन्यतमा। यन्त्रं मानुषस्याविष्कारः। तेन स बलवत्तरः। कथं तस्योपयोगः स्यादित्यस्मिंस्तु मनुष्यधीरेव प्रमाणम्। दर्पसमालिङ्गिता यन्त्रशक्तिरनर्थपरम्परां प्रसूते। नियत्या प्रतिहन्यमाना यन्त्रमदोन्मत्तस्य अन्तरात्मानमेव विनाशयति सा। आधुनिकं यान्त्रिकं जगत् अवगच्छतु शिक्षामिमाम्। प्रवर्ततां प्रकृतिहिताय प्राकृतिकी सम्पदिति।

एकोनविंशतिशताब्दीयद्वाविंशतितमे वर्षे दिनसप्तकं पद्मावक्षसि नौकावासिकां स्वीकृत्य प्रत्याजगाम शान्तिनिकेतने कविगुरुः। ततः सप्तमि-दिने रूपकमेतद् विरचितम्। करस्य कृते प्रजापीडनं क्षेत्राधिपतेरासीत् स्वाभाविकी व्यवस्था। क्षेत्राधिपती रवीन्द्रनाथः किं विधास्यति? सैव सरणिः? अथवा पद्मायाः स्वच्छन्दधारेव तस्य प्रजासु वृत्तिर्विश्वस्वस्तये प्रवहेत्?

कविमानसे समुज्जृम्भितैषा भावना समालोच्यमानग्रन्थस्य कथा-वस्त्वात्मना पर्यणमत्। उत्तरकूटराजो रणजित्। "शिवतराइ" वासिन्यश्च तत्रभवतः प्रजाः। कति वर्षाणि सस्यदौस्थ्येन राजस्वप्रदानेऽसमर्थास्ताः। प्रजज्वाल राजकोपः। यन्त्राधिपतेर्विभूतेः कौशलाद् बन्धो निर्मितः। "शिवराइ"-प्रान्तमभितः प्रवहमाना मुक्तधारायाः स्वच्छन्दधाराऽरुध्यत। महत् कष्टमापतितं प्रजानाम्; महांश्च सन्तोषो रणजितः प्रभुत्वशक्तेः प्रतिष्ठापनात्। युवराजोऽभिजित् प्रजाप्राणः। दुर्दशामेतामसहमानो बन्धमभि-प्रचचाल निशायाम्। जानाति स बन्धस्य त्रुटिमेकाम्। तत्राघातमात्रमेव सहसोन्मुमोच जलधाराम्। निस्ससार स्वच्छन्दं "शिवतराइ"-भूभागे मुक्तधाराया धारा सह युवराजस्य स्नेहधारया जीवनधारया च। युवराजस्य जीवनदानं समुदजीवयत् प्रजाः।

श्रीमाता चक्रवर्ति-महोदयेन रूपकस्यास्य गीर्वाणवाण्याऽनुवादेन आधुनिकसमस्यासु विश्वकवेर्दृष्टिं समाधानञ्च विदुषां पुरतः समुपस्थाप्य महानुपकारः कृतः । महतीं विचारधारां प्रान्तीयभाषावरोधात् संमोच्य विश्वेषां कृते प्रवाहयामास अनुवादकोऽयम् । क्वचित् क्वचित् मूलं विहाय सञ्चरन्नपि, तथा संस्कृतोत्कर्षमपेक्षमाणोऽपि अनुवाद एव मूलमहिमानमातनुते । आधुनिकभारतस्य समुद्दीपने विजयतां कृतिरेषेति शम् ।

—सिद्धेश्वरभट्टाचार्यः

**रवीन्द्रप्रतिभा**—श्री सुधांशुदेवशर्मा काव्यतीर्थः, बि. ए. शास्त्री । प्राप्तिस्थानम्—संस्कृत बुक् डिपो, २०/१, कर्णवालिस् स्ट्रीट् , कलकत्ता-६ । मूल्यं २५ न. पै. ।

शतश्लोकात्मकमिदं खण्डकाव्यं रवीन्द्रनाथठाकुरस्य शतवार्षिकोत्सवावसरे प्रणीतम् । महाकवेः कीर्तिं महत्त्वं च वर्णयति । काव्येऽस्मिन् सहृदयमनोरञ्जका अर्थाः समनुवर्णिताः । महात्म-गान्धिं रवीन्द्र-महाकविं च समानामासिकामारोपयन् कविराह—

'रवीन्द्रो लेखिनीहस्तो यष्टिहस्तश्च गान्धिजिः' इति । श्लोकवृत्तनियमाः समुल्लङ्घिताः कविना ।

—को. ल. व्या. शास्त्री

# रवीन्द्रसाहित्यसंस्कृतानुवादानां सूची

अस्याः सूच्याः संपादने श्रीगोपिकामोहनभट्टाचार्यः, श्रीचिन्ताहरण चक्रवर्ती, श्रीफटिकलालदासः, श्री एस्. संबन्धः, श्री कु. वे. शेषाद्रिशर्मा, इत्येतैः साह्यमारचितम्; तेभ्यो विद्वद्भ्यः सुहृद्भ्यश्च धन्यवादाः समर्प्यन्ते ।

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| अधिकारी (कविता) ( विचारक ) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| अध्यापकः ( आख्यानम् ) | क्षितीशचन्द्रचट्टोपाध्यायः | मञ्जूषा | ११. | १-३. १९५६ |
| अन्त्येष्टि-संस्कारः ( रूपकम् ) | कमला | सूर्योदयः | ३८. | ७-९. पृ. ६९-७१. १९६२ |
| अपमानमहिमा (कविता) | अमरेन्द्रमोहनतर्कतीर्थः | सं. सा. प. प. | ५. | ११. १९२२ |
| अपमानवरः (दृश्यतां अपमानमहिमा) | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | नवम्बर् |
| अपमानितः ( दृश्यतां अपमानवरः ) | दुर्गादासगोस्वामी | सं. प्रतिमा-६ | संस्कृतरवीन्द्रम्-१९६६. | ९७-८ |
| अभिसारः (कविता) | अशोकनाथभट्टाचार्यः | सं. सा. प. प. | ९. | ३. १९२६ |
| " | अमरेन्द्रमोहनतर्कतीर्थः | " | १९. | ३. १९३६ |
| " | श्री इन्द्रमोहनचक्रवर्ती | " | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| " | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | सेप्टेम्बर |
| अभ्यर्थनम् ( रूपकम् ) | श्री अशोकचट्टोपाध्यायशास्त्री | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| असमाप्तः | दुर्गादासगोस्वामी | सं. प्रतिमा-६ | सं. रवीन्द्रम्-१९६६. | ९९-१०० |

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| अप्तारदानम् ( दीन - दान ) | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | जूलै |
| आत्मत्राणम् | दुर्गादासगोस्वामी | सं. प्रतिभा-६ | सं. रवीन्द्रम्-१९६६. | ९६-७ |
| आनन्दमयः ( कविता ) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| आरण्यकं दर्शनम् ( प्रबन्धः ) | को. ल. व्यासरायशास्त्री | सं. प्रतिभा-६ | सं. रवीन्द्रम्-१९६६. | पृ. १८८-२०१ |
| आविर्भावः ( कविता ) | श्रीविष्णुपदभट्टाचार्यः | मञ्जूषा | १२. | १२. १९५८ |
| आवेदनम् ( कविता ) | श्रीफटिकलालदासः | ,, | १३. | ७. १९५९ |
| उत्सवस्य दिवसः (प्रबन्धः) | श्री श्रीजीवन्यायतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| उर्वशी (कविता) | श्रीविष्णुपदमहाचार्यकाव्यतीर्थः | सं. सा. प. प. | ३१. | ११. १९४९; ३७-१. १९५४ |
| ,, | श्रीदुर्गादासगोस्वामी | मञ्जूषा | १२. | ७. १९५८ |
| ,, | श्रीविधुभूषणन्यायतर्कतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| ,, | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | डिसम्बर |
| कंकालम् ( आख्यानम् ) | श्रीविष्णुपदभट्टाचार्यः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| कचं प्रति देवयानीशापः (कविता) (विदाय अभिशाप) | श्रीफटिकलालदासः | मञ्जूषा | १४.<br>१५. | ६, ७, ९, ११, १२<br>१. १९६० |
| कचदेवयानीसंवादः | श्रीविधुभूषणन्यायतर्कतीर्थः | सं. सा. प. प. | ४३. | ४ - ७ |
| ,, | अमरेन्द्रमोहनतर्कतीर्थः | | १९२९. | |
| कणिका (कविता) | श्रीविमलकृष्णमतिलालः | संस्कृतकालेज् पत्रिका | १९६०. | |
| कथं मधुरम् (कविता) (केन मधुर) | श्रीविष्णुपदभट्टाचार्यः | नवमञ्जरी | १४ (श) वर्षः | |

| | | | |
|---|---|---|---|
| कर्णकुन्तीसंवादः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १५. ४, ५, ७-९. १९६० |
| कविकथा (कविता) (प्रकाश) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. |
| कामः (१) (कविता) (मदनभस्मेर पूर्वे) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. |
| कामः (२) " परे) (दृश्यतां परिणतिः) | | | |
| काव्यम् (प्रबन्धः) | श्रीरमारञ्जनमुखोपाध्यायः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ |
| कुमारसम्भवं शाकुन्तलं च (प्राचीनसाहित्य) | महामहोपाध्यायकालीपदतर्काचार्यः | सं. सा. प. प. | ४४. ६-८ पृ. १४६-१६४ |
| कृत्तिमदुर्गम् (कविता) (नकलगढ़) | श्रीफटिकलालदासः | मञ्जूषा | १२. ८. १९५८ |
| कृपणः | श्रीफटिकलालदासः | मञ्जूषा | १४. ४. १९५९ |
| गान्धार्यावेदनम् (कविता) | श्रीकाश्यपकविः (श्रीकालीपदतर्काचार्यः) | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ |
| गान्धार्या आवेदनम् - | श्रीफटिकलालदासः | संस्कृतप्रतिभा-६ | सं. रवीन्द्रम्-१९६६. पृ. ६३-९३ |
| गीताञ्जलिः (कविता) | श्रीकाश्यपकविः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ |
| | | " | ४४. नं. ६-८ पृ. १४४-१५० |
| | | " | " नं. ११ " २१०-२२२ |
| | | " | " नं. १२ " २२८-२३० |
| | | " | ४५. नं. १ " ८-१० |
| | | " | " नं. ८ " ११९-१२२ |
| | | " | " नं. ९ " १३४-१३७ |
| | | " | " नं. १० " १५२-१५४ |

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| गीताञ्जलिः (कविता) | श्रीकाश्यपकविः | सं. सा. प. प. | ४५. | नं. ११ पृ. १६६-१६९ |
| | | ,, | ४६. | नं. ३ ,, ३८-४० |
| | | ,, | ,, | नं. ४ ,, ५३-५६ |
| | | ,, | ,, | नं. १२ ,, १७७-१८० |
| | | ,, | ४७. | नं. १ ,, ६-१३ |
| | | ,, | ,, | नं. ५ ,, १०२-१११ |
| | | ,, | ,, | नं. ६ ,, १२६-१३२ |
| | | ,, | ,, | नं. ८ ,, १७७-१८२ |
| | | ,, | ,, | नं. ९ ,, २०९-२१४ |
| | | ,, | ,, | नं. १० ,, २२१-२२४ |
| | | ,, | ,, | नं. ११ ,, २५४-२५९ |
| | | ,, | ४८. | नं. ५ ,, ९७-१०१ |
| | | ,, | ,, | नं. ६ ,, १२४-१२९ |
| गीताञ्जलिः (कविता) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | पृथक् प्रकाशितः पद्यनिबन्धः |
| गीताञ्जलिः - २. (कविता) | इन्द्रमोहनचक्रवर्ती | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १०२-१०७ |
| गीताञ्जलिः - ८. (कविता) | मा. कृष्णनम्पूतिरि | ,, | ,, | पृ. १३२-१३५ |
| गीताञ्जलिः - ५. (कविता) | गणेशलक्ष्मण अमलादिः | ,, | ,, | पृ. ११४-१२३ |
| गीताञ्जलिः - ४. (कविता) | चन्द्रशेखररामचन्द्र ताम्बे | ,, | ,, | पृ. ११२-११३ |

| | | | | |
|---|---|---|---|---|
| गीताञ्जलिः - १. (कविता) | दुर्गादास गोस्वामी | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. ९४-१०१ |
| गीताञ्जलिः - ७. (कविता) | को. ल. व्यासरायशास्त्री | „ | „ | पृ. १३०-१३१ |
| गीताञ्जलिः - ३. (कविता) | शैलेन्द्रनाथ मौलिकः | „ | „ | पृ. १०८-१११ |
| गीताञ्जलिः - ६. (कविता) | उडालि सुब्बरामशास्त्री | „ | „ | पृ. १२४ - १२९ |
| जन्मकथा (कविता) | श्रीविष्णुपदभट्टाचार्यः | मञ्जूषा | १४. | ६. १९६० |
| जन्मदिवसीयम् (कविता) (पँचिशे वैशाख) | श्रीविमलकृष्णमतिलालः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| जन्मभूमिः स्वर्गादपि गरीयसी (कविता) (स्वर्गहइते विदाय) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| जयपराजयम् ( आख्यानम् ) | | मित्रगोष्ठी | ३. | कार्तिक. १९०४ |
| „ | | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १४६-१५६ |
| जीवनदैवतम् (कविता) | धीरेन्द्रनाथमुखोपाध्यायः | „ | „ | पृ. १४१-१४३ |
| तुच्छा क्षतिः (सामान्यक्षतिः) (दृश्यतां मूल्यज्ञानम्) | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | आगस्ट् |
| दीना (काङालिनी) (दृश्यतां भिक्षुकन्या) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| दुःसमयः (कविता) | श्रीविष्णुपदभट्टाचार्यः | मञ्जूषा | १५. | १. १९६० |
| „ | श्रीनलिनीकान्तकाव्यव्याकरणतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| देयादेयम् (प्रबन्धः) | श्रीफटिकलालदासः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १७२-१८१ |
| देवताग्रासः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १४. | ३. १९५९ |
| देवतानिर्वासनम् ( देवता विदाय ) | „ | „ | १३. | ५. १९५९ |

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| द्वा सुपर्णा (कविता) (दुइ पाखी) ( दृश्यतां विहगयुगलम् , द्वौ पक्षिणौ ) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| द्वि'विघा' मिता भूः (कविता) (दुइ बिघा जमि ) | ताराप्रसन्नतर्कतीर्थः | संस्कृतप्रतिभा | १.२. | पृ. २१५-२१९ |
| द्वौ पक्षिणौ (कविता) (दृश्यतां द्वा सुपर्णा, विहगयुगलम् ) | उडालि सुब्बरामशास्त्री | संस्कृतप्रतिभा | १.१. | पृ. ११० |
| धूसरगोधूलिलग्ने (कविता) | श्रीसिद्धेश्वरचट्टोपाध्यायः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| नगरलक्ष्मीः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | ११. | १-१९५६ |
| नटीपूजा ( रूपकम् ) | डा. वे. राघवः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. २५२-३०५ |
| नमस्कारः | दुर्गादासगोस्वामी | ,, | ,, | १००-१ |
| नववर्षम् (कविता) | श्रीदुर्गादासगोस्वामी | प्रणवपारिजातः | २. | ९. १९६० |
| ,, | श्रीयादवेन्द्रनाथ न्यायतर्कतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| निर्झरप्रबोधः (कविता) (निर्झरेर स्वप्नभंग) (दृश्यतां निर्झरस्य स्वप्नभंगः) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| निर्झरस्य स्वप्नभंगः (कविता) (दृश्यतां निर्झरप्रबोधः) | श्रीदुर्गादासगोस्वामी | मञ्जूषा | १२. | २. १९५७ |
| निरुद्देशयात्रा (कविता) | श्रीविष्णुपदभट्टाचार्यः | नवमञ्जरी | ११ श. वर्षः | १९५७ |
| निष्फल उपहारः | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | मे |

| | | | | |
|---|---|---|---|---|
| नैट्र् प्रत्यर्पणम् (पत्रम्) (नाइट्र प्रत्याख्यान) | श्रीविष्णुपदभट्टाचार्यः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| पतिता (कविता) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| पतिता (कविता) | श्रीफटिकलालदासः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. पृ. ५२-६२ | |
| पद्मा (कविता) | ,, | | १९२९. | |
| परममूल्यम् (कविता) | श्रीसिद्धेश्वरचट्टोपाध्यायः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| पराजयः (कविता) (मस्तकविक्रय) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| परिचिता (गद्यरचना) (चेना) | श्रीविष्णुपदभट्टाचार्यः | नवमञ्जरी | १३ श. वर्षः | |
| परिणतिः (कविता) (मदन भस्मेर पर) (दृश्यतां कामः) | श्रीप्रतापवन्द्योपाध्यायः | मञ्जूषा | १५. | १०. १९६२ |
| परिशोधः (कविता) | श्रीकाश्यपकविः | सं. सा. प. प. | ४३. | ७-१०. १९६० |
| ,, | श्रीफटिकलालदासः | सं. प्रतिमा | २.१. | पृ. १३१-१४५ |
| ,, | ,, | मञ्जूषा | ११. | ८. १९५७ |
| पादुकाविष्कारः (कविता) (जुंता आविष्कार) | श्रीसिद्धेश्वरचट्टोपाध्यायः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम् १९६६. | पृ. १८२-१८७ |
| पुत्रयज्ञः (प्रबन्धः) | श्रीकालीपदतर्काचार्यः | संस्कृतप्रतिभा-६. | ,, | पृ. १-३० |
| पुरस्कारः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | ११. | २-३. १९५६ |
| ,, | ,, | ,, | ११. | ६. १९५६ |
| पुरातनो भृत्यः (कविता) | श्रीधीरेन्द्रनाथकाव्यतीर्थः | सं. सा. प. प. | ३७. | ९. १९५४ |
| पूजार्थिनी (कविता) | श्रीधीरेन्द्रनाथकाव्यतीर्थः | संस्कृतप्रतिभा | १.१. | पृ. १०७ |
| ,, | | | | |

| विषयः | अनुवादकः | पत्रिका | वर्ष | संख्या |
| --- | --- | --- | --- | --- |
| पूजार्थिनी (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १९५४. | डिसम्बरः |
| प्रणतिनिवेदनम् (कविता) | विश्वेश्वर विद्याभूषण काव्यतीर्थः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १४५ |
| प्रतिनिधिः (कविता) | श्रीफटिकलालदासः | सं. सा. प. प. | ३८. | ६. १९५६ |
| ” | श्रीविष्णुपदभट्टाचार्याः | नवमञ्जरी | १०. | वार्षिक संख्या १९५६ |
| ” | श्रीफटिकलालदासः | मञ्जूषा | १२. | २. १९५७ |
| प्रश्नः (कविता) | दुर्गादासगोस्वामी | प्रणवपारिजातः | २. | ३. पृ. ८३-८४ |
| प्रस्तरमूर्तिः (कविता) (पाषाण-प्रतिमा) | अमरेन्द्रमोहनतर्कतीर्थ भट्टाचार्यः | | १९२९. | |
| प्रस्थानाभिशापम् (कविता) (विदाय अभिशाप) (दृश्यतां कचदेवयानी) | श्रीकालीपदतर्काचार्यः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. ३१-५० |
| प्राचीनमाख्यानम् (आख्यानम्) (एकटि पुरातन गल्प) | श्रीरामधन शास्त्री | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| प्रार्थनातीतं दानम् | श्रीफटिकलालदासः | मञ्जूषा | ११. | ५. १९५७ |
| फल्गूत्सवः (कविता) (कोरि-खेला) | श्रीफटिकलालदासः | मञ्जूषा | १३. | ४. १९५८ |
| ब्राह्मणः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १२. | ३. १९५७ |
| ” (कविता) | श्रीचन्द्रकुमारकाव्यव्याकरणतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| भारततीर्थम् (कविता) | श्रीधीरेन्द्रनाथकाव्यव्याकरणतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| ” | ” | संस्कृतप्रतिभा | १.१. | पृ. १०६ |

| | | | | |
|---|---|---|---|---|
| मारततीर्थम् (कविता) | दुर्गादासगोस्वामी | संस्कृतप्रतिभा-६. | सं० रवीन्द्रम्-१९६६. | ९९-६ |
| मारतवन्दनम् (कविता) | विश्वेश्वरविद्याभूषण काव्यतीर्थः | संस्कृतप्रतिभा-६. | ,, | पृ. १४४ |
| माषाच्छन्दसी (कविता) (भाषा ओ छन्द) | श्रीदुर्गादासगोस्वामी | मञ्जूषा | १३. | २. १९५८ |
| भिक्षुकन्या (कविता) (काङालिनी) (दृश्यतां दीना) | श्रीफटिकलालदासः | मञ्जूषा | १३. | १. १९५८ |
| मस्तकविक्रयः (दृश्यतां पराजयः) | ,, | मञ्जूषा | १९५५. | फिब्रवरि |
| मानी (कविता) | ,, | मञ्जूषा | १२. | १. १९५७ |
| मायावादः (कविता) | श्रीमधुसूदनवेदान्तशास्त्री | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| मा याहि राजन् विमुखीभवंस्त्वम् (कविता) | वसन्त पाटील् | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १३६ |
| मुक्तधारा (रूपकम्) | श्रीध्यानेशनारायणचक्रवर्ती | सं. सा. प. प. | ४४. नं. ९,१० | पृ. १९४-१९७ |
| | | ,, | ,, नं. ११ | २१२-२१४ |
| | | ,, | ,, नं. १२ | २२३-२२८ |
| | | ,, | ४५. नं. १ | १३-१६ |
| | | ,, | ,, नं. २ | २३-२५ |
| | | ,, | ,, नं. ७ | १०९-१११ |
| | | ,, | ,, नं. ८ | १२२-१२६ |
| | | ,, | ,, नं. ९ | १४२-१४४ |
| | | ,, | ,, नं. १० | १५५-१६० |
| | | ,, | ,, नं. ११ | १६९-१७६ |

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| मुक्तेरभ्युपायः (आख्यानम्) | क्षितीशचन्द्रचट्टोपाध्यायः | मञ्जूषा | ७. | २०-२२. १९५३ |
| मूल्यज्ञानम् (कविता) (सामान्यक्षति) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| मूल्यप्राप्तिः | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | जून् |
| मेघदूतम् (प्रबन्धः) | महामहोपाध्याय श्रीकालीपदतर्काचार्यः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| यज्ञेश्वरस्य यज्ञः (आख्यानम्) | क्षितीशचन्द्रचट्टोपाध्यायः | मञ्जूषा | ११. | ४. १९५६ |
| यात्रादिने | दुर्गादासगोस्वामी | सं. प्रतिमा-६ | सं. रवीन्द्रम्-१९६६ | ९८-९९ |
| रथरज्जुः (रूपकम्) (कालेर यात्रा) | श्रीविमलकृष्णमतिलालः | सं. सा. प. प. | ४३. | ८, ९. |
| | | ,, | ४३. | नं. १० पृ. १५५-१६० |
| | | ,, | ,, | नं. ११ १६९-१७६ |
| | | ,, | ,, | नं. १२ १८९-१९२ |
| | | | पृथक् पुस्तकरूपेण च-१९६२ | |
| राजविचारः | श्रीफटिकलालदासः | मञ्जूषा | | १९५७ सेप्तेम्बर् |
| राहुप्रणयः (कविता) (राहुप्रेम) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| रोत्स्यामि गमनं तव (कविता) (ये ते नाहि दिव्) | श्रीविष्णुपदभट्टाचार्यः | मञ्जूषा | १५. | ६. १९६२ |
| वङ्गमातुः शारदरूपदर्शनम् (कविता) (शरत्) | श्रीधीरेन्द्रनाथमुखोपाध्यायः | सं. सा. प. प. | रवीन्द्रसङ्ख्याप्रभृति-१९६१ | |
| वङ्गाब्दीयचतुर्दशशतकम् (कविता) (१४०० साल) | श्रीदुर्गादासगोस्वामी | सं. सा. प. प. | ४०. | ८. १९५७ |

| | | | | |
|---|---|---|---|---|
| वङ्गेषु शरत् (कविता) | धीरेन्द्रनाथमुखोपाध्यायः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १३७-१३८ |
| वञ्चिता (कविता) (गुप्तप्रेम) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| वन्दिवीरः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १२. | ५. १९५८ |
| वर्षावसानम् (कविता) (वर्षशेष) | श्रीविष्णुपदभट्टाचार्यः | मञ्जूषा | ११. | ८. १९५७ |
| वसन्तः (कविता) | श्रीदुर्गादासगोस्वामी | सं. सा. प. प. | ४०. | १०. १९५८ |
| वार्तागृहम् (रूपकम्) (डाकघर) | श्रीध्यानेशनारायण चक्रवर्ती | संस्कृतप्रतिमा-६. | सं. रवीन्द्रम्-१९६६. | पृ. २०२-२३७ |
| वाल्मीकिप्रतिमा (रूपकम्) | डा. वे. राघवः | संस्कृतप्रतिमा-६. | ,, | पृ. २३८-२५१ |
| विग्रहद्वयभूमिः (कविता) (दुई बिघा जमि) (दृश्यतामुपरि द्विविघा मिता भूः) | श्रीफटिकलालदासः | मञ्जूषा | ११. | ४. १९५६ |
| विचारकः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १२. | ७. १९५८ |
| विदायः (कविता) | श्रीविष्णुपदभट्टाचार्यः | ,, | १४. | ५. १९६० |
| विवाहः (कविता) | श्रीफटिकलालदासः | ,, | १४. | १. १९५९ |
| विसर्जनम् (कविता) | ,, | ,, | १२. | ११. १९५८ |
| विहगयुगलम् (कविता) (दुइ पाखी) (दृश्यतां द्वा सुपर्णा) | क्षितीश चन्द्रचट्टोपाध्यायः | सं. सा. प. प. | ४२. | १२. १९६० |

| विषयः | अनुवादकः | पत्रिका | वर्षः | संख्या |
|---|---|---|---|---|
| वृष्टिर्निपतति ढापू-दुपूकारकम् (कविता) (वृष्टि पडे डापुर दुपुर) | श्रीकाश्यपकविः | सं. सा. प. प. | ४५. | ३-१९६२ |
| व्यर्थसाधनम् (कविता) (परशपाथर) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| व्यवधानम् ( आख्यानम् ) | श्रीशिवशङ्करशास्त्री | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| शकुन्तला (प्रबन्धः) | क्षितीशचन्द्रचट्टोपाध्यायः | मञ्जूषा | १३. | १, ५. १९५८ |
| शैशवम् (Crescent Moon) | के. टि. पाण्डुरंगी | संस्कृतप्रतिभा | २. | १, पृ. १४६ |
| श्रेष्ठभिक्षा | श्रीफटिकलालदासः | मञ्जूषा | १९५५. | अक्टोबर् |
| ,, | इन्दुरायः | मधुरवाणी | १९६५. | जूलै पृ. ५-६ |
| सत्यरक्षा (कविता) (पणरक्षा) | श्रीफटिकलालदासः | मञ्जूषा | १३. | ९. १९५९ |
| समाप्तिः ( आख्यानम् ) | क्षितीशचन्द्रचट्टोपाध्यायः | मञ्जूषा | १५. | ४, ५. १९६० |
| साहित्यस्य मानम् (प्रबन्धः) | श्रीसिद्धेश्वरपञ्चतीर्थः | सं. सा. प. प. | रवीन्द्रसंख्याप्रभृति-१९६१ | |
| सूक्ष्मविचारः ( रूपकम् ) | श्रीकालीकुमारदत्तशास्त्री | ,, | ,, | |
| स्पर्शमणिः (कविता) | धीरेन्द्रनाथमुखोपाध्यायः | संस्कृतप्रतिभा-६. | सं. रवीन्द्रम्-१९६६. | पृ. १३९-१४० |
| ,, | श्रीफटिकलालदासः | मञ्जूषा | १९५४. | नवम्बर् |
| ,, | अमरेन्द्रमोहनतर्कतीर्थः | | १९२९. | |
| स्पर्शशिला (कविता) (परश पाथर) | श्रीफटिकलालदासः | मञ्जूषा | १३. | ८. १९५९ |

| | | | | |
|---|---|---|---|---|
| स्मृतिमन्दिरम् (कविता) (शाहजाहान) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| स्वप्नः (कविता) | श्री दुर्गादासगोस्वामी | मञ्जूषा | १२. | १०. १९५८ |
| स्वर्गजा (Gardener 59) | वसन्त पाटील | संस्कृतप्रतिभा | २. १. | पृ. १४७ |
| स्वर्गाद् विसर्जनम् | श्री दुर्गादासगोस्वामी | प्रणवपारिजातः | ५. | १०. पृ. २४५-२५१ |
| स्वर्णतरी (कविता) (सोनार तरी) | श्रीप्रतापबन्द्योपाध्यायः | संस्कृतकालेज पत्रिका | | |
| ,, | श्री इन्द्रमोहन चक्रवर्ती | सं. सा. प. प. | ४४. | १२. १९६२ |
| स्वर्णमृगः (प्रबन्धः) | क्षितीशचन्द्र चट्टोपाध्यायः | संस्कृतप्रतिभा-६. | सं. रवीद्रन्म्-१९६६. | पृ. १५७-१७१ |
| स्वामिलाभः (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १२. | ४. १९५७ |
| हिमालयः (कविता) | अमरेन्द्रमोहनतर्कतीर्थभट्टाचार्यः | | १९२९. | |
| हिं टिं छट् (राजस्वप्नः) (कविता) | श्रीफटिकलालदासः | मञ्जूषा | १३. | ६. १९५९ |

## पृथक् पुस्तकरूपेण प्रकाशिता अनुवादाः

| विषयः | अनुवादकः | प्रातिस्थानम् |
|---|---|---|
| गीताञ्जलिः | पुल्लेल श्रीरामचन्द्रः | पुल्लेल श्रीरामचन्द्रुडु, संस्कृतोपन्यासकः, आर्ट्स् अण्ड् सैन्स्कालेज्, वरंगल. आं. प्रं. |
| गीताञ्जलिः (गीताञ्जलि - संस्कृतम्) | श्री कामिनीकुमार अधिकारी | श्री चिन्मय अधिकारी, (शिलचर), राङ्गीरखारी, आसाम. |
| मुक्तधारा | श्रीध्यानेशनारायणचक्रवर्ती | संस्कृत पुस्तक भण्डार, ३८, संख्यक विधान सरणि, कलिकाता-६. |
| रथरज्जुः | श्रीविमलकृष्णमतिलालः | बि. कृ. मतिलालः, टेयूनगर, २४ पर्गान, प. व. |

## रवीन्द्रविषयका निबन्धाः

| | | | |
|---|---|---|---|
| रवीन्द्रवन्दनम् | चिन्तामणि द्वारकानाथ देशमुखः | गुरुकुलपत्रिका | १७. ६ - पृ. ३२३ - ३२४ |
| रवीन्द्ररचनासु चिरन्तनभारतम् | षट्‌कनाथभट्टाचार्यः | सं. सा. प. प. | ४७. २ - पृ. २५ - ४२ |
| रवीन्द्रप्रतिभा | श्रीसुधांशुदेवशर्मा | संस्कृत बुक् डिपो. | २८/१, कर्णवालिश स्ट्रीट, कलकत्ता-६. |
| रवीन्द्रः संस्कृतं च | डा. वे. राघवः | सं. प्रतिमा-६. | सं. रवीन्द्रम्-१९६६ ३०५ - ८ |

## शुद्धिपत्रिका

| पृष्ठे | पङ्क्तौ | शुद्धिः |
|---|---|---|
| 5 | 23 | प्रणयिनीस्वहस्ता- |
| 14 | 13 | कम्पिता |
| 18 | 3 | धारयन्महा- |
| 54 | 24 | बद्ध्वा |
| 71 | 26 | त्वं, धृत्वा |
| 86 | 15 | -समाह्वयस्य |
| 88 | 11 | -कुण्ड- |
| 147 | 18 | मिश्रितं |
| | 26 | तस्य |
| 155 | 13 | महीपतयो |
| 158 | 23 | -ऽश्रुधारा |
| 164 | 16 | नावमेकां |
| 167 | 11 | गन्तव्यं |
| | 12 | निर्णेतुं |
| 170 | 6 | प्राङ्गणस्थे |
| 174 | 7 | साश्रु- |
| | 19 | विक्रेतुं |
| 177 | 13 | पूजाङ्गणे |
| 184 | 14 | दृष्टि- |
| 210 | 1 | कक्षमहं |
| 222 | 10 | तत्रैव |
| 226 | 14 | प्रचलत्येव |
| 236 | 9 | भवतु |

| | | |
|---|---|---|
| 246 | 24 | गन्तव्यं |
| 251 | 17 | जाह्नवी |
| 258 | 10 | तन्त्रीकाः |
| 281 | 17 | संभूतः |
| 300 | 6 | जनान्तिकमाहूय |

M.R

'संस्कृत-रवीन्द्रं' नामेदं रवीन्द्रनाथाय तज्जन्मशताब्द्यां संस्कृत-अकादमी-परिषदा समर्पितः संस्कृतमय उपहारः। रवीन्द्र-कृतयः बह्वीषु भारतीयभाषासु अनूदिताः, परन्तु नेदं तथा सुविदितं यत् यस्यां भाषायां वाल्मीकि-कालिदास-जयदेवाः कवयो बभूवुः तस्यां भाषायां बहवो रवीन्द्रानुवादाः प्रादुर्भूता इति।

'संस्कृत-रवीन्द्रे' गद्य-पद्य-रूपक-विचारात्मक-लेखरूपाद् बहुरूपात् रवीन्द्र-साहित्यात् केषाञ्चित् संस्कृतानुवादाः उपह्रियन्ते। एतेष्वनुवादेषु केचन पूर्वमेव कृताः प्रकाशितचराश्च, केचिच्च शताब्द्युत्सवावसरे नूतनतया कृताः अत्रेदंप्रथमतया प्रकाश्यमानाश्च।

अनेन 'संस्कृत-रवीन्द्रेण' न केवलमद्यत्वे प्रतायमानस्या-[illegible]निकसंस्कृतवाङ्मयस्य परिपोषः, परंतु योऽसौ संस्कृतलोकः [illegible]स्कृतमात्रविश्रान्तसाहित्यास्वादो निखिलेऽपि भारते वर्तते, [illegible]स्य रवीन्द्रसाहित्यानुशीलनाय प्रवेशभूतश्च भविष्यति।